कृतकृत्यं तु संज्ञात्वा ज्ञानतत्वं [1]विमृश्य च । संसारभयभीरूणामवश्यं सततं त्वया॥ ४२
योजना च परे तत्त्वे कर्तव्या संपरीक्ष्य च । पात्रस्थमात्मज्ञानं च कृत्वा पिण्डं समुत्सृजेत् ॥
नान्तर्धानं [2]यतो याति जगद्बीजमबीजकृत् । पावनं परमं ज्ञानमज्ञानतिमिरापहम् ॥ ४४

**पौष्कर उवाच—**

[3]कालेन . . यागादिदीक्षया । भीरूणामप्रबुद्धानां जिनस्यानव्यवस्थिते ॥ ४५
यद्यन्तरा विपद्यन्ते किं स्यात्तेषां तदुच्यते । असमाप्तक्रियाणां च त्वलब्धज्ञानिनां विभो ॥४६

**श्रीभगवानुवाच—**

फलं संकल्पपूर्वं स्याद्विद्धि तीव्रतरं नृणाम् । क्रियानिर्वहणात्तात संकल्पोऽसाधितस्य च॥ ४७
यदैवालङ्कृता बुद्धिर्नागतल्पेऽर्पयाम्यहम् । भवाम्भोधिमपारं च आश्रमी परमं पदम् ॥ ४८
तदेव साधितं तेन शाश्वतं पदमव्ययम् । सिद्धश्च सिध्यमानश्च तृतीयश्चाम्रक्षक. ॥ ४९
समत्वमेषां वै विद्धि किञ्चित्कालान्तरेण तु । यथैकस्मिन्दिने तृप्तः पूर्वार्धे सिद्धभोजनः ॥५०
अन्यश्च विद्ध्यनाहारो वेला तस्यैन्द्र वर्तते । अवसानेषु सर्वेषामतृप्तिर्नोगुणस्मृतः ॥ ५१
एवं मन्त्रक्रियायोगे भक्तानां कमलोद्भव । कालेन [4]स्वमते शास्त्र ? द्वे तस्मिन्नव्यये पदे ॥ ५२
भक्तिश्रद्धासमेतानां नृणां मन्त्रपरिग्रहः । संसारोत्तारकश्शश्वद्यथा [5]वै तत्त्वविद्द्विजः ॥ ५३
मतिनिष्ठा प्रमेयं च विकल्पैरप्यनावृतम् । लब्धस्समाधिनिष्ठेभ्यस्सकाशाज्जन्मना सह ॥ ५४

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां
शिष्यपरीक्षालक्षणो नाम
प्रथमोऽध्यायः

# अथ द्वितीयोऽध्यायः

**पौष्कर उवाच—**

भगवन् मण्डलानां च लक्षणं प्रब्रवीहि मे । एषामुक्तस्त्वनन्तस्तु प्रवासं च स्वयं च यः ॥ १

**श्रीभगवानुवाच—**

पुण्यदेशं समासाद्य प्रसिद्धं सिद्धसेवितम् । तत्रानेकप्रकाराणि स्थानानि कमलोद्भव ॥ २

---

१. क–ग—विमृज्य च २. ख—यथा याति
३. क–ग—कालेनाभ्यनन्वच्छयोक्तोयागादि ख—कालेनाभ्यन्वगच्छध्वं युक्तोयागादि
४. स्वमतेशास्ति द्वे ५. क–ग—वै ततत्वद्विजः

धान्याश्रितमहीभागे लक्षणे सुपरीक्षिते । प्रवर्तन्ते च यागानि तानि ते कथयाम्यहम् ॥ ३
पर्वताग्रे च तन्मध्ये सानुदेशे [1]द्विजोचिते । भूगते तु वने रम्ये पादपौपधिसङ्कुले ॥ ४
भद्रे चोपवने[2] ह्यद्य[2] प्रशस्ते कमलान्विते । कूलेषु निम्नगानां तु तासामपि च सङ्गमे ॥ ५
समीपे पुण्यतीर्थानां सुस्थिरे [3]सारसाकुले । देवतायतनोद्देशे गोष्ठेषु ब्राह्मणाश्रमे ॥ ६
दुष्टप्राणिविनिर्मुक्ते चोरातङ्क [4]भयादिके । तत्र भूमिं परीक्ष्यादौ [5]लक्षणाढ्यां [6]सुलक्षिताम् ॥
देवानामालयार्थं तु ग्रामार्थं ब्राह्मणादिषु । यजनार्थं तु यागानां गृहार्थं गृहमेधिनाम् ॥ ८
धराधरवशो[2] ह्यावे[2] विना ब्रह्मन् गुणागुणाः । सन्ति भूमेस्समासेन तन्मे निगदतश्शृणु ॥ ९
यस्मात् क्ष्मा दोषनिर्मुक्ता करोत्यर्थक्रियां सदा । सा तु दोषवती भूमिर्विघ्नानुत्पादयेद्बहून् ॥
प्रभावादस्त्रमन्त्राणां पिशाचैस्त्यज्यतेऽब्जज । या प्रशस्तद्रुमोपेता फलपुष्पसमाकुला ॥ ११
स्निग्धशष्पसमाकीर्णा संयुक्ता मृदुभिस्तृणैः । सुस्पर्शा स्निग्धवर्णा या च गन्धाढ्या मधुरासिता ॥
अनूषरा ह्यदग्धा च पावकोल्काकैरशिमिभिः । दुर्गन्धाद्यैर्महादोषैर्निर्मुक्ता सुखशान्तिदा ॥ १३
दुष्टजन्तुविनिर्मुक्ता सेविता सत्यतत्रिभिः । यत्र [7]राजन्ति वै गावस्तथाऽन्ये मृगजातयः ॥ १४
यत्र मोदन्ति वै व्याघ्रकुञ्जरास्सह मानवैः । जनयत्याशु चाह्लादं स्वकान्तास्विव दर्शनम् ॥ १५
सर्वेषां सर्वदा सा भूरशुभदा चार्चनादिषु । कुमुदोत्पलकह्लारैराकुला सारसादिभिः ॥ १६
पूर्वे सरोवरं यस्या ह्यपरे आम्रकाननम् । महच्छरवणं वामे शस्तो दक्षिणतो नगः ॥ १७
समैकवर्णा सर्पाद्यैर्निर्मुक्ता चापि शस्यते । वापीकूपादिकं स्वातमीशाने यस्य चोत्तरे ॥ १८
शुभलक्षणयुक्ता सा सर्वसिद्धिकरी मही । शीतरश्मिसमस्पर्शा निदाघे तु शुभावनी ॥ १९
अत्युष्णा या च हेमन्ते रमान्वा[2] जलदागमे । [8]कांस्यभाण्डस्वना घण्टा वीणावंशरवाश्शुभाः ॥
मृदङ्गदुन्दुभिरवा सर्वकामफलप्रदा । समाधे वा समं खात्वा पांसुमुद्धृत्य पूरयेत् ॥ २१
अधिकेन भवेच्छ्रेष्ठा मध्यमा स्यात् समेन तु । अपूर्णामधमां विद्धि दुरितां तां परित्यजेत् ॥
त्रिपञ्चसप्तरात्रेण यस्यां बीजं प्ररोहति । प्रधाना मध्यमा न्यूना सा मही परिकीर्तिता ॥ २३
प्रागुत्तरप्लवा शस्ता सदैशानप्लवा द्विज । कूर्मपृष्ठोन्नता योग्या सुशुभा दर्पणोदरा ॥ २४
शङ्खचक्रगदापद्मश्रीवत्सगरुडाकृतिः । मालामुकुटरूपा च सर्वसिद्धिकरी मही ॥ २५
अतोऽन्या विपरीता च साऽनिष्टफलदा सदा । दूरतः परिहर्तव्या सिद्धिहानिकरी यतः ॥ २६
उक्तलक्षणसंयुक्ता यदि न प्राप्यते मही । स्वीकृत्य सर्वसामान्यां पूज्य मन्त्रांस्तु[2] तैर्यजेत् ॥
तत्रैवास्तूत्तमं[2] सम्यक् संख्याहीनं च होमयेत् । निराज्ये बहुनाऽऽज्येन मध्यदेशे यथास्थिते ॥

---

१. ख—विभाजिते २. ह्यद्य ? ३. क-ग—सारसङ्कुले
४. भयोज्झिते इति चेत् साधु ५. ग—लक्षणार्थां ६. ख—सुरक्षिताम्
७. रज्यन्ति इति स्यात् किम् ८. ख—कांस्यभाण्डरवावापि वीणावंशरवाश्शुभाः

वृक्षं वै सोत्थितं[2] चैत्यकुड्यप्रासादजं तथा । त्यक्त्वा तु द्विगुणात्मानं [1]भायामिऽमनि गर्भवत् ? ॥
शुभेऽनुकूलेऽथ दिने कुर्याद्भूमिपरिग्रहम् । आहेमितेन मांसेन सक्तुना सोदकेन तु ॥ ३०
फलपुष्पसमेतेन तैलक्षारान्वितेन च । स्विन्नै संस्पर्शसङ्ग्रहेन दधिक्षीरगुळेन च ॥ ३१
रजनीचूर्णयुक्तेन शाड्वलेन तिलेन च । दिग्विदिक्षु तथा मध्ये त्विदमुक्त्वा बलिं क्षिपेत् ॥ ३२
येषां वै क्रूरसत्त्वानामयं भूभाग आश्रयः । ते प्रयच्छन्तु मे तुष्टिं प्रयान्तु परमालयम् ॥ ३३
ध्यात्वाऽस्त्रसदृशं देहमस्त्रमन्त्रेण चोज्ज्वलम् । भूतान्याज्ञापयेत् पश्चात् तोयान्तां निखनेन्महीम् ॥
नरोच्छ्रेयं[3] समो वाऽथ शमनेकेन वीथिकाम् । सुशुद्धासु समाहृत्य गन्धाढ्यांश्चिदसंयुता[4] ॥ ३५
तथा संपूर्य तद्गर्तमाठकाप्रहरे[5] महीम् । पश्चात् संमस्तृणैर्व्रीहिपूर्णां पादपपल्लवैः ॥ ३६
कृत्वा संवासयेत् तत्र गोगणं तु दिनत्रयम् । शोधयित्वा चतुर्थेऽह्नि लाङ्गलैः परिवर्तिताम् ॥
प्रदीप्तेनेष्टकेनाथ स्पर्शनीया च सर्वशः । तत काञ्चनजं रौप्यं ... जं तारजं तथा ॥ ३८
रत्नजं गन्धमाल्याढ्यं सस्यशालिफलान्वितम् । सपुष्पाक्षत[1]लाजाढ्यं सिद्धार्थैश्च तिलैर्युतम् ॥ ३९
श्रीकरं पञ्चगव्येन भूमौ सर्वत्र वापयेत् । पङ्क्तौ वा कृते खाते शुद्धिमेति च तत्क्षणात् ॥ ४०
[4]यस्यां सस्यादिकं सम्यग्यत्र कुत्र समाचरेत् । शुद्ध्यर्थं मङ्गलार्थं च स्थानशुद्ध्यर्थमेव च ॥ ४१
दृष्टादृष्टफलार्थं तु यागयज्ञादियाजिनाम् । ततस्समीकृत्य यदा स्यात्प्रागुदक्प्लवात् ॥ ४२
.... . [5]भूपेत्तोय प्रसरं तच्च दिग्द्वयोः । पृथुभिर्मुसलैर्भूय पीड्यं सद्यज्ञकाष्ठजैः ॥ ४३
वर्पजस्पर्शसदृशीं कृत्वा मृद्गोमयाम्बुना । उपलिप्यानुसंमार्ज्य पाणिना वाऽथ वाससा ॥ ४४
शुभे वारेऽनुकूलेऽथ दिग्विदिक्[6]सिद्धिमाचरेत् ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां

भूपरीक्षालक्षणो नाम

द्वितीयोऽध्यायः

# अथ तृतीयोऽध्यायः

**पौष्कर उवाच—**

दिक्सिद्धिलक्षणं नाम कथयस्व यथास्थिति । हितार्थं सर्वलोकानां ममापि च विशेषतः ॥ १

**श्रीभगवानुवाच—**

एकस्मिन् द्विज भूभागे श्लक्ष्णे पूर्वोत्तरप्लवे । पूर्वापरं परिज्ञेयं प्रसिद्ध्या लक्षणेन वा ॥ २

---

१. ख—छाया  २. क—ताम्रतामुरयापि ग—ताम्रतायुरयचापि
३. क-ग—जालाढ्य  ४. क—यस्या तस्मादित
५. क— ... भूपत्तोय ग—मृतयावनुभूपेत्तोयम्  ६. क-ग—सिद्धमाचरेत्

देवालयमहास्तम्भरथ्यासंस्थासु भित्तिषु । सकाशात् साधनीयं यत् प्रसिद्धं पूर्वजं तु वा ॥ ३
सूर्यशङ्कुसमायो[1]गायत्नतः पूर्वपश्चिमम् । विज्ञेयं लक्षणार्थं तु मध्यं वै सर्वसाधनम् ॥ ४
तच्च ते प्रकटं [2]वच्मि यत्र यत्र स्थितो [3]यथा । निरावरणभूभागे कुर्याद्यागगृहादिकम् ॥ ५
हेमादिधातुजां कुर्याच्छलाकां चतुरङ्गुलाम् । यावद्‌द्वादशमानोत्थामुभयेनेहुषाननाम् ॥ ६
त्यक्त्वा यद्वाऽथ मानं तु त्रिभागं वा तदन्ततः । [4]वेधयामुपलाकारं कुर्यादेकत्र [5]चोभयोः ॥ ७
[6]सीतानीतदृढं सूत्रं कोणमाद्यन्तयोजयेत्[7] । ज्ञात्वा तु विघनं व्योम शङ्कुर्वैषुवनेऽहनि ॥ ८
कनिष्ठाङ्गुलवद्वृत्तं प्रशस्तं दृढदारुजम् । सुतीक्ष्णधातुजं वाऽथ षोडशाङ्गुलमुच्छ्रितम् ॥ ९
द्वादशाङ्गुलमाभूमावारोप्य द्वादशोर्ध्वगम् । सशलाकं तु तत् सूत्रं [7]शङ्कुमूलावधौ न्यसेत् ॥ १०
मेखलाबन्धयुक्त्या वै [8]तल्लग्नं भाति पौष्कर । ततस्तत्तानयेत्? सूत्रं समार्धं तु समं तु वा ॥ ११
भूमिं शलाकया कुर्यात् तेन सूत्रेण सर्वदिक् । समं समेन हस्तेन सूक्ष्मं साकेतलक्षणम् ॥ १२
तां च वै [9]शाङ्कवीं छायां तद्वृत्तपरिधौ द्विज । लक्षयेत् प्रविशन्ती च यत्र तत्राङ्कमुल्लिखेत् ॥ १३
पश्चिमे द्विज दिग्भागे प्राग्भागे [10]त्वेवमेव हि । तद्वाह्यक्रममाणान्तं त्वेव वृद्धिं यदा व्रजेत् ॥ १४
यस्मिन् देशे दिवारात्रं नित्यमेव समं द्विज । तस्मात् पूर्वापरं तत्र न चान्यत्र तु तद्भवेत् ॥ १५
समं यत्र दिवारात्रमेकस्मिन् वैषुवे दिने । तत्रानेन विशेषेण ज्ञातव्यं पूर्वपश्चिमम् ॥ १६
[11]रवेर्विषुवती काष्ठा दक्षिणादुत्तरं गता । तस्यां पूर्वापरौ भागौ विज्ञेयौ छायया द्विज ॥ १७
तथा पश्चिमभागस्थं देशं प्राग्भागगं तु वा । तस्यामभ्यन्तरस्थं वा लक्षणीयं प्रयत्नतः ॥ १८
[12]तद्वाशां पूर्वदिग्भागं भगयं[?] तु विशङ्कया । स्वे स्वे देशे प्रथारूपं तथा देशान्तरेषु च ॥ १९
उन्नतेष्वथ निम्नेषु मध्यादूरस्थितेषु च । ज्ञापकं दिनरात्रिभ्यां षष्ठमंशं प्रकल्प्य च ॥ २०
कयत्रमपि[?] संवादि तत्प्रभाने नियोजयेत् । एकस्मिन् [13]त्रपसंकाले? काले तु विघनाम्बरे ॥ २१
[14]नाशिध्येया प्रणीता च मध्याह्नाद्यदि जायते । पूर्वापराभ्यां मन्धिस्थं तं देशं विद्धि सर्वदा ॥
अर्धं पूर्णं तु मध्याह्ने यदि तादृग्विधाय वै । तथाविधा च दृश्यन्ते [15]शाङ्कर्वा ॥ २३
.... ... . छायाभागं चतुर्विधम् । पूर्वभागाधिके देशं विधेयं तेन गृह्यते ॥ २४
मेषे माध्याह्निकी छाया विज्ञेयाऽष्टाङ्गुला तथा । संयुक्ता द्व्यङ्गुला षड्भिर्वृषे पञ्चाङ्गुला भवेत् ॥

---

१. क-ग—गायत्तवोत्पूर्व २. क—पश्य ग—पश्चि ३. ख—यदा
४. ख—बेधाया ५. ख—वेग्योः ६. ख—सितानित
७. क—शङ्कुमूला ... न्यसेत् ग—शङ्कुमूलावधौ न्यसेत् ८. क—लग्नं भवति
९. क—शङ्करीयां च ग—शङ्करीया चाया १०. क-ग—त्वेकमेवहि
११. क-ख-ग-अत्र १२. ख-तद्वादिशा पूर्वदिग ग-तद्वाशां पूर्वदिग्भागयन्तु विसत्रिशङ्कया
१३. ख—नृपसं १४. ख—राशिध्येया १५. ख—शाङ्कवीयभागर्वा:

चतुर्भिरङ्गुलैरूना मिथुने त्र्यङ्गुला भवेत् । दशैकद्व्यङ्गुलैर्भूयाद्व्यङ्गुली कर्कटे[1] . . . ॥ २६
सिंहे मिथुनवद्विद्धि कन्यायां वृषवद्भवेत् । तुले तु मेषसदृशी वृश्चिके द्वादशाङ्गुला ॥ २७
अष्टाविंशतिभिर्युक्तद्व्यङ्गुलैर्धनुषि शृणु । अष्टादशाङ्गुला विप्र द्व्यङ्गुलैर्दशभिर्विना ॥ २८
त्रिंशद्भिर्व्यङ्गुलैरूना विंशत्यङ्गुलका झषे । कुम्भे कार्मुकतुल्या स्यान्मीने स्याद्वृश्चिके यथा ॥ २९
शङ्कोर्द्वादशभागं यद्विज्ञातव्यं तदङ्गुलम् । तस्य यत् षष्ठमं भागं बोद्धव्यं व्यङ्गुलं तु तत् ॥ ३०
एवं भूमण्डले ह्यस्मिन् [2]ह्यादावेव द्विजोत्तम । मध्यमं पश्चिमं पूर्वं ज्ञात्वा देशं यथास्थितम् ॥ ३१
स्वस्वदेशे यथा पश्चात् प्राग्दिग्भागे तु लक्षयेत् । शङ्कुं च पूर्ववत् कृत्वा तद्वदुल्लिख्य मण्डलम् ॥
प्रत्यग्भागं [3]तथैशान्यं वृत्तक्षेत्रं तु पौष्कर । तस्यैव मध्यदेशं तु मध्याह्नच्छायया द्विज ॥ ३३
सञ्चिन्त्य पूर्ववत् प्राची ततस्सूत्रं प्रसार्य च । पूर्वापराभ्यां सूत्राभ्यां कृत्वा कमलसम्भव ॥ ३४
त्यक्त्वा तत्सूत्रनिकटाद्दिग्द्वयात् पूर्वपश्चिमात् । मानं मध्यदिनच्छाया दिव्यं चेत् दिक्समाश्रयम् ॥
व्यक्तमङ्कद्वयं कुर्यात् तद्वृत्तोपगमान्तरे । ततः कमलसम्भूत पुरादीनां च साधयेत् ॥ ३६
पूर्वपश्चिम[4]मध्यस्थं नानाव्यङ्गमदक्षिपेत् । सूनं पूर्वापराभ्यां तु देशान्तरवशे सति ॥ ३७
संसाध्यं तेन सूत्रेण पश्चाद्धि दक्षिणोत्तरम् । प्राग्गतं वृत्तमध्ये यत् तत् सूत्रं परिमार्ज्य च ॥ ३८
यद्यपि स्यात् तदाकारं तत्सूत्रं च तथा बहिः । तस्य देशस्य तत्पूर्वं [5]तत्सूत्र . ॥ ३९
सूर्योदयदिने वृत्तं तत्तन्मध्य[6]मवेक्षया । क्षिप्रमेव तु कालेन ज्ञातुमिच्छति वा यदि ॥ ४०
यथावत् पूर्वदिग्भागमसन्दिग्धतयाऽपि वा । अनेन विधिना नूनं सदेवाम्बुरुहासन ॥ ४१
सुसूक्ष्मे बहुभिर्व्यक्तैर्लेखैश्चैव निरन्तरे । प्राक्प्रमाणेन संपूर्य क्ष्मातलं बाह्यतः क्रमात् ॥ ४२
[7]यावच्च क्ष्मावमानं च तथा छाया निरीक्षयेत् । [8]प्रविशन्ति च लेखानामुद्दिश्यैव यथा ततः ॥
यावता सा [9]पुनः . . । यस्मिंस्तु परिलेखा [10]भूर्वसत्या दीर्घमेव च ॥ ४४
तत् स्थानं चिह्नयेद्व्यक्तं वीथीनामुत्तरां दिशम् । समुत्पाट्य ततश्शङ्कुं न चलत्यवनी यथा ॥ ४५
ततश्शङ्कुकृताङ्कस्य उदग्दिक्संस्थितस्य च । शङ्कुमूलस्थितस्यापि चिह्नस्य कमलोद्भव ॥ ४६
[11]दीर्घं प्रसार्य वै सूत्रं सुधालिप्तं तु चोपरि । दक्षिणोत्तरसञ्ज्ञा तु तस्मात् पूर्वापरं तु वा ॥ ४७
परिज्ञेयः प्रयततः प्रासादादिषु साधने ॥

---

१. ख—वद २. ख—ह्यादावेषा ३. ख-ग—तथा शक्य
४. ख—महनामत्यय ५. क-ख-ग—तत्सूत्र येति चेति च
६. ख—मपेक्षया ७. क-ग—यावच्च .... वमान
८. क—प्रविशस्त .... लेखा ग—... प्रविशस्त च
९. क-ख-ग—पुनैस्यामित्य(त्रि)च्छायापरके परिकै रपि
१०. क—सात्मत्स्वस्त्या ११. ख—दिव्यं

**पौष्कर उवाच-**

ज्ञातुमिच्छाम्यहं नाथ यदेतत् कथितं त्वया । पूर्वापरादुदग्याम्यं तस्मात् पूर्वापरं तु वा ॥ ४८

**श्रीभगवानुवाच—**

शङ्कुसूत्रं द्विधा भङ्क्त्वा मध्ये चिह्नं भवेत् स्फुटम् । कृत्वा सूत्रं तु तत्रैव निरुद्ध्यन्नैकवर्णिना ॥ ४९

तेनेच्छादन[?] सूत्रेण द्वितीयेन करेण तु । तच्चक्रकृद्भ्रमं सूत्रं चिह्नयेद्दिग्द्वयाद्द्विज ॥ ५०

तम्यामन्तस्तु दीर्घेण तयोस्संस्थेन तन्तुना । पाणिद्वयेन चैकैकं लाञ्छयेद्दक्षिणोत्तरम् ॥ ५१

... ... पूर्वापरं लाञ्छयेद्दक्षिणोत्तरम् । यथा वज्राग्रवद्विप्र भवेद्भ्रूयुगलाकृति ॥ ५२

तन्मध्यपतितं सूत्रं क्षेप्तव्यं [1]रुचितं यतम् । जायते मध्यमात्रं तु दिक्चतुष्कस्य पौष्कर ॥ ५३

मानेनाभिमतेनाथ चतुरश्रं तु साधयेत् । वेश्ममण्डलपद्मादि [2]साधके जनकं तु यत् ॥ ५४

मध्यस्थितेन सूत्रेण दिक्सूत्रेणाङ्कयेत् पुनः । [3]ततो दिक्संख्यचिह्नानां सूत्रमानं [4]निधाय तु ॥

दिक्षु चैवान्तरालानि लाञ्छ्य पूर्वोक्तलाञ्छनैः । ततस्सूत्रचतुष्कं तु चिह्नाच्चिह्नगतं क्षिपेत् ॥ ५६

चतुरश्रं भवेत् क्षेत्रं सन्दिग्धस्य महामुने । सूत्रापर[5]परागेव खिष्टिनिर्माणसिद्धये ॥ ५७

पूजनीयश्च विधिवत् पुरुषो वाऽथ संस्थितः । छायोत्थो यः पुनर्विप्र विश्वरूपस्य वै विभोः ॥

सर्वदिक्षु समैर्भागैर्नवधा संविभज्य च । सूत्रैस्सुधावलिप्तैश्च यागागारवगुन्धराम् ॥ ५९

एकाशीतिपदोपेतां कृत्वैवं तां प्रयत्नतः । [6]प्रत्येकस्मि कुर्यात् तत्तुर्यांशेन चाम्बुजम् ॥ ६०

दलाष्टकयुगं चैव कर्णिकाकेसरान्वितम् । अग्नीशरक्षोवायव्यबहिःकोणपदेषु च ॥ ६१

चतुष्टयं यत् पद्मानां केवलं तच्चतुर्दलम् । ईशानपदपद्मात्तु समारभ्य प्रपूजयेत् ॥ ६२

बाह्यपङ्क्तिषु पद्मेषु क्रमाद्देवान् सुरानृषीन् । वृषाङ्कपदपद्मे तु ब्रह्माणं कर्णिकान्तरे ॥ ६३

ईश्वरं तपनं चैव दितिं चैव तथाऽदितिम् । पूर्वपत्रं समारभ्य विन्यसेद्यावदुत्तरम् ॥ ६४

एवं तस्मिन् पदाब्जे तु पूजयित्वा तु पञ्चकम् । यष्टव्यं च ततस्सम्यग्विबुधानां च सप्तकम् ॥

क्रमात् सप्तपदस्थानां पद्मानां कर्णिकोपरि । [7] . . ख्यं चापवत्सं च जयेन्द्रो[8]समशीयकः ? ॥

रविस्सत्यात्मदेवौ च ततो वह्निपदाम्बुजे । भृयः पितामहं मध्ये पूर्वपत्रे न्यसेद्भृशम् ॥ ६७

गगनं हि विभुं पूषा दक्षिणे पश्चिमोत्तरे । इष्ट्वैवं कोणपद्मेषु पत्रस्थं च चतुष्टयम् ॥ ६८

यजेद्राक्षसकोणान्तमम्बुजेऽथ सप्तकम । सवितारव्यं च सावित्रं [9]स्वस्ययं च ग्रहक्षमम् ॥ ६९

विवस्वान् धर्मदेवस्तु गन्धर्वाधिपतिस्स्मृतः । पद्मे नैर्ऋतकोणस्थे भृयो ब्रह्माणमन्तरे ॥ ७०

---

१. ख—रुचिर २. ख—साध्यते ३. ख—त तादृक्

४. ख.—निधाय च ५. ख—परागे च

६. क-ग—प्रत्येकस्मिन्वते ख-प्रत्येकस्मिन्यते ७. ख—प्रयुवाख्यथवत्सं

८. ख—समरीयकः ९. क-ग—स्वस्यन्य ... ग्रह

भृङ्गाख्यो भृङ्गराट् चैव ततः पितृगणाधिपः । देवौ [1]द्वापरिकाख्याश्च [2]प्राक्पत्राष्टचतुष्टयम् ॥
[3]ततोऽष्टपद्मपत्रेषु देवतासप्तकं क्रमात् । कर्णिकान्तर्गतं न्यस्य यावद्वायुपदावधि ॥ ७२
इन्द्रश्चेन्द्रपदाख्यश्च [4]सुग्रीवं कुसुमद्विज । मित्राख्यो वरुणश्चैव त्वं सुराधिपतिः पुनः ॥ ७३
वायव्यपदपद्मे तु मध्ये चैव प्रजापतिम् । प्राक्पूर्वादिषु [5]पद्मेषु शेषश्चाधर्म एव च ॥ ७४
यन्मयाधिपतिश्चैव नागेन्द्रस्तदनन्तरम् । सप्तकं देवतानां च पूर्ववत् पूजयेत्ततः ॥ ७५
पूर्वाख्यो रुद्रदासश्च [6]मुख्यो भल्लकसोमकौ । धाराधरश्च मन्मज्ञा इत्येते देवतागणाः ॥ ७६
पूजयित्वा ततः पश्चादेकैकस्मिंस्तु पङ्कजे । स्वनाम्ना वास्तुनाथं तु पत्रमध्ये स्थितं यजेत् ॥ ७७
कोणभागस्थपद्मानां केसराग्रे यजेच्च तम् । प्रणवं वास्तुनाथाय नमश्चान्ते प्रपूजयेत् ॥ ७८
तत्राष्टकमलेनैव पूर्यं वर्णाष्टकेन तु । पूजयित्वा विधानेन पुष्पधूपादिकेन च ॥ ७९
दधिक्षीरोदकेनैव भक्ष्यैस्सफलमूलकैः । इष्ट्वैवं विबुधव्रातं बाह्यान्तःकरणे पुरा ॥ ८०
तदन्तरपदाब्जानामीशकोणादितः पुनः । नागकुण्डलवद्ब्रह्म दक्षिणावर्तकेन तु ॥ ८१
यावन्मध्यपदाब्जं तु पूर्यं वर्णाष्टकेन तु । मातृकावर्णभेदेन ह्यकारादिक्रमेण तु ॥ ८२
यावद्वकारवर्णं तु ततोऽब्जेऽब्जे दलेषु च । तेनैव क्रमयोगेन पूजयेद्देवतागणम् ॥ ८३
द्वितीयावरणे चैव अन्तराये निबोध मे । [7]धाता यन्ता ध्रुवः कालमाम कर्ता यजेत्ततः ॥ ८४
जीवं प्राणतिरोयज्ञं? रविकारं विम्ब च । लोकनाथो विधाता वै भगस्त्वष्टा नियामकः ॥ ८५
यदेव न च कल्याणो . . इंद्राविणस्ततः । स्रष्टारो विश्वकर्मा चेदित्येता? कमलोद्भव ॥ ८६
देवताश्चान्तरे पूज्याश्चतुर्विंशतिसंख्यया । एतेषामन्तरे भूयस्तृतीयावरणे शृणु ॥ ८७
षोडशानां ततस्संख्या . देवतागणम् । समुद्रमितरे द्वीपा मासा नाड्यश्च तारकाः ॥ ८८
विश्वे देवाश्चाप्सरसो मनवो ऋषयस्तथा । वसवो मरुतस्सिद्धा नागास्साध्या मि . ॥ ८९
.... .. चतुर्थावरणे न्यसेत् । तत्पादादौ नवानां तु पद्मानां पत्रमध्यतः ॥ ९०
मध्यपद्मे तु पत्रस्थं विश्वरूपं यजेत् प्रभुम् । [8]यस्यैव देवताचक्रं वाहनास्त्रानुयायिभिः ॥ ९१
संयुक्तं तिष्ठते देहे सकलस्य महात्मनः । प्रणवेन स्वनाम्ना च नमस्कारयुतेन च ॥ ९२
एकैकं पूजयेद्देवं तथैकैकं द्विजाक्षरम् । इत्येवमुत्तरस्यां दिक् पूर्वस्यां वाऽब्जसम्भव ॥ ९३
[9]विविक्तमुद्धरेत् क्षेत्रं सुतुर्यारित्व[10]भानये ? । [11]यस्मादतीव तुर्यश्री वास्तुक्षेत्रमसिद्धिदम् ॥

---

१. ख—द्वौ परिवाः काश्च २. ख—प्राक्पत्रादौ ३. ग-घ—ततोऽष्टपत्रपद्मेषु
४. ख-सुग्रीवं कासुमुद्विज ५. क-ग-घ—पत्रेषु ६. क-मुखो भल्लुक ख-मुख्यो भल्लुक
७. क— ... ... कालमाम ८. क-ग—यस्येयं
९. क-ग—विपक्त .... ... क्षेत्र १०. ख—भानयोः
११. ख—यस्मादिति च तुर्यशः

[1]विवृतास्सिद्धयस्सर्वाः प्रवर्तन्ते सदा नृणाम् । सामान्यादविकाराद्वा शान्तिर्भवति शाश्वती ॥
अत एव हि तत् क्षेत्रं वर्धनीयं प्रयत्नतः । प्रत्ययार्थं हि मोक्षस्य सिद्धयस्संस्थिता यतः ॥ ९६

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितयायां

दिक्सिद्धिलक्षणो नाम

तृतीयोऽध्यायः

# अथ चतुर्थोऽध्यायः

**पौष्कर उवाच—**

यदर्थमेव देवेश [2]चतुरश्रं त्वयोदितम् । तदादिश प्रमाणेन यागानां मन्दिरादिकम् ॥ १

**श्रीभगवानुवाच—**

सुप्रणीतं प्रमाणं च ज्ञात्वा वै माण्डलीयकम् । अप्रणीतप्रमाणा वा मानमाहृत्य मण्डलात् ॥ २
[3]ततश्चाम्नायते मानमस्य भूतेस्तथैव च । अभूय? बलिभूमानां भ्रामणीमानमेव च ॥ ३
ज्ञात्वा समाहरेत् पश्चात् प्राकारं मण्डलं तु वा ॥

**पौष्कर उवाच—**

प्रणीता मानसामान्या मानानां वा जगद्गुरो । यागानां विस्तरं ब्रूहि अस्मादेर्भूमिविस्तृताम् ॥ ४

**श्रीभगवानुवाच—**

जालान्तरगते सूर्ये [4]भाति रेणुगणश्च यः । स एव परमाणुस्स्यादष्टाभिस्तैरणुस्स्मृतः ॥ ५
अणुभिः कमलोद्भूत तैस्तु [5]लिक्षाऽष्टभिर्भवेत् । ताभिर्लिक्षाष्टकैर्यूकां विद्धि यूकाष्टकं यवम् ॥
अष्टभिस्तु प्रमाणोत्थैरङ्गुलं च यवोदरैः । गोलकं हि [6]कलश्चैव नाम स्याद्व्यङ्गुलस्य च ॥ ७
[7]षट्कलं च स्मृतं तालमध्वनीनवकर्मणि । चतुर्विंशतिभिर्ब्रह्मन् हस्तस्तैरङ्गुलैर्भवेत् ॥ ८
तेनैव हस्तमानेन गुरुशिष्योत्थितेन च । मण्डलादौ तु सर्वत्र [8]निदध्या ... कल्पना ॥ ९
भिन्नप्रमाणयागानामस्त्र[9]भूमैकजोत्त ... । आद्यद्वादशभिर्मानमङ्गुलैः परिकीर्तितम् ॥ १०

---

१. क-ग—विकृतौ २. ख—चतुरश्रस्त्वयोदितः ३. ततश्चाख्यायते इति स्यात् किम्
४. ख—पश्येद्रेणु ५. क—लक्ष्याष्ट ६. ख—कलाश्चैव ७. ख—षड्गोलं च
८. क—निदध्या ··· कल्पना ख-ग—निदध्याध्वात्म ९. ख-ग—भूमैकजोत्तवम्

[1]द्वितीयमष्टादशभिश्चतुर्विंशतिभिः परम् । [2]अङ्गुलात्वेपनत्वान्या ? त्र्यङ्गुलाच्चतुरङ्गुला ॥ ११
षोडशाङ्गुलमानेन [3] ... क्षाधिका सताम् । सार्धहस्ता द्विहस्ताश्च तदा सार्धद्विहस्तकाः ॥
वीथिका स्वल्पविस्तारा यागानां समुदाहृता । अधमं मध्यमं [4]हस्तौ यागानां सा त्रिहस्तका ॥
अधिका सार्धहस्तेन [5]वीथी शुभतरा मता । कार्या विस्तीर्णमानानां यागानां भिन्नरूपिणाम् ॥
गमनेमिचतुर्हस्ता षड्गोलक[6]युताऽथवा । [7]युगाख्यस्य च चक्रस्य अन्येग्रद्विसमा ? स्मृता ॥
स्वैव सांवत्सरी यस्य द्वादशाङ्गुलकैर्विना । बलि[8]पुष्पा .. भूस्नाभ्यां विविक्तां परिकल्पयेत् ॥
[9]अस्नाति .... यं प्रणीतमया च ते । भूभागे संमितं कुर्यात् सर्वेषां च पृथक् पृथक् ॥
वितानाना च यागानां [10]स .... र्धसमं भवेत् । कुर्याच्च भूमिविस्तारमंस्त्राद्युक्तं श्रमान्तिकम् ॥
हस्तादिपञ्चहस्तान्तं यागमानं च सङ्गतम् । ऊनाधिकं च षड्ढस्ता[11]न्मा(न)मस्य प्रजायते ॥
यावद्द्वादशहस्तं स्यात् किञ्चिद्धीनं तु [12]वाऽधिकम् । मध्यम[13]विद्धि तन्मानं ततोर्ध्वं तु स्मृतं महत् ॥
प्रमाणमेवमादौ तु चिन्तयित्वा प्रयत्नतः । यागवेश्म .. कुर्यात्तस्य तु लक्षणम् ॥ २१
स्वल्पमण्डलगेहानां हस्तेनैकेन कल्पयेत् । [14]वैपुल्य विप्र भित्तीनामथवार्धाधिकेन तु ॥ २२
द्विहस्तं मध्यमानां तु [15]भित्ति । विस्तीर्णा यागवेश्मानां भित्तिविस्तारमब्जज ॥ २३
कुर्याद्धस्तचतुष्केण पञ्चकेनाथवेच्छया । षट्सप्ताष्टनमोच्छ्राया महीयं सङ्गवेषु च ॥ २४
नवहस्ता द्विजश्रेष्ठ दशैका[16]दशधोच्छ्रिता । [17]भक्तिसङ्घं तु सम्पाद्य मध्यमानं तु सर्वदा ॥ २५
करद्वादशदीर्घं च तथैवैकाधिकं तु तत् । चतुर्दशोच्छ्रितं वाऽपि विततानां प्रकल्पयेत् ॥ २६
अस्य न्यूनाति वा हि स्यान्माण्डलीयस्य सर्वदा । त्रिविधं भित्तिमानं तु [19]मध्याह्ने तद्व्यपेक्षया ॥
कल्पनीयं . माया संख्यया कमलोद्भव । उत्तरोत्तरया चैव [20]वैपुल्येन सहैव हि ॥
काष्ठपक्वेष्टकाभिश्च सुधालेपाय सात्विकम् । यागमण्डपनिर्माणं प्रशस्तं सर्वसिद्धिदम् ॥ २९
यथाकालं यथादेशं कुर्याद्वित्तानुरूपतः । स्वल्पानां यागवेश्मानां द्वारमेकं प्रकल्पयेत् ॥ ३०
मध्यतः पूर्वदिग्भागे पश्चिमे ह्येवमेव च । दिगन्तरपरि[21]त्यागात् कृतद्वारमसिद्धिदम् ॥ ३१

---

१. ख—द्वितीय द्वादशादिश्च २. ख—अङ्गुलानेवनत्वानु ३. क-ग—तैवेद्य ख—नैवेद्यक्षा
४. ख—हस्तं ५. क-ग—विधिश्शुभ ६. ख—युता तु वा
७. क-ग—युगाभ्यास्य च ८. क-ग—पुष्पास्य ९. ख-ग—अस्नातिष्वति .... मतं
१०. ख—सकलोत्थसम ग—सक्रगोर्धसम ११. क-ग—न्मास ... प्रजा ....
१२. ख—साधिक ग—वाधिक १३. क—विहित ग—विधितन्मान
१४. ख-ग—यागयेन्मस्तहरण १५. ख—वैपुल्य इत्याद्यर्धचतुष्टय गलितम्
१६. ग—भित्तिममातिमशा भवेत् १७. क—दश ··· ताम् १८. क—भक्त
१९. क—मध्या .... व्यपेक्षया ग—मध्याह्न ··· व्यपक्षया
२०. क-ग—वैपुलेन २१. क-ग घ—त्याग

तस्माद्दिक्षु प्रयत्नेन मध्यतो विनिवेशयेत् । मध्यप्रमाणगेहानां द्वे द्वारे पूर्वपश्चिमे ॥ ३२
अतिविस्तीर्णमानानां प्राकाराणां प्रकल्पयेत् । दिक्षु द्वारचतुष्कं तु प्राकाराणां तथैव हि ॥ ३३
अस्त्रत्रयेण न्यूनानां कुर्यात् सार्धेन चोच्छ्रितम् । स्वविस्ताराच्च मध्यानां चतुर्थांशेन कल्पितम् ॥
अन्येषां पश्चिमांशेन द्वारोच्छ्रायं प्रकल्पयेत् । त्रिभागेनाथ वर्येन? [1]सोच्छ्रायाद्धि विविक्तता ॥
द्वारीयशाखायुग्मस्य उदुम्बरयुगस्य च । उच्छ्रायात् पश्चिमांशेन न्यूनानां विस्तृतिर्भवेत् ॥ ३६
चतुर्थांशेन मध्यानामथोर्ध्वानां त्रिभागतः । विस्तरार्धेन बाहुल्यं [2]शङ्कादींस्तान् समाचरेत् ॥
पञ्चसप्तक्रमाच्छाखानवकेनान्वितं तु तत् । द्वारे द्वारे तु शाखाभ्यां चतुर्थांशे व्यवस्थिते ॥
द्वार्स्थे[3]द्वितिस्थिति कुर्यात् स्वदिग्भागक्रमेण तु । वज्रनाभं हरीशं च पूर्वस्यां दक्षिणोत्तरे ॥ ३९
शङ्खचक्रधरं चैव वज्रवेत्रलताधरम् । निषेधाभिनयोपेतं श्रोणीतटकरार्पितम् ॥ ४०
हव्यस्वरूपसदृशं नेत्रवृन्दं यदेव हि । क्रूरं [4]दृगदुर्तोपेत वज्रनाभं प्रकल्पयेत् ॥ ४१
एवमेव हरीशं च निषेधाभिनयोज्झितम । प्रवेशाभिनयाख्येन पाणिना किन्तु चिह्नितम् ॥ ४२
एको ह्यत्र निषेधं च त्वभक्तानां करोति वै । भक्तानामपरश्चैव प्रवेशं संप्रयच्छति ॥ ४३
द्वारे द्वारे प्रतीहारद्वयस्यैवं प्रयोजनम् । धर्माध्यक्षो नियन्ता च[5] . . .... ॥ ४४
बाणकार्मुकमेकस्मिन् दक्षिणे दक्षिणोत्तरम् । कुर्यादन्तकसादृश्यौ पूर्ववद्भुजभूषितौ ॥ ४५
किन्तु दण्डगदाहस्तौ वज्रचक्रविवर्जितौ । शुद्धाक्षममृतानन्दं प्रतीच्यां दक्षिणादितः ॥ ४६
[6]बाणकार्मुकमेकस्मिन् पाणौ पाशं तथाऽपरे । अन्यत् करचतुष्कं यदव्यग्रं पूर्ववद्भवेत् ॥ ४७
आकृतौ जलनाथस्य सदृशौ सर्वदैव हि । वसुनाथं सुधानन्दमुदग्दिग्दक्षिणोत्तरे ॥ ४८
खड्गमुद्गरहस्तौ च प्राग्वच्छेषं चतुष्टयम् । कराणामनयोः कार्यं [7]रूपेणोडुपतेस्समौ ॥ ४९
ततस्मारगकह्लारमचक्रं कम्बुपालिभिः? । . .. वनमालाविभूषितम् ॥ ५०
स्वस्ति [8]राम रक्षीश . . यमुनान्वितम् । पूर्णकुम्भश्रियोपेतं नागेन्द्रैस्सारसान्वितैः ॥ ५१
भूषयेद्द्वारशाखाभ्यामूर्ध्वो[9]दुम्बरकं द्विज । व्यालसिंहगजाद्यैरुदुम्बरमतस्त्वितम् ? ॥ ५२
पूर्णायं? न पूर्वोक्तैर्युक्तं कुर्यात् कदाचन । त्रिभागेनोन्नतद्वार उच्छ्रायार्धेन सस्त्रयम्? ॥ ५३
शाखार्धद्वारवत्युक्तं गवाक्षगणमीदृशम् । [10]दिक्कलीकं? समापाद्य द्विचतुष्षट्कसंख्यया ॥ ५४

१. ख—सोच्छ्रायाद् विद्धि वित्ततः २. क—शङ्खादी ... समाचरेत्
३. सर्वत्र 'द्वितिस्थ' इत्येवास्ति ४. क-ग—दृग्गतोतोपेत
५. ख—दक्षिणे दक्षिणोत्तर । इत्यक्षराणि दृश्यन्ते. इद प्रमादपतित समनन्तरार्धस्य अन्त्य पादगतम्. ६. ख—इदमर्धं गलितम्
७. क-ग—रूपेण सुपतः ८. ख-ग—रामपरक्षीशस्तदावीयमुना
९. ख—दुम्बरकं १०. क—दिक .... समापाद्य

द्वाराणां सगवाक्षाणां कपोतौ सुमनोहरौ । विचित्रचित्रौ पङ्क्तौ च [1]निश्रमौ वा प्रकल्पयेत् ॥
दार्वायसाङ्गोपेतरवद्द्वारादिकं द्विज । भित्तिबन्धं विनिश्चित्य विचिन्वीयात् क्रमेण तु ॥ ५६
स्तम्भविन्यासमधुना मण्डपानां निबोध तु । यागागारगणस्वल्पं [2]यत्तत् स्तम्भविवर्जितम् ॥५७
शेषस्तम्भयुतं कुर्याद्यथा तत् कथयामि ते । बलिभूमिसमीपानां यागभूमेस्समन्ततः ॥ ५८
त्यक्त्वा भूमणिभूभागात् स्तम्भविन्याममुच्यते । [3]प्राच्यादिदिक्चतुष्कं तु मध्यसूत्रेण पौष्कर ॥
समीक्षयित्वा तान् सर्वांस्तत्र स्तम्भावलिं न्यसेत् । पूजार्थमुपविष्टस्य स्तम्भेन स्याद्यथाक्रमम् ॥
स्तम्भानामन्तरं चैव सन्ततस्संख्यया यजेत् । चतुष्कमष्टकं चैव चतुष्कं च द्विरष्टकम् ॥ ६१
त्रिरष्टकं च स्तम्भानामथवा चतुरष्टकम् । तत् सार्धं द्विगुणं वाऽथ ज्ञात्वा मण्डपविस्तृतम् ॥
[4]स्तम्भानि च सुवृत्तानि अष्टाश्राण्यथवा द्विज । द्विषट्कषोडशाश्राणि नानाकर्मयुतानि च ॥
शिष्टानामर्थे[5]विस्तारात् तच्छ्रियं वाऽथवा द्विज । स्थूलान्यथ यथालाभं तथा व्ययपेक्षया [5] ॥
अथ भित्तिसमाविष्ट आसनादिविभूषितम् । चतुरभ्यधिकं चैव स्तम्भेभ्यः कन्यकागणम् ॥६५
नियोनियम [6] सर्वत्र नियमोऽयं न पौष्कर । यत्र स्तम्भो नरजितास्तत्र स्तम्भसमन्वितम् ॥६६
[6]चतुरश्रचतुष्पष्टिसंख्यास्तम्भा[7]विव । अन्यपूर्णानि धामानि चतुष्कं कन्यका न्यसेत् ॥
स्तम्भानां रचनाद्याना स्तम्भाभ्यास [7] महामते । द्व्यर्धभागप्रमाणेन तासां विस्तारमाचरेत् ॥ ६८
त्रिभागेन स्वविस्तारं तद्बाहुल्यं तु पद्मज । एवमादीनि सङ्घेन [8]युग्मास्तम्भगणाः पुरा ॥६९
कृत्वा तदूर्ध्वगं पश्चात् समारोप्यस्तुलागणः । ऊर्ध्वं तच्छादनार्थं तु यथा तद्वदतश्शृणु ॥ ७०
भित्तिबन्धं पुरा कृत्वा युक्तितः कन्यकागणम् । बन्धैः [9]कार्ष्णायसाद्यैस्तु यथाऽऽदौ लयमग्रजम् ॥
शक्यन्ते [10]हारमु .... न यात्युन्मूलता यथा । त्रिचतुःपञ्चहस्ताद्वा प्रमाणं चतुरङ्गणम् ॥
स्तम्भानामग्रतस्ताक्ष्यों यागभूमे[11]र्द्विजो ध्वजः । सन्धार्य बलवंशैस्तु सुस्पष्टैस्सुदृढैस्ततः ॥ ७३
स्तम्भकन्याशिरोबन्धं कृत्वा यत्नेन वेतुला [1] । पुरा मूलं न्यसेद्भित्ति नो [12] .... गैतम् ॥ ७४
वेधयित्वा ततो मूलं तस्मिन् काष्ठे भुजं न्यसेत् । भित्तिजं लम्बमानस्य स्थूलतुर्याश्रलक्षणम् ॥
दृढकाष्ठसमुद्भूतैस्सस्थूलैर्बहुभिस्तथा । स्तम्भानां कन्यकाना च तुल्यानां तु तथा द्विज ॥ ७६
बन्धश्च सदृशं दद्यात् पात्रैश्चायसनिर्मितैः । शङ्कुभिश्शृङ्खलाद्यैश्च बहुभिस्स्याद्यथाऽचलम् ॥ ७७
तुलामूलप्रदेशेऽथ भित्रादुपरि पौष्कर । इष्टकाभिस्सुधालेपैः [13]कुर्याच्छीर्षगणं महत् ॥ ७८

---

१. ख—निसृतौ  २. ख—तत्तस्तम्भ  ३. क-ग—प्राच्याद्य
४. क-ग—स्तम्भानिव सुवृत्तानि  ५. क—विस्तार ... य वा
६. क-ग—चतुरश्रचतु  ७. ख—विवर्जनम्  ग—विवर्जया
८. क-ग—युगास्तम्भ  ९. ख—काष्ठायसा  १०. हारमुद्गौसु
११. ध्वजो द्विज इतिचेत् साधु  १२. ख-ग—नो कि चिदेवि  १३. क—कुर्यादपिगणं

अथ चन्द्रसमाकारमथवाऽङ्कल[1]सारवत्[2] । क्रममाणविलाकाशे तदूर्ध्वे खं विराङ्गणम् ॥ ७९
[2]त्रिमण्याख्यं कृतं मार्गं भित्तिस्तम्भावसातनम् । तुलानामूर्ध्वगं सर्वं भित्तिभूमिं समापयेत् ॥
सह मृत्काष्ठवर्गेस्तु चूर्णेन क्षीयते न तु । तुलाशयस्यैवमेवं स्थितिं कृत्वा च [3]वर्ष्मतः ॥ ८१
कुर्यात्तदग्रतो भूयस्स्थितिं चावलसिद्धयेत्[4] । स्तम्भप्रदेश[4]कण्ठानां रोप्यो बहुगुणो दृढम् ॥८२
निर्गतं च तुलान्तं यत् तच्छिरोपरि विन्यसेत् । तुलया सह तद्बाहुं प्रायश्शस्त्रेण बन्धयेत् ॥
किन्नरोरगगन्धर्वयक्षविद्याधरैस्सह । क्रीडमानास्स्वकान्ताभिस्ते च कार्यास्तुलाधराः ॥ ८४
ततस्तुलानामग्रे तु सुलग्नां स्तम्भसन्ततिम् । किञ्चित् समुच्छ्रितं दत्त्वा परितः पद्मसम्भव ॥
[5]शङ्को .... .... छादनस्य स्थितस्य च । स्तम्भानामूर्ध्वगं दद्यान्नियुतं तु तुलागणम् ॥
तत्तुलामूर्ध्वगं दद्याद्बाहुं कुब्जप्रसारितम् । सुगन्धमावर्मेनैव विश्रान्तं प्राक् तुलोपरि ॥ ८७
तस्यापि [6]पूर्ववद्दद्याद्बन्धं च तुलया सह । उपबाहुद्वयेनापि तिर्यग्युक्तेन [7]सार्यताम् ॥ ८८
प्राक् पूर्वं च तुलाग्रस्थं दद्यादग्रभुजं पुनः । पश्चादुपतुलानां तु अग्रतो वंशसन्तति ॥ ८९
रोप्यं संकोपयेदग्रमप्रसुप्तमिवाम्बुजम् । तिर्यक् प्रसारितैर्वंशैर्लघुभिर्लघुभिः क्रमात् ॥ ९०
प्रपूर्यमन्तिकं तं तु छादनीयं च तत्ततः । तनुभिर्लघुभिश्चैव काष्ठगैश्च गणैर्दृढैः ॥ ९१
[8]वर्गे रूर्णामयैर्वाऽथ कोय[8] सन्धरणक्षमैः । भित्तौ भित्तौ चतुस्त्रैर्वा प्रलयानि च योज्य च ॥
मध्ये मस्तकचन्द्राणां चन्दनाप्रच्युतस्य च । कदाचित् तस्य मेघोत्थं मेघस्य [9]वाहनाय च॥९३
पादपृष्ठयुते देशे .... काले ह्युपार्जिते । क्षिप्रकर्मप्रसिद्ध्यर्थं शरकाष्ठमयं शुभम् ॥ ९४
गवाक्षकान्वितं चैव द्वारैस्तु परिभूषितैः । छन्नं वितानकेनोर्ध्वे प्राकारं परिकल्पयेत् ॥ ९५
रजोनिर्मुक्तयागानां [10]दिक् .. पलिखितात्मनाम् । गैरिकाकुङ्कुमाद्यैश्च स्त्रीणां नानाविशेषतः॥
दीर्घकालीयकानां तु कुर्यात् पक्वेष्टकादिकैः । प्राकारं गोपनार्थं तु प्रोन्नतं सुदृढं महत् ॥ ९७
चतुरश्रं [11]सुवृत्तं च त्रिकोणं वा मनोहरम् । सदृशं पूज्ययागस्य [12]तज्ज्ञानकलितं दृढम् ॥
कृत्वैवं मण्डपं युक्त्या तन्मध्ये तु प्रकल्पयेत् । दृढां समां तदाकारामीषत् प्रागुत्तरप्लवाम् ॥
प्रोच्छ्रितां च विशेषेण स्थलां दर्पणसन्निभाम् । [13]सामान्या न भवेद्येन मेदिनी मण्डपस्य तु ॥
तत्तु पूजोत्सुकामानां ? कुर्यादीनां ? तु पौष्कर । विविक्तेनाङ्गुलानां तु प्रोन्नतेर्यावदष्टकम् ॥
एकवृद्ध्याल्पवेश्मानां नित्यं कुर्यात् स्थलागणम् । नवाङ्गुलोन्नतेस्तद्वद्यावत् पञ्चदशाङ्गुलम् ॥

---

१. क—सारयत् २. क—क्रमण्याख्यं तु तम्मार्गं ३. ख—वर्गतः
४. ख—कर्णानामाप्यो ५. ख—शङ्कोश्शनार्थमुतोव ग—शङ्कोश्शनार्थमुत्थाय
६. ख—पूर्ववद्दत्वा बन्धं ७. ख—साध्यता ८. क—वर्गे ... सन्धारण
९. सर्वत्र 'वाहनाय च' इत्येव वर्तते १०. ख-ग—दिक्पलोल
११. ख—सुवृत्त तु १२. क-ग—तन्मात १३. ख—सामान्या तु

प्रोन्नतत्वं स्थलानां च मध्यमेषु गृहेषु च । चतुर्विंशत्यङ्गुलान्तमुच्छ्रायं षोडशाङ्गुलम(लात्) ॥
प्राग्वच्च वृद्ध्या कर्तव्यं ज्येष्ठाकारं गणस्य च । एतदुच्छ्रायमानं तु कथितं ते स्थलासु च ॥
पादमर्धं तु हस्तं वा विस्तारात् सर्वदिक्षु वै । स्थलानामिष्टकाद्यैश्च चिन्वीयात् प्रथमं ततः ॥
मृदा संपूर्य तन्मध्यमीषद्वालुकयाऽन्वितम् । परीक्ष्य केशकीटादीनारोग्यं तदनन्तरम् ॥ १०६
यावद्भवति पूर्वोक्तं लक्षणं वा विशेषतः । स्थलां मध्योदितां रम्यां [1]सप्तमाहं परीक्ष्य च ॥
न ददाति यथा भेदं यागयोग्या भवेत्ततः । प्रतिष्ठाप्य ततो ब्रह्मन् वेदिकातोरणान्वितम् ॥
बहिश्चतुष्किकाश्राणां समीपे न तु दूरतः । चतुष्पादसमायुक्तमनेकाङ्घ्रियुता यदि ॥ १०९
चतुर्देशाच्चतुर्दिक्षु सुसमेष्वन्तरेषु च । कुर्याद्वै पादविन्यासं वेदवेदविदां वर ॥ ११०
चतुर्द्वादशपादा सा विंशत्यङ्घ्रिसमन्विता । अष्टाष्टाधिकवृद्ध्या वा संयुगापादसन्तते ॥ १११
क्षमाविस्तारजेनैव भिन्नैराधेयविंशकैः । तस्मिन् यागगृहे दत्ता पुरा स्तम्भावली शुभा ॥ ११२
चत्वारि तोरणान्यस्मिंश्चतुर्दिक्षु नियोज्य च । त्रीणि त्रीण्यथवा सम्यगेकैकस्यां न्यसेद्दिशि ॥
बुद्ध्वा मण्डपविस्तारपञ्चकं सप्तकं तु वा । वेश्मनि स्तम्भहीने तु वेदिकातोरणैस्सह ॥ ११४
कार्या लक्षणसंयुक्ता यादृक् तदवधारय । पूर्वं सामान्यमानेन सविशेषेण वै तत ॥ ११५
पावनैर्यज्ञकाष्ठैश्च सुदृढैस्सरलैस्समैः । तुलायामाच्छिन्नैर्दण्डैस्स्वसरांशविवर्धितैः ॥ ११६
वेदवेदविदां श्रेष्ठ प्रोच्छ्रायेण भवेच्छुभ । नैवायामयोगेन कुर्यात् पादाधिकेन च ॥ ११७
तोरणानां समुच्छ्रायं तत्त्रिभागेन विस्तृति । तद्दण्डनिचयं सर्वमूर्ध्वदण्डगणं विना ॥ ११८
त्रिधा कृत्वा समैर्भागैरूर्ध्वगा वर्तुला भवेत् । तदधस्तद्द्वितीयं यत् तदष्टाश्रं समापयेत् ॥ ११९
चतुरश्रं तृतीयं तु [2]भागात्तत्तदधस्स्थितम् । सर्वाण्याधेयदण्डानि सर्वतो वर्तुलानि च ॥ १२०
चतुरश्राणि वा कुर्यान्नानाकर्मयुतानि च । सपुष्पमञ्जरीपत्रविहगैरन्वितानि च ॥ १२१
त्रिचतुःपञ्चषट्सप्तस्थौल्याद्यष्टाङ्गुलानि च । अष्टमाशायोधिकस्तु वेदैस्तन्निरवनेत् क्षितौ ॥ १२२
तत्समं तोरणं चान्यन्न्यसेद्‌द्रुमौ द्विजांशकम् । इति सामान्यमानेन युक्तमुक्तं च लक्षणम् ॥
वेदश्चरणदण्डानां [3]तद्विशेषान् शृणुष्व भो । [4]हेरूर्ध्वात् षडंशं तु त्यक्त्वा पञ्चांशसंमितम् ॥
एतद्द्वादशमांशेन तोरणं मानमब्जज । सममध्यत्रिभागं च सर्वदण्डेषु भूगतम् ॥ १२५
मुख्योन्नतेभ्यस्सारेभ्यः प्राकारेष्वथ वेश्मवत् । मन्दिरे स्तम्भसंयुक्ते तोरणोच्छ्रायमब्जज ॥
स्तम्भायामसमं कुर्या[5]त्तद्दण्डौ विन्यसेत् क्षितौ । स्तम्भमस्तकमानेन साधिकेन तदेव हि ॥ १२७
[6]स्तम्भपादोन्नतस्थेन प्रमाणेन प्रकल्प्य च । वैपुल्यं तोरणानां च स्तम्भाभ्यन्तरगास्थितम् ॥
तद्देवेन्द्रस्वरूपेण कार्या वेदविदां वर । चक्रद्वितयमध्यस्थं [7]पक्षमण्डलमण्डितम् ॥ १२९

---

१. ख—सप्तमासं २. ख—भागतत्तदधः ३. क-ग—तद्विशेष ··· शृणु
४. क-ख—···षडंशं तु ५. ख—त्तद्दण्ड ६. ग-स्तम्भपादां ततस्तेन ७. क-ग-पक्षम

तोरणे तोरणे कुर्याद्गरुडं चोर्ध्वसंस्थितम् । [1]तूपेरश्रमपारं .... सचित्रं चित्रयेत् ततः ॥१३०
मुनिसिद्धामर[2]प्रान्तैरनेकाद्भुतदर्शिभिः । दिशापालवनोद्यानैर्बहुभि[3]र्मृगयूथपैः ॥ १३१
तद्यागवेश्म सकलं रञ्जनीयं प्रयत्नतः । कुर्यात् सुधाविलिप्तं वा भूषयेत्तदनन्तरम् ॥ १३२
दर्पणैश्चामरैर्वस्त्रैर्दुकूलैर्विविधोज्ज्वलैः । घण्टाभिरर्धचन्द्राद्यैरातपत्रैर्मनोरमैः ॥ १३३
विचित्रेण वितानेन सुसितेनोज्ज्वलेन वा । कर्णिकाजालयुक्तेन वेदेरूर्ध्वं तु भूषयेत् ॥ १३४
प्रागुत्तरात्तु दिग्भागाद्यावत्कोणं तु मारुतम् । सितादिवर्णभेदोत्थाः पताकास्तत्र योजयेत् ॥
एवं रागविभागेन प्रत्यग्भागाच्च वै पुनः । दक्षिणाशाविधिर्यावद्द्वितीयं च चतुष्टयम् ॥ १३६
एकेन [4]सर्वाणि च ... उभौ कुर्याद्वितानके । तोरणं यो वितानं च समानं विनिवेशनम् ॥
ध्वजाष्टकं समारोप्य यथा तदवधारय । वह्निकोणात् समारभ्य यावत्कोणं तु शाङ्करम् ॥१३८
सितारुणं च पीतं च कृष्णं कुर्याच्चतुष्टयम् । भूयश्चोत्तरदिग्भागा यावद्दिक्पश्चिमं द्विज ॥
[5]तथाविधाश्चतुष्कं तु ध्वजानां परिकीर्तितम् । राजपाषाणवर्णाभं चक्रपक्षीश्वरोपगम् ॥ १४०
वैजयन्तीत्रयं कुर्यात् तोरणे पूर्वदिक्स्थिते । दक्षिणे स्फटिकाभं तु प्रत्यक् सिन्दूरवर्चसम् ॥
हेमाभं चोत्तरे कुर्यात् तोरणे ध्वजकत्रयम् । चतुष्केण पताकानां युक्तं श्वेतादिकेन तु ॥१४२
एकैकं तोरणं यत्र त्रितयं पञ्चकं तु वा । अर्धेन तोरणायामात् पताकानां च [6]दीर्घता॥१४३
विस्तारं [7]सार्धभागेन तासां कुर्यात्तु सर्वदा । ध्वजानां तु समुच्छ्रायं पूर्वोक्तमथवाऽब्जज ॥
तोरणार्धसमं कुर्यात् त्र्यंशेन [8]स्वैव विस्तृतिः । ध्वजास्त्ववाहनोपेता [9]भागेष्वनुचरैर्विना ॥ १४५
कार्या दिग्देवतास्सर्वा [10]यथाध्य ... विनिर्मिता । एवमेव प्रकारेण द्वारेषु सुसमेषु च ॥
चण्डाद्यं च सुभद्रान्तं बहिरङ्गगणाष्टकम् । [11]कुमुदाद्यन्तरङ्गं च भूतानामष्टकं परम् ॥ १४७
तोरणं तुर्यभागेन दैर्घ्यं नेषामुदाहृतम् । दैर्घ्यं चतुर्थभागेन विस्तारस्य[12] .... ॥ १४८
शतधामनिभं ध्यायेच्चतुर्बाहुं पुरन्दरम् । [13] ... संस्थं तु [14]सुतीक्ष्णं कुलिशोद्यतम् ॥
अजारूढं [15]स्मरेद्रक्तं शक्तिपाणिं हुताशनम् । सहस्रार्चिभिराकीर्णं सहस्रादित्यभास्वरम् ॥
महामहिषसंस्थं तमञ्जनाद्रिसमप्रभम् । सुभीमं दण्डहस्तं तु स्मरेद्देवमपीश्वरम् ॥ १५१
दंष्ट्राकरालवदनं कृष्णमेघसमप्रभम् । घोरं प्रेतासनं ध्यायेत् खड्गधूम्राक्षमेश्वरम् ॥ १५२
मुक्ताफलद्युतिसमं हिमपाशकरोद्यतम् । नागकन्यासहस्राढ्यं मकरस्थमपांपतिम् ॥ १५३

---

१. ग—कूपेरश्रम २. ख—प्रान्ते ३. क-ग—गुरुयूथपैः ४. ख—सर्वपर्णी च
५. ख—तथाविधं पताकं तु ६. क-ग—दीर्घिका ७. ख—स्वार्ध ८. क—सैव
९. ख—भागैःस्वानु १०. ख—यथाध्याय ग—यथाध्यत्र ११. ख—कुमुदाद्यं द्विरङ्गं च
१२. ख-पतगेषु च ग-स्यात्तगेषु च १३. क-सुवि···तु ख-श्वेतद्विपस्य ग-सुवितद्विपलब्धं
१४. ख—सुकीर्तिं १५. क-ग—स्मरेद्वृत्तं

नीलतोयदसङ्काशं महाध्वज[1]पदाङ्कितम् । ध्यायेत समीरणं देवं संस्थितं हरिणोपरि ॥ १५४
सोमं तारागणोपेतं शङ्खगोक्षीरपाण्डरम् । बृहच्छशकपृष्ठस्थं शशिं रात्रिकरं स्मरेत् ॥ १५५
सितभूतिविलिप्ताङ्गं त्रिनेत्रं वृषवाहनम् । त्रिशूलायुधहस्तं च ईशानं ज्ञानिनं स्मरेत् ॥ १५६
पातालदिग्गतं ध्यायेत् [2]कूर्मारूढं हलायुधम् । सितं सहस्रफणभृ[3]द्योऽनन्तो नाम नागराट् ॥
[4]भूचक्रं भ्राम्यमाणं तु दण्डहस्तं प्रजापतिम् । हंसारूढं [5]खसंस्थं च ध्यायेद् ध्रुवमजं विभुम् ॥
एते चतुर्भुजास्सर्वे अक्षसूत्रविभूषिताः । चिन्तयन्तः परं तत्त्वं [6]वराभयकरास्सदा ॥ १५९
दिव्याभरण[7]दिग्धाङ्गा दिव्यमाल्याम्बरान्विताः । दिव्यरूपधराश्चैव दिव्यगन्धवहा द्विज ॥
एभ्यश्चतुर्भुजो ब्रह्मन् विज्ञातो वृषभध्वजः । द्विभुजास्त्वकराश्चान्ये वरदाभयदास्तु वा ॥ १६१
इति लोकेश्वरेषूक्ता ? चण्डादीनामथोच्यते । बहिरङ्गगणानां च ध्यानं [8]सम्यक् क्रमेण तु ॥
तरुणादित्यसङ्काशो महोरस्कश्चतुर्भुजः । उन्नतश्चोन्नतांसश्च पूर्णाङ्गो नातिमांसलः ॥ १६३
घनोदरो निम्ननाभो रोमराजिविराजितः । दंष्ट्राकरालवदनः पिङ्गलश्मश्रुलोचनः ॥ १६४
मधुपिङ्गलनेत्रश्च कुटिलभ्रूलतायुतः । प्रलम्बलोलश्रवणः पृथुघ्राणस्स्मिताननः ॥ १६५
कुण्डलालङ्कृतश्चैव हारकेयूरभूषितः । बद्धोर्ष्णीपललाटश्च नीलकेशाभ्यलङ्कृतः ॥ १६६
शुक्लाम्बरधरस्स्रग्वी भुजयुग्मेऽस्य दक्षिणे । [9]प्रोद्यतं संस्मरेच्चक्रं प्रज्वलन्तीं गदां परे ॥ १६७
श्रोणीतटनिषण्णां च विश्रान्तां वसुधातले । पूर्वं वामकरे शङ्खमन्यस्मिंश्चाक्षसूत्रकम् ॥ १६८
एवं गणाधिपश्चण्डो विक्रमेणापराजितः । क्रुद्धो विघ्नायुतानां च क्रमात् संहरणक्षमः ॥ १६९
आवाह्य मन्त्रनाथस्य तोरणे पुरतस्स्थिते । विनिवेश्य यथा तत्र दक्षिणेन विभोर्भवेत् ॥ १७०
स्याद्गुरोर्यजमानस्य वामभागे सदैव हि । तत्रैवापरभागे तु [10]प्रचण्डं त्वीदृशं न्यसेत् ॥ १७१
किन्तु सव्यापसव्याभ्यां भुजाभ्यां स्याद्विपर्ययः । भुजद्वयेन चण्डस्य वामे संपरिकीर्तितम् ॥
दक्षिणे तत्प्रचण्डस्य ध्येयं वा परिकल्प्य च । पद्मगर्भप्रतीकाशौ तादृशौ भीमविक्रमौ ॥ १७३
रक्ताम्बरधरौ चैव रक्तस्रगनुलेपनौ । गणौ धातृविधातारौ देवौ दक्षिणतस्स्थितौ ॥ १७४
अतसीकुसुमश्यामौ पीतमाल्याम्बरान्वितौ । [11]पीतोष्णीषधरौ रौद्रौ प्रावृड्जविभूषितौ ॥
गणौ चण्डाकृतिधरौ दुर्दर्शौ दुरतिक्रमौ । जयं च विजयं नाम्ना प्रत्यग्भागे तथा न्यसेत् ॥
क्षीरकुन्दावदातौ च नीलकौशेयवाससौ । नीलनीरदवर्णाभैः पुष्पैर्भूषितविग्रहौ ॥ १७७
पूर्वोक्तगणसादृश्यौ नाम्ना भद्रसुभद्रकौ । न्यसेत्तोरणदण्डाभ्यां मन्त्रमूर्ते[12]रुदग्दिशम् ॥ १७८

---

१. ख—पटाङ्कितं २. ख—कूर्मरूपं ३. क-ग—द्येनान्तो ख—द्येनन्तो
४. क—द्विचक्रं ५. ख—खगस्थं च ६. क-ग—चरकायकराः
७. क-ग—सन्दिग्धां ८. ख—सर्वं क्रमेण तु ९. ख—ध्यात्वा तं संस्मरे
१०. ख—प्रचण्डसदृश ११. ख—बद्धोष्णीष १२. क-ग—रुदग्भृश

एते गणेश्वरा ह्यष्टौ प्रभापुष्पाम्बरैर्विना । देहवक्त्राकृतेस्तुल्यौ तथैवाभरणायुधैः ॥ १७९
भक्तानां विघ्नजालस्य सर्वदिक्संस्थितस्य च । संसारफलदातुर्वै छेदनार्थं समुद्यतौ ॥ १८०
परस्परमुखास्सर्वे स्थानकैस्संस्थितास्समैः । गणेशायुतलक्षैस्तु नानावर्णवपुर्धरैः ॥ १८१
अच्युताराधनपरैरेकैकं परिवारिताः । अथाग्रे लोकनाथस्य पूज्यौ द्वौ गणनायकौ ॥ १८२
कुमुदः कुमुदाक्षश्च प्रसन्नवदनेक्षणौ । तुहिनाचलसङ्काशौ प्रथमे वयसि स्थितौ ॥ १८३
नानाभरणदिग्धाङ्गौ नानाकुण्डलभूषितौ । नानामाल्यान्वितौ चैव नानामौलिधरौ द्विज ॥ १८४
नानागन्धविलिप्ताङ्गौ नानावस्त्रविभूषितौ । कुमुदाख्यगणेशस्य [1]ध्यातव्यो दक्षिणः करः ॥१८५
चन्द्ररश्मिप्रतीकाशचामरेण विराजितः । अभिगच्छाभयं ध्यायेद् द्वितीयं [2]दक्षिणं करम् ॥१८६
भवभङ्गात् प्रपन्नानां परेषां गुणशासने । तस्यैवाद्यं वामकरं प्रबुद्धकमलोद्यतम् ॥ १८७
[3]तूर्णीं भीसूचकं ध्यायेद्[4]बहिस्स्थानां करं परम् । एते द्वे कुमुदाक्षस्य वैपरीत्येन भावयेत् ॥
द्वाभ्यां द्वाभ्यां कराभ्यां तु अन्येषामेवमेव हि । पुण्डरीको वामनश्च द्वावेतौ हुतभुक्प्रभौ ॥
गरुडध्वजहस्तौ च शेषमन्यत् पुरोदितम् । कृत्वा ध्यात्वाऽथवा न्यस्य दक्षिणे भगवद्गृहे॥१९०
शङ्कुकर्णाभिधानो यस्सर्वनेत्रश्च पौष्कर । द्वावेतौ चम्पकाभौ तु मायूरव्यजनोद्यतौ ॥ १९१
महाविभूतेर्देवस्य प्रत्यग्वायुदिगास्थितौ । सुमुखस्सुप्रतिष्ठश्च वामभागगतौ विभोः ॥ १९२
चिन्त्यौ मुद्गफलश्यामावातपत्रकरोद्यतौ । नोक्तं शेषकराणां यत् तद्विद्धि कुमुदोद्यतम् ॥ १९३
एते भगवतो विप्र त्वन्तरङ्गा मयोदिताः । कर्मणा मनसा वाचा तद्भावगतमानसाः ॥ १९४
ज्ञानादिषड्गुणोपेतैराकीर्णाः कोटिशः परैः । भूतैस्सिद्धैरनन्तैश्च प्रार्थयन्ति परं पदम् ॥ १९५
एवं कृते ततः पश्चाद्वेदिकातोरणैस्सह । [5]विलिप्य चन्दनाद्यैश्च गन्धैर्वर्णोज्ज्वलैः क्रमात् ॥
चन्दनेन समालभ्य सेलेनोत्त[6]रदिग्गतम् । क्षीरेण चन्दनेनैव कुङ्कुमेन [7]कृतां स्थलीम् ॥ १९७
रजनीचूर्णयुक्तेन ह्रीबेरेणाम्बुना सह । पुण्याहमोपधिभ्यां तद्द्वाराणां मण्डपावनिम् ॥ १९८
ततस्तु विविधैर्धूपैर्बहुभिर्धूपयेद् द्विज । वैराजभुवनाकारं श्वेतद्वीपोपमं तु वा ॥ १९९
कल्पयित्वैवं मन्त्रमूर्तेस्तु यजनोद्यानमुत्तमम् । भक्तानामधिवासार्थमभिषेकावसानिकम् ॥ २००
शास्त्रोक्तभोग[8]मोक्षान्तं तत्र सर्वं समापयेत् । युक्तमेकप्रवेशेन यागाग्रस्थदिशं विना ॥ २०१
दिक्त्रयेऽभिमतायां वा [9]कुर्याद्भवनमण्डपम् । धूमनिर्गमनोपेतं नानाकुण्डविभूषितम् ॥ २०२
साज्यैश्च सपलाशैश्च संयुक्तं तोरणादिकैः । त्रिविधं कृतकौशेयं मेखलादाममण्डितम् ॥ २०३
अभग्नमूलप्रान्तैर्हि [10]दर्भाभिः कमलोद्भव । वेदितोरणदण्डानि सर्वाणि परिवेष्ट्य च ॥ २०४

---

१. ख—भवेयुर्दक्षिणे करे २. ख—दक्षिणे करे ३. ख—तूष्णी हासचतुष्कं तु
४. क-ग—बहिस्स्थानपरं कर ५. ख—विलिप्य ६. ख—रदुर्गतम्
७. ख—कृत स्थलम् ८ क-मोक्षं तु ग-मोक्त तु ९. ख-कुर्यात् सवन १०. ख-द्वन्द्वाभिः

[1]भौमस्थानं यथाभागं दर्भैर्बहुशिरोरुहैः । विधून्वन्तमिवात्मानं सारङ्गेण समन्ततः ॥ २०५
मृदा गोमयमिश्राया[?] मुपलिप्य यथाविधि । गुग्गुलैराज्ययुक्तैश्च धूपयेच्च हुनेत्ततः ॥ २०६
ततस्सांसारिकानर्थान् सर्वान् भक्तजनस्य च । मन्त्रात्मा सुप्रसन्नस्तु [2]निर्दहत्यग्निमध्यतः ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां

यागमण्डपलक्षणो नाम

चतुर्थोऽध्यायः

# अथ पञ्चमोऽध्यायः

**पौष्कर उवाच—**

यागस्तु देवदेवेश भद्रादीनि क्रमाद्वद । यैर्दृष्टैस्समर्यो शश्वत् पुत्रकत्वं प्रपद्यते ॥ १

**श्रीभगवानुवाच—**

मण्डलं सर्वतोभद्रं भद्रकृत् प्रथमं स्मृतम् । अघनिर्मोचनं नाम द्वितीयं यस्य दर्शनात् ॥ २
अनेकजन्मोपात्तं तु कल्मषं क्षयमेति च । सदध्वं स्यात् तृतीयं च [3]धर्ममार्गप्रदर्शनम् ॥ ३
धर्माख्यं स्याच्चतुर्थं तु धर्मं यच्छति पूजनात् । पञ्चमं वसुगर्भं तु भक्तानां वसुवृद्धिकृत् ॥ ४
सर्वकामप्रदं यागं षष्ठमिच्छाफलप्रदम् । अमित्रघ्नमतः प्रोक्तममित्रौघविनाशनम् ॥ ५
आयुष्य[4]मष्टकं प्रोक्तं यस्य पौष्कर दर्शनात् । परमायुरवाप्नोति अपमृत्युं जहाति च ॥ ६
नवमं बलभद्रं तु बलोत्साहसमृद्धिकृत् । पौष्टिकं नाम दशमं पुष्टिकृत् पूजनात्तु वै ॥ ७
अथारोग्यप्रदं नाम सर्वामयविनाशनम् । द्वादशं च विवेकाख्यं फलं नामानुरूपकृत् ॥ ८
एतस्मात् परमं यागं वागीशं नामतस्स्मृतम् । येन सन्दृष्टमात्रेण वाग्विभूतिः प्रवर्तते ॥ ९
चतुर्दशं मानसं स्याद्दर्शनात् सौमनस्यकृत् । अतः पञ्चदशं यागं जयं नाम जयप्रदम् ॥ १०
षोडशं स्वस्तिकाख्यं तु स्वस्तिकृद्विप्र पूजनात् । परमस्य तु यागस्य त्वनन्तं नाम कीर्तितम् ॥ ११
तदनन्तसुखावाप्तिं संयच्छत्याशु दर्शनात् । नित्यं नामाष्टदशमं नित्यतृप्तिप्रदं तु तत् ॥ १२
भूतावासमतो नाम्ना मण्डलं मण्डलान्वितम् । [5]यं दृष्ट्वा भविनां शश्वद्धर्मकृतजय द्विज ॥ १३
अतः परममोघाख्यं यागं येन निवर्तते । ममता पूजितेनैव देहिना [illegible] ॥

१. ख—भौमस्थाने २. ख—दन्दहत्यग्नि ३. ख—[illegible]
४. सर्वत्र 'अष्टकं' इत्येवास्ति ५. क-ग—यद्दृष्ट्वा

सुप्रतिष्ठमतो यो हि येन संपूजितेन वै । दृष्टेन परया भक्त्या मनश्शान्तिमवाप्नुयात् ॥　१५
बुद्ध्याधारमतः प्रोक्तं येन संपूजितेन तु । प्राप्नुयाच्च प्रतिष्ठानां बुद्धिं ब्रह्म स्वके पदे ॥　१६
गुणाकर इति ज्ञेयं मण्डलं यत्र पौष्कर । गुणसङ्घः क्षयं याति [1]हृदि ध्यानाच्च पूजनात् ॥
अस्यापरं [2]महायागं ध्रुवाख्यं च प्रकीर्तितम् । येनावलोकितेनैव संसारी समवाप्नुयात् ॥　१८
स्वात्मन्यवस्थितं सम्यङ् न भूयः प्रकृतिं व्रजेत् । मण्डलं परमानन्दमेतत् स्यात् परमं पदम् ॥
यद्दृष्ट्वा पूजयित्वा च [3]परं पदमवाप्नुयात् । एतेषां क्रमशो ब्रह्मन् लक्षणं चावधारय ॥　२०
क्षेत्रं कृत्वा चतुरश्रं? सप्तधा विभजेच्च तत् । शतार्धमेकहीनं तु कोष्ठकानां तु जायते ॥ २१
मध्यतो नवभिर्भागैः पद्मं तु परिकल्पयेत् । पङ्क्तिद्वयेन द्वाराणि [4]सत्कोणानि भवन्ति हि ॥
पद्मक्षेत्रसमीपात्तु [5]दक्षैरेवं तु मार्जयेत् । [6]कोष्ठकद्वारकण्ठार्धं त्रीणि त्रीणि च तद्बहिः ॥　२३
उपकण्ठप्रसिद्ध्यर्थं द्वाराण्येवं भवन्ति हि । षट्कं षट्कं पदानां तु प्रतिकोणं तु मार्जयेत् ॥२४
एवं हि भद्रकं लुप्तं रजसा परिपूरयेत् । व्योमवृत्तसमायुक्तं मध्ये तु कमलं [7]स्थितम् ॥　२५
रेखागणं तथा सर्वं श्यामलेन सितेन च । सन्धयः पद्मपत्राणामेवमेवान्तरेष्वपि ॥　२६
किन्तु वै व्योमवृत्तस्य बाह्यादादौ क्रमेण तु । सर्वेषां पूरणं वच्मि रजसा तु यथास्थितम् ॥
पाण्डुरक्तेन रागेण कण्ठाभ्यां तु यदन्तरम् । रक्तोज्ज्वलेन कोणानि पीतान्यभ्यन्तरं तयोः ॥
प्रपूर्यैवं भवेद्भद्रमघनिर्मोचनं शृणु । क्षेत्रं कृत्वाऽष्टधा सम्यक् चतुष्षष्ट्यंशकानि तु ॥　२९
जायते मध्यतः कोष्ठैश्चतुर्भिः कमलं लिखेत् । तद्बहिर्भागपङ्क्त्यैकां वीथ्यर्थं परिमार्जयेत् ॥　३०
द्वाराणि वीथिबाह्यं तु तदर्धं तु द्वयं द्वयम् । कण्ठार्धं लोपनीयं च चत्वार्युपगलात्तु वै ॥　३१
द्वारोपगेषु स्थानेषु पूर्वमण्डलसंख्यया । [8]विलोप्य रञ्जयेत् पश्चाद्भूमिं श्यामलेन तु ॥ ३२
शेषं तु भद्रवच्च स्यात् सदध्वमधुनोच्यते । विभज्य नवधा क्षेत्रमेकाशीत्यंशकं भवेत् ॥　३३
उत्पद्यन्तेऽत्र भागानां भद्रवत् कमलं लिखेत् । पङ्क्त्यां तु तद्बहिः पीठं रमणीयं च मार्जयेत् ॥
त्रिसंख्याकं तु भागानां [9]तस्मात् सर्वविदिक्स्थितम् । एकैकं दिक्षु संस्थाप्य भवेद्द्वाराण्यथाश्रयः ॥
बाह्यपङ्क्तिद्वयेनैव जायन्ते नान्यथा शृणु । पीठकोणसमैर्भागैर्द्वारकण्ठं प्रकल्पयेत् ॥　३६
पञ्चांशेनोपकण्ठं तु कोणमस्य [10]षडंशकम् । सम्मार्ज्य पूरयेत् पश्चाद्रजसा [11]राजते यथा ॥
अन्तरं व्योमपीठाभ्यां पीतरक्तोज्ज्वलेन तु । पीठदिक्स्थितभागानि श्यामलेनोज्ज्वलेन तु ॥
तदुपस्थानकोणानि पीतेन परिपूरयेत् । द्वाराणि सुसितेनैव पाण्डुरक्तेन चाश्रयः ॥　३९

---

१. क—निदिध्यानाच्च　२. क-घ—महायागातरुयज्ञ　ग—महायागातरुवज्रं
३. ख—परमं पदमाप्नुयात्　४. क-ग—स च कोणा भवन्ति　५. ख—दीक्षैरेव
६. ख—कोष्ठैकं द्वार　७. ख—स्मृतम्　८. क—विलेप्य
९. क—तस्मात् सन्धि　१०. क—षडङ्गकं　११. क—राजिते

सदध्वं च मया प्रोक्तं **धर्माख्यम**धुनोच्यते । विभज्य दशधा क्षेत्रमंशकानां भवेच्छतम् ॥ ४०
चतुर्भिः पुष्करं मध्ये पीठं पङ्क्त्या तु साधयेत् । परितस्तत्र भागानि शोधयित्वाऽब्जसम्भव ॥
प्रदद्यात् कोणसूत्राणि [1]चतुर्धा जायते यथा । भ्रमर्णी कल्पयेत् पङ्क्त्या [2]द्वारं तद्द्वितयेन तु ॥
षट् च कण्ठोपकण्ठाभ्यां भागानां परिमार्जयेत् । आर[3]भ्योभयपार्श्वात्तु द्वौ द्वौ भागौ तु मर्दयेत्॥
त्रयं द्वयमथैकैकं कोणात् संशोध्य रञ्जयेत् । पाण्डरारुणरागेण मध्यं वै व्योमपीठयोः ॥ ४४
द्वौ तु पूर्वापरौ भागौ [4]पीठात् पीनेन पूरयेत् । द्वारकण्ठोपगौ स्थानौ पूरयेत् पीतलेन तु ॥४५
व्योमपीठान्तरं यद्वत् तद्वत् कोणचतुष्टयम् । इत्येतत् कीर्तितं धर्मं **वसुगर्भ**मतश्शृणु ॥ ४६
कृत्वैकादशधा क्षेत्रमेकविंशोत्तरं शतम् । [5]उत्पद्यन्ते ? च भागानां नवभिर्मध्यपङ्कजम् ॥ ४७
मार्जयित्वा तु पीठार्थं पङ्क्त्यैकं साधयेच्च तत् । सूत्रपातविधानेन यथा तदवधारय ॥ ४८
पदद्वयावसाने तु कोणस्थाने निधाय वै । पार्श्वाभ्यां सर्वकोणे तु सूत्रमास्फालयेच्च तत् ॥ ४९
भवन्त्यनेन विधिना दिग्भागाः कर्णिकोपमाः । सीराग्रवच्च कोणानि ततः पङ्क्त्यां तु वीथिका॥
शिष्टपङ्क्तिद्वयेनैव कुर्यात् कमलसम्भव । संशोध्य भागसङ्घं तु द्वारेष्वथ सदध्ववत् ॥ ५१
द्वाराभ्यां मध्यतस्सप्त कोणदेशात्तु शोधयेत् । एकैकं साधयेत् कोणं ततोंशत्रितयेन तु ॥ ५२
कृत्वैवं पूरयेत् पश्चाद्रागेण विविधेन च । प्रशान्ताग्निसमानेन व्योम [6]बाह्यं रजेन तु ॥ ५३
ईश[7]कोणात् समारभ्य सिताद्यैः परिपूरयेत् । तद्व[8]दाप्योत्तरेन्द्रान्त[9]कोणेषु च रजः क्षिपेत् ॥
झषोदरनिभेनैव पीठबाह्यं तु पूरयेत् । द्वाराण्यरुणरक्तेन तयोर्मध्यं सितेन च ॥ ५५
शेषं तु दशपादाहे ? रञ्जयेच्छ्याम[10]लेन च । इत्युक्तं वसुगर्भं ते **सर्वकामप्रदं** शृणु ॥ ५६
क्षेत्रं द्वादशधा कृत्वा [11]तत्सूत्रेण च पौष्कर । सार्धमेकशतं चैव षड्नं जायते ततः ॥ ५७
मध्ये षोडशभिः कोष्ठैः पद्मं कुर्यात् सलक्षणम् । भागपङ्क्त्या तु वै पीठं तस्माद् द्वौ द्वौ तु दिग्गतौ॥
भागौ संशोधितौ ह्येवं त्रीणि त्रीणि तदाऽश्रिषु । भ्रमर्णी मर्दयेत् पङ्क्त्या शेषपङ्क्तिद्वयेन तु ॥
षड्गलोपगलेष्वत्र कोणात् कोणं द्विसप्तकम् । कृत्वैवं पूरयेत् प्राग्वदन्तरं व्योमपीठयोः ॥ ६०
राजोपलनिभेनैव पीठं कोणात् प्रपूरयेत् । तत्कोणमध्यदेशानि हेमाभेन तु रञ्जयेत् ॥ ६१
शुक्लपक्षोपमेनाथ रञ्जयेद्वीथिका द्विज । द्वाराणि स्फटिकाभेन रक्तरागेण वाऽश्रयः ॥ ६२
सर्वकामप्रदं चैवं कृत्वाऽ**मितघ्न**मुच्यते । क्षेत्रं त्रिदशधा कृत्वा भागानां जायते शतम् ॥ ६३
एकोनसप्तत्यधिकमम्बुजं [12]चक्रमध्यतः । कोष्ठकैः पञ्चविंशद्भिः पङ्क्त्या पीठं तु तद्बहिः ॥

---

१. ख—चतुष्कं    २. ख—द्वाराणि द्वित    ३. क-ग—भ्योभयपश्चात्तु
४. ख—पीठान्    ५. ख—उत्पाद्यन्ते    ६. ख—बाह्यान्तरेण
७. क-ग—कोणं समारभ्य    ८. ख—दाप्युत्तरे    ९. क-ग-घ—काशासु
१०. ख—लेन वा    ११. ख—तत्सूत्रेणैव    १२. ख—चाक्र

तत्र तन्मध्यतस्त्रीणि त्रीणि चैवं तथाऽश्रिषु । [1]पदवी तद्बहिः पङ्क्त्यां द्वारादिद्वितयेन तु॥६५
[2]कण्ठं भागत्रयेणैव पञ्चभिश्चोपकर्णिकम् । [3]द्वारोपगस्य मध्यात्तु अष्टौ [4]शोभाद्वये भवेत् ॥
अथ षट्केन षट्केन कुर्यात् कोणचतुष्टयम् । कृत्वैवं व्यञ्जयेद्व्योम बाह्यं रक्तारुणेन तु ॥ ६७
पीठकोणानि सर्वाणि तेन चात्युज्ज्वलेन वा । चाषपक्षसमानेन पैठीयं दिक्चतुष्टयम् ॥ ६८
राजोपलनिभेनैव पूरये[5]द्भ्रमर्णी ततः । द्वाराणि रजताभेन तदन्तः पाण्डरं गुणम् ॥ ६९
व्योमपीठान्तरं यद्वत् तद्वत् कोणमिति स्मृतम् । उक्तमेतदमित्रघ्नमायुष्यमधुनोच्यते ॥ ७०
कृत्वा द्विसप्तधा क्षेत्रं षण्णवत्यधिकं शतम् । उत्पद्यन्तेऽम्शकानां तु कजं षोडश[6]कोष्ठके ॥७१
मध्यतस्तद्बहिः पङ्क्त्यां पद्माधारं प्रकल्पयेत्। तत्र द्वे द्वेऽम्शके दिक्षु त्रीणि त्रीणि [7]तदाऽश्रिषु॥
पङ्क्तिद्वयेन परितस्तद्बहिः पदवी भवेत् । भागपङ्क्तिद्वयेनाथ यच्छिष्टं तत् समापयेत् ॥
द्व्यंशेन [8]द्वारकण्ठं स्याच्चतुर्भिरुपकण्ठकम् । ततः कण्ठसमीपात्तु शोभार्थं त्रीणि शोधयेत् ॥ ७४
उपकण्ठोपगं चैकमेवं शोभाष्टकं भवेत् । मण्डलस्य चतुर्दिक्षु ततः कोणेषु शोधयेत् ॥ ७५
दशकं दशकं विप्र भागानामथ रञ्जयेत् । जातिरिङ्गुलिकाभेन व्योमबाह्यात्तु पूरयेत् ॥ ७६
ततो मरतकाभेन पीठकोणानि रञ्जयेत् । सर्वं रक्तारुणाभेन दिक्सङ्घं परिपूरयेत् ॥ ७७
हेमहेमाभवीथी वा द्वाराणि सुसितानि च । नृपोपलाभेनाश्राणि शोभानि व्योमबाह्यवत् ॥ ७८
एतदायुष्यकं प्रोक्तं **बलभद्र**मतश्शृणु । क्षेत्रं त्रिपञ्चधा कृत्वा कोष्ठकानां शतद्वयम् ॥ ७९
स्यात् पञ्चविंशत्यधिकममित्रघ्नवदाचरेत् । पीठं च पङ्कजं भागैः पङ्क्तया चैवोपपीठकम्॥ ८०
शिष्टैरुपगलं कुर्याच्छोभासङ्घं तु पूर्ववत् । एकैकादशभागानि कोणाच्छोध्यानि पौष्कर ॥ ८१
व्योमाद्यनवसानं तु पाण्डुरक्तेन पूरयेत् । पीठं यादृग्विधो राजा यन्त्रपीठे तथैव च ॥ ८२
दातव्यं विधिना येन तदव्यग्रो ऽवधारय । ईश[9]कोणात् सिताद्यैस्तु चतुर्भिः परिपूरयेत् ॥
रागैस्तु पीठकोणानि पश्चिमादि ततः पुनः । तेनैव दक्षिणाशान्तमुपपीठं तु कथ्यते ॥ ८४
याम्याशादिसिताद्यैस्तु यावत्प्रागवसानतः । भ्रमणीः पाण्डुरक्तेन ततो द्वारचतुष्टयम् ॥ ८५
जाम्बूनदसमानेन पश्चाच्छोभाष्टकं द्विज । क्रमान्मरतकाभेन शिष्टं रक्तगुणेन तु ॥ ८६
स्यादिदं बलभद्रं तु **पौष्टिकं** चाधुनोच्यते । [10]भङ्क्त्वा षोडशधा क्षेत्रमंशकानां शतद्वयम् ॥
षट्पञ्चाशोत्तरं चैव भवेन्मध्येऽथ कल्पयेत् । षट्त्रिंशद्भिस्तु कह्लारं पीठं पङ्क्तिद्वयेन तु ॥८८
द्वौ द्वौ दिङ्मध्यगौ भागौ पञ्च पञ्च तदश्रिषु । लुप्ता तु चोपपीठार्थं भागांश्च परिशोधयेत् ॥

१. **क-ग**—पदपीतं   २. **ख**—कर्णं   ३. **ख**—द्वारोभयस्य
४. **क-ग**—शोभद्ये   ५. **क-ग**—भ्रमण   ६. **ख**—कोष्ठकैः
७. **क-ग**—तदा शृणु   ८. **ख**—द्वारकर्णं स्याच्चतुर्भिरुपकर्णकम्
९. **ख**—कोणाक्षता   १०. **क-ख-ग**—कृत्वा

त्रीणि त्रीणि तु कोणेषु षट्कं षट्कं दिशासु च । मार्गं तु तद्बहिः पङ्क्त्यां द्वारादिद्वितयेन तु ॥
गलोपगलशोभादिद्विचतुस्स्मृतयेक्कम्? । शोभाविपर्ययेणैवमुपशोभां तु तत्समैः ॥ ९१
समीपे चोपशोभस्य षड्भिः कोणं तु मार्जयेत् । एवं शोभाष्टकं विप्र उपशोभाष्टकं तथा ॥ ९२
शोधयित्वा चतुर्दिक्षु रजसा पूरयेत् ततः । पूर्यमाकाशवृत्तस्य बाह्यं रक्तारुणेन तु ॥ ९३
पीठस्य सर्वकोणानि हेमाभेन तु पूरयेत् । पाण्डरारुणरागेण पूरयेद्गात्रकाणि च ॥ ९४
कोणान्यथोपपीठस्य तेनैव परिरञ्जयेत् । तद्गात्रकाणि शुक्लेन तद्बाह्यमसितेन तु ॥ ९५
द्वाराणि सुसितेनैव शोभाश्च व्योमबाह्यवत् । पीतेन चोपशोभानि कोणान्यथ विभूषयेत् ॥ ९६
ब्रह्मन् मरतकाभेन श्यामलेनोज्ज्वलेन च । इत्युक्तं पौष्टिकं यागं [1]वच्म्यारोग्यकसंज्ञकम् ॥
प्राक् सप्तदशधा क्षेत्रं कृत्वांशानां शतत्रयम् । एकादशांशहीनं तु [2]जायते वाऽथ मध्यतः ॥९८
पञ्चविंशतिभिः पद्मं ततः पङ्क्तिद्वयेन तु । कुर्याद्वै पङ्कजाधारं तस्माद्दिक्षु विमर्दयेत् ॥ ९९
पद्मक्षेत्रसमीपात्तु पञ्चैकं तेषु बाह्यतः । भवन्ति शोभातुल्यानि कृत्वैवं गात्रकाणि तु ॥ १००
परितोऽष्टकमंशानां प्रतिकोणं तु मार्जयेत् । भागं पङ्क्ति[3]द्वयं जातं संचारार्थं तु शोधयेत् ॥
द्वयेन द्वारशोभादि ततः कुर्याद्द्विजोत्तम । त्र्यर्धं पञ्चभागानि द्वारात् कण्ठोपकण्ठयोः ॥
शोभोपशोभकोणेषु सैकैकं तु त्रिसप्तकम् । मार्जयित्वा तु रजसा प्रपूर्य विविधेन च ॥ १०३
आकाशपरिधेर्बाह्यं बन्धुजीवनिभेन तु । गोक्षीरपाण्डुरागेण पीठपादं चतुष्टयम् ॥ १०४
गात्रकाण्यथ सर्वाणि राजाश्मसदृशेन तु । चीनपिष्टसमानेन वीथिकां परिरञ्जयेत् ॥ १०५
द्वारादीन् हेमवर्णेन श्यामेनान्तस्सुसंस्थितान् । सितेन चोपशोभानि शेषं रक्तारुणेन तु ॥ १०६
एवमारोग्यकं प्रोक्तं **विवेक**मवधारय । कृत्वाऽष्टदशधा क्षेत्रमंशकानां शतत्रयम् ॥ १०७
जायते वै चतुर्विंशत्यधिकं कमलोद्भव । मध्ये षोडशभिः पद्मं पीठं पङ्क्तित्रयेण तु ॥ १०८
द्विचतुष्कं तु भागानां तत्र वै गात्रकान् प्रति । द्वौ पद्मक्षेत्रनिकटात् पङ्क्तौ दिङ्मध्यतस्ततः ॥
चत्वारि मध्यपङ्क्तौ द्वौ बाह्यपङ्क्तौ यथान्तरम् । कृत्वैवं गात्रकगणं ताभ्यां मध्यान्तरे ततः ॥
त्रयोदशांशकेनैव पादं कुर्याद्विचक्षणः । सप्तकं बाह्यपङ्क्तौ तु मध्यपङ्क्तौ तु [4]चांशकम् ॥१११
एकीकृत्वा ततो भागैर्बिम्बं कुर्यात्तु पञ्चभिः । ईषत्तद्गात्रकाकारं यथा पङ्क्तिद्वयात्ततः ॥११२
कुर्यात् संचारमार्गं तु शिष्टं पङ्क्तिद्वयात्तु वै । दशकं दशकं ब्रह्मन् प्रतिकोणं तु मार्जयेत् ॥
शेषाच्छोभोपशोभानि भागैर्द्वाराणि कारयेत् । प्रपूर्य कर्णिकाश्चातो यथा कृत्स्नैश्च तच्छृणु ॥
दाडिमीपुष्पतुल्येन पीठदेशादनन्तरम् । गात्रकाणि सितेनैव लिम्पकान्यसितेन तु ॥ ११५
पद्मरागोपमेनैव कोणं भागाष्टजं तु? यत् । राजोपलनिभेनैव पीठाद्बाह्यं प्रपूरयेत् ॥ ११६

---

१. क-ग—वच्मि आरोग्यसंज्ञकम्  २. ख—जायते चाथ
३. ख—द्वये जात पञ्चारार्थं  ४. ख—चाष्टकम्

सितादिना चतुष्केण द्वाराद्यं यच्चतुष्टयम् । उक्तमेतद्विवेकाख्यं **वागीश**मधुनोच्यते ॥ ११७
भागैरेकोनविंशद्भिः क्षेत्रं कृत्वा तु जायते । शतत्रयं त्वंशकानामेकषष्ट्यधिकं द्विज ॥ ११८
कमलं पञ्चविंशद्भिः पीठं पङ्क्तित्रयेण तु । प्राच्यारभ्योत्तराशान्तं तस्माद्वै सप्तकं क्रमात् ॥
एकांशमाद्यपङ्क्तौ तु तथा तत्पञ्च मध्यतः । एकांशेन तृतीयेन संयुक्तं चाथ साधयेत् ॥१२०
ततोऽश्रिनिचयं सर्वं शेषेणांशगणेन तु । पद्मक्षेत्रोपगात् कोणात् पूर्वपङ्क्तौ तु पञ्चकम् ॥
मर्दयित्वाऽथ भागानां द्विषट्कं द्वितयात्तु वै । द्वितयेन [1]भवेद्वीथी द्वाराविद्वितयेन तु ॥ १२२
ग्रीवांशं तत्र येनैव पञ्चभिश्चोपकण्ठकम् । [2]दशांशेन तु कोणानि शेषैश्शोभादयस्तथा ॥१२३
ततो रक्तोज्ज्वलेनैव बाह्यं पूर्यं खमण्डलात् । अन्तराण्यथ पादानां हेमाभेन प्रपूरयेत् ॥ १२४
सर्वं मरतकाभेन प्रागाद्यं दिक्चतुष्टयम् । प्रभान्ताभिज्वलेनैव ? पादशेषं प्रपूरयेत् ॥ १२५
द्विरेफरूपरागेण गममार्गं तु रञ्जयेत् । सितरक्तारुणेनैव हेमहिंगुलिकं क्रमात् ॥ १२६
चतुष्टयं [3]चतुर्द्वारात् पूरणीयं तु पौष्कर । इदमुक्तं च वागीशं **मानसं** कथयामि ते ॥ १२७
क्षेत्रं [4]द्वादशधा कृत्वा भवेच्छतचतुष्टयम् । भागं तत्रैव यन्मध्ये षट्त्रिंशद्भिः कजं लिखेत् ॥
बाह्यपङ्क्तित्रयेणाथ तदाधारं तु [5]लोपयेत् । द्वौ [6]पद्मक्षेत्रनिकटाद् द्वौ बाह्यं मध्यतश्चतुः ॥
दिङ्मध्याद्गात्रकाणां तु लोपयेच्चरणान्वितः । भागाष्टादशकेनैव सांशेनात्रावधारय ॥ १३०
गात्रकाभ्यां समीपं तु त्रीण्येकं त्रितयं पुनः ? । मीलयेद्बहिरारभ्य सांशषट्कद्वयं तथा ॥ १३१
बाह्यमध्यस्थपङ्क्तिभ्यां मीलयेदंशकाच्च षट् । मार्जयेत् पूर्ववद्वीथीं बाह्यपङ्क्तिद्वयेन तु ॥ १३२
शेषं स्यात् तत्प्रमाणेन तत्र संवेशनं तु षट् । कण्ठोपकण्ठयोर्ब्रह्मन् षट्कषट्कं तथा शृणु ॥
शिष्टे शोभाद्वयं कुर्यात् तदेकं चोपशोभनम् । मध्यतो द्वारकोणाभ्यां रजसा पूरयेत्ततः ॥ १३४
पीठाद्यं तु [7]भूभागं चीनपिष्टनिभेन च । गात्राणि च सुपीतेन [8]तासामभ्यन्तरं तु यत् ॥
[9]द्वादशांशैकसंभूतं वैडूर्यसदृशेन तु । तदन्तरं षडंशोत्थं पूरयेत् सुसितेन च ॥ १३६
रक्तारुणेन भ्रमर्णो शुक्लेन द्वारसन्ततिम् । द्वारोपगानि शोभानि रञ्जयेद्व्योमबाह्यवत् ॥ १३७
हेमाभेनोपशोभानि शोभान्यन्यानि पौष्कर । झषोदरसमानेन शेषं स्यात् पूर्वशोभवत् ॥ १३८
इत्युक्तं मानसं यागं **जयाख्य**मपरं शृणु । एकविंशतिभिर्भागैः क्षेत्रं कृत्वा तु जायते ॥ १३९
सार्धं शतं चतुर्णां तु भागानां नवभिर्विना । पङ्कजं पञ्चविंशद्भिः पङ्क्त्या पीठं तु तद्बहिः ॥
चतुर्दिक्षु ततो ब्रह्मंस्त्रीणि त्रीणि तु लोपयेत् । भागानि गात्रकाणां तु तथैव हि तदश्रिषु ॥
तद्बहिश्चोपपीठं तु कुर्यात् पङ्क्तित्रयेण तु । तस्मात् सप्तदशांशानि शोध्यानि प्रतिगात्रकान् ॥

---

१. क-ग—भवेद्वायु ? २. ख—दशकेन तु ३. ख—च द्वाराद्यं
४. द्विगुणितदशधा इत्यर्थः ५. ख—लेपयेत् ६. क-ग—पत्रक्षेत्र
७. ख—भूभागात् ८. ख-ग—ताभ्या ९. ख—द्वादशैकांश

तृतीयं मध्यपङ्क्तौ तु सप्तकं सप्तकं पुनः । आद्यन्तपङ्क्तिद्वितयाच्चरणान्यधिकल्पयेत् ॥ १४३
एकैकं मर्दयेत् [1]कोणं ब्रह्मन् भागास्त्रयोदश । कृते पादगणे कुर्याद्वीथिकां द्वितयेन तु ॥१४४
द्वितीयेनाथ [2]विंशादीन् षट्कं षट्कं तदश्रिषु । द्वारं भागाष्टकेनैव शेषैश्शोभादयोंशकैः ॥ १४५
कृत्वैवं रञ्जयेत् पश्चादथ तच्छृणु पौष्कर । खवृ[3]त्तादवसानं यत् तत् कुर्यात् पाण्डरोज्ज्वलम् ॥
प्राक्पीठपादसङ्घं तु गोक्षीरधवलोपमम् । तस्मान्मरतकाकारं दिङ्मध्यस्थं चतुष्टयम् ॥ १४७
गात्रकाण्युपपीठस्य [4]तत्समाभेन पूरयेत् । भिन्नसत्पद्मरागेण रूपेण चरणात् ततः ॥ १४८
बाह्यं वैडूर्यवत् पीठात् तद्बाह्यात् कोणसन्ततिम् । रुक्माभेन तु संपूर्य ततो रक्तारुणेन तु ॥
प्रपूर्य [5]चोपशोभानि तन्मध्यानि सितेन तु । भग्नगोरोचनाभेन द्वाराणि परिरञ्जयेत् ॥ १५०
इदमुक्तं जयं नाम साम्प्रतं **स्वस्तिकं** शृणु । द्विरेकादशधा क्षेत्रं कृत्वा संजायते द्विज ॥ १५१
चतुराशीतिभिर्भागैरधिकं तु चतुश्शतम् । तत्र [6]मूर्त्यासनं मध्ये षट्त्रिंशद्भिस्तु कोष्ठकैः ॥
भागपङ्क्तिचतुष्केण तदाधारं प्रकल्पयेत् । ततो गात्रकसिद्ध्यर्थं मध्यतो दिक्षु लोपयेत् ॥ १५३
चतुरभ्यधिकान् विंशदंशकान् कमलोद्भव । पद्मक्षेत्रसमीपात्तु पङ्क्त्या भागं चतुष्टयम् ॥ १५४
ततो द्वितीयपङ्क्तौ तु [7]द्वितीयं परिशोधयेत् । एवमंशकबिम्बं च कृत्वा द्वारोपमं भवेत् ॥१५५
[8]तत्र तृतीयपङ्क्तौ तु लोपयेदंशकद्वयम् । चतुष्टयं तु तद्बाह्याल्लोपयेत् पूर्वबिम्बवत् ॥ १५६
द्वावेवैतादृशं कुर्याच्छिष्टेनांशगणेन तु । [9]तिर्यग्गतौ गात्रभाजौ द्वारबन्धाकृतिं द्विज ॥ १५७
ततः पादचतुष्कं तु यथा कुर्यात् तदुच्यते । एकैकं षोडशांशेन चरणं गात्रकाकृतिम् ॥ १५८
किन्तु तद्बिम्बमेकैकं चतुर्भागान्वितं भवेत् । द्वौ बिम्बौ द्वारसदृशौ पीठात् प्राग्दिशि संस्थितौ ॥
एवमीशानदिक् प्रोक्तं संस्पर्शं तं तु लोपयेत् । द्वितीयं हुतभुक्कोणादारभ्य परिमार्जयेत् ॥ १६०
तत्तु पश्चिमदिक्कुर्याद्द्वौ बिम्बौ पादसंश्रिते । [10]समन्वयात्तु सामीरकोणयोरादितो द्विज ॥१६१
द्वे द्वे बिम्बे ह्युदग्याम्ये कुर्यात् त्यक्त्वा परं पदम् । ईशानात्त्वग्निवायव्यकोणेषु कमलोद्भव ॥
[11]संमुखं गात्रकाभ्यां तु द्वितीयं बिम्बकद्वयम् । भवत्यनेन विधिना शोधितेनाब्जसंभव ॥ १६३
स्वस्तिकाष्टकसंयुक्तं कृत्वैवं कमलासन । बाह्ये सञ्चारमार्गं तु बाह्यपङ्क्तिद्वयेन च ॥ १६४
शेषं पङ्क्तिद्वयेनैव यथा कुर्यात् तदुच्यते । कण्ठोपकण्ठसंयुक्तं द्वारं षड्भागनिर्मितम् ॥ १६५
चतुर्भागयुतं कुर्या[12]च्छोभं द्वारसमीपकम् । शोभोपग[13]मुपद्वारं [14]भागषट्केन पूर्ववत् ॥१६६
उपद्वारसमीपे तु भूयश्शोभं तथाविधम् । कोणं कुर्यात् षडंशेन लसुवं परिपूरयेत् ॥ १६७

---

१. क-ग—कोणान्   २. क-ग—विशापट्   ३. क-ग—त्ताचसपानं
४. ख—तत्समाने प्र   ५. क-ग—वर्णशोभानि   ६. ख—मुख्यासनं
७. ख—द्वितीयां   ८. ख—ततस्तृतीय   ९. ख—तुर्यं गतौ   १० ख—समं कुर्यात्तु
११. ख—समं खं   १२. ख—च्छोभां द्वार   १३. क—मुपचार   १४. ख—भागं पट्कोण

पाण्डुरक्तेन रजसा व्योमाख्यपरिधेः परम् । संमुखे मध्यसूत्राणां द्वे बिम्बे गात्रकाश्रिते ॥ १६८
रम्ये मरतकाभेन तद्वद्रक्तारुणेन तु । तिर्यग्गते तु तद्बिम्बे सर्वगात्रेष्वयं [1]क्रमः ॥ १६९
चतुर्बिम्बान्वितानां तु चरणानामथ क्षिपेत् । तुल्यं चतुर्विधाकारं पाद्भेदेन यथास्थितम् ॥ १७०
ईशकोणगते पादे प्राग्बिम्बे पाण्डरारुणम् । सितं याम्येऽथ राजाश्मसदृशं चैव पश्चिमे ॥ १७१
हेमाभं चोत्तरे बिम्बे त्वथाग्नेयपदे शृणु । पूर्वस्यामरुणं तादृक् पीतं कृष्णं सितं क्रमात् ॥ १७२
याम्याप्यसौम्यदेशेषु रक्षापादेऽथ वक्ष्यते । प्रागादौ चोत्तरान्तं च कृष्णपीतारुणैस्सितैः ॥ १७३
तद्बिम्बेन यमापूर्य? वच्मि पादेऽथ मारुते । ऐन्द्रात् कौबेरपर्यन्तं शुक्लकृष्णारुणा परैः ॥१७४
रा[ग]ैर्बिम्बगणं सर्वमेवं पीठं प्रपूर्य च । वीथिका षट्पदाभेन द्वारं शुक्लेन पूरयेत् ॥ १७५
शोभा रक्तारुणेनैव पीतेन तदनन्तरम् । कोणोपद्वारमध्यस्थं शोभं श्यामेन रञ्जयेत् ॥ १७६
निर्धूमाग्निसमानेन कोणं [2]रागेण पूरयेत् । स्वस्तिकाख्यमिदं प्रोक्तम**अनन्तं** कथयामि ते ॥१७७
त्रयोविंशतिभिर्भागैः क्षेत्रं कृत्वा भवेद्द्विज । शतानि पञ्चभागानां विंशद्भिस्तु नवाधिकैः ॥ १७८
संयुक्ता चांशकैर्मध्ये पञ्चविंशतिभिः कजम् । पीठं पङ्क्तित्रयेणैव [3]पङ्क्त्यैका चोपपीठिका ॥
सप्तकं चैव भागानां संशोध्यं प्रतिगात्रकान् । दिक्षु स्यात् पूर्वपङ्क्तौ तु [4]भागैकं पञ्च मध्यतः ॥
तद्रूपपङ्क्तावेकांशं ततस्सप्तदशांशकैः । एकैकं साधयेत् पादमुपपीठं तथोच्यते ॥ १८१
पञ्चकं पञ्चकं दिक्षु कोष्ठकानां तु मार्जयेत् । विदिक्षु परिसंशोध्य सप्तकं सप्तकं ततः ॥ १८२
पङ्क्तिद्वयेन भ्रमणीं द्वारादौ स्थितयेन तु । तत्र ग्रीवमथ त्रीणि उपकण्ठात्तु पञ्चकम् ॥ १८३
आधारमुपकण्ठस्य सप्तसप्तांशेन तद्बहिः । शोभं द्वारोपगं कुर्यान्नवभिः कण्ठगैर्द्विज ॥ १८४
तत्राधारोपगं भागमुपकण्ठोपगा[5]स्त्रयः । [6]पञ्चांशान्युत्तरात् पङ्क्तौ ग्रीवादेशात्तु मर्दयेत् ॥
सप्तविंशत्यथांशानि कोणदेशाद्विशोधयेत् । कृत्वैवं रागजालेन पूरणीयं समन्ततः ॥ १८६
पद्मरागारुणेनैव क्षेत्रं पीठान्तरं स्थितम् । जातरूपोज्ज्वलेनाथ पीठपादचतुष्टयम् ॥ १८७
तुषारसदृशेनैव पूरयेद्गात्रकाण्यतः । गात्रकाण्युपपीठस्य राजाश्मसदृशेन तु ॥ १८८
प्रफुल्लकिंशुकाभेन चरणान्यस्य रञ्जयेत् । श्वेतेन गममार्गं तु द्वाराणि व्योमबाह्यवत् ॥ १८९
शरदाकाशसंकाशमुपशोभोपगं तु तत् । पाण्डरारुणरागेण कोणजालं विभूषयेत् ॥ १९०
अनन्तसंज्ञमित्युक्तं **नित्याख्यमवधारय** । कृत्वा द्वादशधा क्षेत्रं द्विधा कृत्वा तु तत्पुनः ॥
शतानि पञ्चभागानां षट्सप्तत्यधिकानि तु । भवन्ति कमलं कुर्यान्मध्ये षट्त्रिंशकांशकैः ॥
पीठं पङ्क्तिचतुष्केण तस्य द्वे द्वे तु मध्यतः । दिक्षु चाद्यन्तपङ्क्तिभ्यां तद्वन्मध्याच्चतुश्चतुः ॥
पङ्क्तिद्वयात्तु संशोध्यमेवं स्याद्गात्रकं द्विज । द्वादशांशकसंयुक्तं ततः पादं तु साधयेत् ॥ १९४

---

१. ख—क्रमात्    २. क—रागेषु    ३. क-ग—पङ्क्तैकावोप
४. ख—भागैकः    ५. क-ग—स्त्रियः    ६. क-ग—पञ्चांशात्युत्तरात्

अष्टाविंशतिभिर्भागैस्सुतनुं सुमनोरमम् । पद्मक्षेत्रोपगात् कोणात् पूर्वपङ्क्तौ तु पञ्चकम् ॥
द्विषट्कं मध्यपङ्क्तिभ्यामेकीकृत्य पृथक् ततः । संशोध्यैकादशांशानि बाह्यात् पङ्क्तौ क्रमेण वै॥
संपाद्य चरणान्येवं वीथीं पङ्क्तिद्वयेन तु । तृतीयेनावशिष्टं यत् कार्यं तच्छृणु पौष्कर ॥ १९७
द्वे चतुष्षट्क्रमेणैव [1]द्वारं कण्ठादितो भजेत् । एकांशं त्रीणि पञ्चातो बहिरारभ्य मार्जयेत् ॥
शोभस्स्याद् द्वारनिकटे त्वेवं रम्यं ततोऽब्जज । चतुर्भागान्वितेनैव कुर्याच्छोभोपशोभके ॥ १९९
ज्येष्ठशोभासमीपात्तु बाह्यं पङ्क्तिद्वयं तु वै । ततस्सप्तदशांशानि प्रतिकोणं तु लोपयेत् ॥२००
रजसा पूरयेत् पश्चाद्यथा तच्छृणु पौष्कर । तच्छोणितारुणं दद्याद्व्योमबाह्ये [2]रजोत्तमे ॥ २०१
जात्या हिंकुलिकाभेन गात्रकाणि विभूषयेत् । सितासितेन पीतेन [3]त्वन्तराद्यं पदन्तिमम् ॥२०२
भागात् प्रपूर्य पादानां वीथी रत्नोज्ज्वलेन तु । द्वारान्तृपोपलाभेन शोभां पीतेन पूरयेत् ॥२०३
तत्पार्श्वोत्थमुपशोभं कुर्यान्मिरतकप्रभम् । कोणोपगं तु यच्छोभं विद्धि तत् [4]पाण्डरोज्ज्वलम् ॥
कोणं सुधासमाभेन रजसा [5]राजते यथा । इत्युक्तं नित्यसंज्ञं तु **भूतावास**मतश्शृणु ॥ २०५
पञ्चविंशतिभिर्भागैः क्षेत्रं कृत्वा तु जायते । षट्शतान्यंशकानां तु पादयुक्तानि मध्यतः ॥
एकोनेन शतार्धेन विलिख्य कमलं शुभम् । पीठं पङ्क्तिचतुष्केण पादगात्रकभूषितम् ॥ २०७
चतुर्विंशतिभिर्भागैर्बिम्बैः पञ्चभिरन्वितम् । विचित्रगात्रकं कुर्यात् तत्र भागानि लोपयेत् ॥
चतुर्थपूर्वपङ्क्तिभ्यामेकैकांशं दिगन्तरे । त्रीणि त्रीणि तु भागानि मध्ये पङ्क्ति[6]द्वयाद् द्विज ॥
एवमष्टांशजं बिम्बं प्रथमं गात्रकस्य तु । चतुरंशकयुक्तानि [7]कुर्यात् तिर्यग्गतानि तु ॥ २१०
चत्वारि यस्य बिम्बानि शोभाकाराणि [8]वै ततः । त्रीणि त्रीण्याद्यपङ्क्तौ तु पद्मक्षेत्रस्य बाह्यतः ॥
द्वितीयपङ्क्तावेकैकमेवं बिम्बद्वयं भवेत् । तत्र तृतीयपङ्क्तौ तु एकैकांशं तु लोपयेत् ॥ २१२
त्रीणि त्रीणि चतुर्थायां मार्जनाद्गात्रकं भवेत् । द्वादशेनांशकानां तु पादं पादमतः परम् ॥२१३
तत्रैकांशं ततः पञ्च सप्तकं सप्तकं पुनः । आरभ्य पूर्वपङ्क्तौ तु मार्जयेद्यावदन्तिमम् ॥ २१४
सञ्चारपदवीं कुर्याद्भागं पङ्क्तिद्वयेन तु । त्रितयं [9]चावशिष्टं यत् तत्र पञ्चदशांशजम् ॥
द्वारं कुर्यात्तु वै पूर्वं त्रीणि ग्रीवावधौ मृजेत् । उपकण्ठात्तु वै पञ्च द्वाराधारं तु सप्तकम् ॥
तत्समीपे ततः कुर्याच्छोभास्थानं तु मार्जयेत् । पञ्च त्रीणि तथैकांशं कण्ठदेशादितः क्रमात् ॥
एवमेवोपशोभं तु कुर्यात् तद्विपरीतवत् । ततः पञ्चदशांशानि शोध्यान्यश्रिस्थितानि च ॥
लुप्त्वैवं रञ्जयेद्रागै रमणीयैरथेदृशैः । क्षेत्रपीठान्तरस्थं तु कुर्याद्वै पाण्डरोज्ज्वलम् ॥ २१९
गात्रकाणां सितं कुर्यान्मध्यस्थां बिम्बसन्ततिम् । पद्मक्षेत्रसमीपस्थे तद्विवे नृपशैलवत् ॥ २२०

---

१. ख—द्वारात् २. ख—रजोत्तमम् ३. 'त्वन्तराद्यावदन्तिमम्' इति स्यात्
४. क-ग—पाण्युरोज्वलं ५. क-ग—रञ्जते ६. ख—द्वयं
७. ख—कुर्यादुपगतानि ८. क-ग—सप्तमः ९. क-ग—चापि शिष्टं

रक्तोज्ज्वलेन रागेण बाह्यबिम्बद्वयं तु तत् । हेमाभेनैव [1]पादं तु वीथिकां रञ्जयेत् ततः ॥
सर्वं मरतकाभेन द्वाराणि व्योमबाह्यवत् । पादवच्चोपसंकाशं कोणं गात्रकमध्यवत् ॥ २२२
भिन्नाञ्जनसमप्रख्यमुपशोभगणं च यत् । भूतावासमिदं प्रोक्तममोघमधुनोच्यते ॥ २२३
प्राक् [2]त्रयोदशधा क्षेत्रं कृत्वा तद्विभजेद्द्विधा । षट्शतान्यंशकानां तु षट्सप्तत्यधिकानि तु ॥
उत्पद्यन्ते ततो मध्याच्चतुष्षष्ट्यंशकैः कजम् । पीठपङ्क्तिचतुष्केण चित्रगात्राङ्घ्रिभूषितम् ॥
अष्टाविंशतिभिर्भागैराद्यं मध्यं तु गात्रकम् । तत्राद्यन्तस्थपङ्क्तिभ्यां द्वौ द्वौ दिङ्मध्यतोंशकम् ॥
मध्यपङ्क्ति[3]द्वयात्तद्वद् द्विद्विकं द्विद्विकं पुनः । एवं द्वादशभागोऽयं मध्ये बिम्बं भवेच्छुभम् ॥
तस्य चोभयपार्श्वात्तु पद्मक्षेत्रसमीपतः । द्वौ द्वौ भागौ तु संशोध्यौ मध्यपङ्क्तिद्वयाच्च तु ॥
द्वौ भागौ बाह्यपङ्क्तौ तु एकीकृत्य तु पौष्कर । एकैकमष्टभागे तु एवं बिम्बद्वयं भवेत् ॥
विंशत्यंशकजं पश्चात् पादं कुर्याद् द्विबिम्बकम् । पद्मक्षेत्रस्य बाह्यात्तु मार्जयेदंशकानि षट् ॥
पादबिम्बं भवत्येकं तद्व[4]हिस्स्थावरं भवेत् । चतुर्दशांशकोद्भूतं वीथी पङ्क्तिद्वयेन तु ॥ २३१
कण्ठादीनि ततो बाह्ये कुर्यात् पङ्क्तित्रयेण वै । द्वे चतुष्पट् तथांशानि क्रमाद् द्वारं गलादितः ॥
कुर्याद्द्वारसमीपेऽथ प्राग्वच्छोभं नवांशकम् । उपशोभं तथा कुर्याच्छोभस्य निकटे द्विज ॥ २३३
ततोंशकचतुष्केण सूक्ष्मशोभं प्रकल्पयेत् । समीपे ह्युपशोभस्य द्वन्द्वं पङ्क्तिद्वयात्तु वै ॥ २३४
ततस्त्रयोदशांशेन कोणं कुर्यात्तु पौष्कर । आदिमध्यात् षडंशानि बाह्यपङ्क्तौ तु सप्तकम् ॥
एकीकृत्य स्वरजसा प्रपूर्य विविधेन तत् । कमले भूमिभागे तु प्रदद्यात् पाण्डरोज्ज्वलम् ॥ २३६
मध्यबिम्बे तु गात्राणां हेमाभं तु रजः क्षिपेत् । शेषं गात्रकभागानि नीलनीरजपत्रवत् ॥
चरणान्तरसंस्थानि बिम्बानि सुसितेन च । रक्तोज्ज्वलेन तद्बाह्यं परितः परिपूरयेत् ॥ २३८
वीथीं मरतकाभेन द्वारं शुक्लेन पूरयेत् । शोभं रक्तोज्ज्वलेनैव हेमाभेनोपशोभकम् ॥ २३९
संपूर्य सूक्ष्मशोभं तु वैडूर्यसदृशेन तु । पाण्डरोज्ज्वलरागेण कोणं यत्तदुपस्थितम् ॥ २४०
इदमुक्तममोघं ते सुप्रतिष्ठमतश्शृणु । सप्तविंशतिभिर्भागैः क्षेत्रं कृत्वा तु जायते ॥ २४१
शतसप्तकमंशानां संयुक्तं [5]चैव पौष्कर । एकोनत्रिंशदंशैस्तु मध्ये पद्मं प्रकल्पयेत् ॥ २४२
एकाशीत्यंशकैः पीठं पङ्क्तिद्विद्वितयेन तु । द्वात्रिंशदंशकांस्तत्र गात्रकान् परिमार्जयेत् ॥ २४३
तत्राद्यन्तस्थपङ्क्तिभ्यां त्रीणि त्रीणि दिगन्तरात् । तथा च मध्यपङ्क्तिभ्यां भागं भागं तु लोपयेत् ॥
बिम्बं स्याद्गात्रकस्यैवमाद्यं चाष्टपदान्वितम् । भागे द्वादशकेनाथ द्वे बिम्बे तदुपस्थिते ॥ २४५
तदर्थमन्तरादिभ्यां द्वौ द्वौ पङ्क्तिद्वयं मृजेत् । तत्रैव मध्यपङ्क्तिभ्यामष्टकं लोप्य मीलयेत् ॥
कृत्वैवं [6]गात्रकं कुर्यात् पादं विंशतिभिः पदैः । बिम्बं पादे भवत्याद्यं यथा तदवधारय ॥ २४७

१. ख—तत्पाद २. द्विधा त्रयोदशधा पड्विंशतिधेत्यर्थः ३. ख—द्वयाच्चैतद्
४. ख—ग—हिष्ठावर ५. क-ग-घ—नैव पौष्कर ६. क-ग—भागकं

कोणावधौ कजक्षेत्रात् समारभ्य तु लोपयेत् । त्रितयं त्रितयं ब्रह्मन् क्रमात् पङ्क्तित्रयात्तु वै ॥
पादबिम्बं भवेदाद्यं नवांशकविनिर्मितम् । द्वितीयबिम्बसिद्ध्यर्थं [1]कोणान्येकादशानि तु ॥२४९
बाह्यपङ्क्तिद्वयं शोध्य द्वितीयं नवकं क्रमात् । पङ्क्तिद्वयेन भ्रमणीं शेषं पङ्क्तित्रयेण तु ॥
कण्ठादित्रितयं चारात् पञ्चकं सप्तकं पुनः । द्वारस्य निकटे प्राग्वच्छोभं कुर्यान्नवांशकम् ॥
समीपे त्वथ शोभस्य उपद्वारं प्रकल्पयेत् । द्वे चतुष्षट् च भागांस्तु तस्मात् कण्ठादितो मृजेत्॥
पञ्चांशकं ततः कोणात् पङ्क्तौ पङ्क्तौ तु मार्जयेत् । कृत्वैवं रञ्जयेत् पश्चाद् रागैरब्जसमुद्भव॥
पद्मपुष्करिणीमध्ये निक्षिपेत् पाण्डरोज्ज्वलम् । मध्यबिम्बानि गात्राणां रजसा सुसितेन तु ॥
[2]रक्तोज्ज्वलेन शेषाणि तद्बिम्बान्यथ रञ्जयेत् । ततो मरतकाभेन बिम्बं पादान्तरस्थितम् ॥ २५५
तपनीयोज्ज्वलाभेन तद्बाह्यं परिपूरयेत् । शरद्गगनसंकाशं सदृशेनाथ वीथिकाम् ॥ २५६
द्वारं कुन्देन्दुतुल्येन शोभां चम्पक[3]पुष्पवत् । सुसम्पूर्यमुपद्वारं चामीकरनिभेन तु ॥ २५७
कोणं झषोदराभेन शुक्लपक्षोपमेन च । सुप्रतिष्ठमिदं प्रोक्तं **बुद्ध्याधार**मथोच्यते ॥ २५८
विभज्य सप्तधा क्षेत्रं तं चतुर्थं विभज्य च । शतानि सप्त जायन्ते भागानामधिकेन तु ॥ २५९
चतुराशीतिभिर्भागैः[4]मध्यपद्मं शतेन तु । बहिः पङ्क्तिचतुष्केण पीठं कुर्यात् सुलक्षणम् ॥२६०
[5]त ... कं गात्रकं स्यादष्टाविंशतिभिः पदैः । बिम्बत्रयान्वितं [6]तस्य मध्यतो दिक्षु लोपयेत् ॥
द्वौ द्वावाद्यन्तपङ्क्तिस्थौ मध्यस्थाभ्यां चतुश्चतुः । मध्यबिम्बं द्विषट्कोणभागानामेवमुद्धरेत् ॥
तस्य पार्श्वद्वये कुर्याद्बिम्बेऽष्टांशकसंयुतम् । ताभ्यामाद्यन्तपङ्क्तिभ्यां त्रीणि त्रीणि विशोधयेत्॥
एकैकमन्तरस्थाभ्यां दत्तं पादं तु तत्समैः । शोभा द्वे बिम्बवत् कुर्याद्यथा तदवधारय ॥ २६४
पद्मक्षेत्राश्रिनिकटादारभ्य परिमार्जयेत् । त्रीणि त्रीणि तु भागानि प्रतिपङ्क्ति[7]त्रयं द्विज ॥२६५
एकीकृत्य नवांशं स्यादेकं प्राक् [8]पदबिम्बकम् । एकोनविंशत्यंशानि तद्बाह्यात् परिमार्जयेत् ॥
आद्यपङ्क्तौ विना ब्रह्मन् शेषात् पङ्क्तित्रयात्तु वै । द्वितीयपादबिम्बार्थं [9]तद्वीथ्यर्थमतः परम् ॥
पङ्क्तिद्वयं मार्जनीयं शेषं पङ्क्तित्रयेण तु । द्वे चतुष्षट् च भागानि दिक्प्रदेशात् क्रमेण तु ॥
शोभोपशोभौ द्वौ कुर्यात् पूर्ववन्नवभागजम् । बिम्बपञ्च ? ततः कोणं सप्तविंशपदोत्थितम् ॥
कुर्याद्यथा [10]तद्गमतौ ममाप्यग्रेऽवधारय । समीपेऽभ्युपशोभाभ्यां द्वौ शोभौ भागवर्जितौ ॥
संमार्ज्योन्मीलयित्वा च बिम्बं तु प्रथमं भवेत् । सप्तादशपदाद्भूतं बाह्याद्बिम्बं तु शोभयेत् ॥
त्रीणि द्वितीयपङ्क्तौ तु सप्तगं बाह्यपङ्क्तिगम् । लुप्त्वैवं रागजालेन विभागोत्थेन पूरयेत् ॥
कह्लारपरिधेर्बाह्यमादौ रक्तोज्ज्वलेन तु । मध्यभिम्बं तु गात्राणां विधेयं पाण्डरोज्ज्वलम् ॥२७३

---

१. ख—कोष्ठान्येका २. क—रक्तोज्ज्वलानि ३. ख—पुष्पकैः ४. क—मध्ये पद्मं
५. ख—तदे…कं ग—तद्येकं ६. ख—तस्यां ७. क-ग—त्रयाद् द्विज
८. ख—पादबिम्बकम् ९. तद्द्वितीयमतः १०. सर्वत्र "तद्गमतौ" इत्येवास्ति

तद्बिम्बद्वितयं कुर्यात् सितं गोक्षीरपाण्डरम् । अन्तरा पादबिम्बं तु कुर्यान्मरतकप्रभम् ॥ २७४
बहिस्स्थं जातरूपाभ्यां [१]वीथी राजोपलप्रभा । सुधासमानि द्वाराणि शोभानि कजबाह्यवत् ॥
पादबाह्यसमानानि [२]तूपशोभानि सत्तम । पादाभ्यन्तरतुल्यानि कोणेष्वभ्यन्तराणि च ॥ २७६
गात्रमध्यसमास्सर्वा बाह्यतो मण्डलाश्रयः । बुद्ध्याधारमिदं प्रोक्तं **गुणाकर**मथोच्यते ॥ २७७
[३]एकोनेन त्रिदशधा क्षेत्रं कृत्वा तु जायते । शताष्टकं तु भागानामेकचत्वारिभिः पदैः ॥ २७८
त्रिसप्तकाधिकेनैव शतेनैव तु पङ्कजम् । पद्मक्षेत्रं समारभ्य द्विद्विपङ्क्तिष्वथासनम् ॥ २७९
[४]तस्मिन् वै गात्रकं कुर्याच्चत्वारिंशत्पदे स्थितम् । पञ्चबिम्बान्वितं रम्यं तदर्धं दिक्षु लोपयेत् ॥
आद्यन्तपङ्क्तिद्वितयात् कोष्ठकानां त्रयं त्रयम् । एकैकं मध्यपङ्क्तिभ्यामेवमष्टपदोत्थितम् ॥
गात्रकं मध्यबिम्बं स्यात् शेषाण्यष्टपदान्यपि । तत्पार्श्वस्थानि कार्याणि यथा तच्छृणु पौष्कर ॥
समीपं मध्यबिम्बस्य आद्यन्ताभ्यां तु मार्जयेत् । भागं भागं द्विजश्रेष्ठ त्रीणि त्रीणि तदन्तरात् ॥
तस्य [५]बिम्बद्वयस्याथ [[६]बहिरन्यद् द्वयं भवेत् । प्रागुत्तराभ्यां बिम्बाभ्यां निकटात् परिमार्जयेत् ॥
द्वौ द्वावाद्यन्तपङ्क्तिभ्यां तद्वन्मध्यस्थितद्वयात् । एवं गात्रद्वयं कृत्वा] चरणान्यथ साधयेत् ॥
द्विबिम्बद्वादशोत्थं तु द्विबिम्बचरणं द्विज । कजक्षेत्राश्रिनिकटात् [७]तदर्धं भागपञ्चकम् ॥ २८६
पङ्क्तिद्वयात्तु संशोध्यं प्राक् पङ्क्तौ त्रितयं [८]ततः । पदद्वयं द्वितीये [[९]स्याद् बिम्बमाद्यं स्फुटं भवेत् ॥
ततः पञ्चदशांशानि तद्बाह्यं परिशोधयेत् । द्वितीयपङ्क्तावेकांशं तृतीयेंशं तु पञ्चकम् ॥ २८८
नवांशानि चतुर्थायां वीथ्यौ] पङ्क्तिद्वये ततः । तृतीयेनावशिष्टं यत् तत्र द्वारं गले त्रयम् ॥
पञ्चपञ्चोप[१०]कण्ठं तु तदाधारात्तु सप्तकम् । पूर्वपङ्क्तावुपस्थं च शोभं कुर्यान्नवांशजम् ॥
तदुपस्थमुपद्वारं तत्र [११]कण्ठपथे द्वयम् । चत्वारि चोपकण्ठात्तु षट्कं तद्बाह्यतो मृजेत् ॥ २९१
द्विदेहाच्च ततोऽश्रिस्स्यात् त्रिसप्तपदनिर्मितम् । वीथिकाश्रेस्तु निकटात् षट्कं पङ्क्तिद्वयं मृजेत् ॥
पङ्क्तिद्वयं तु तद्बाह्याच्छोध्याच्चाङ्गणद्वयम् । आद्यद्वितीयपङ्क्तिभ्यां द्विद्विकं द्विद्विकं मृजेत् ॥
सप्तकं तु [१२]तृतीये स्यात् परितः परिमार्ज्य च । व्योमबाह्यं तु तस्मिन् स्यात् पाण्डरोज्ज्वलमस्य च ॥
पैठीयं मध्यबिम्बं तु कुर्याद्वै [१३]भागकावृतम् । रवेर्मरतकाभेन तदन्तस्थं तुषारवत् ॥ २९५
पादाभ्यन्तरबिम्बं यत् तद्वै सूर्यसमप्रभम् । रक्तारुणं तु तद्बाह्यं वीथिका व्योमबाह्यवत् ॥ २९६

---

१. **क**—विधि　२. **क-ग**—त्रयशोभानि
३. **ख**—एकोनांशेन त्रिदशधा　४. **क-ग**—तस्मिन् ये
५. **ख**—बिम्बद्वयं स्यात्तु　६. **ख**—[ ] कोष्ठकान्तर्गत गलितम्
७. **ख**—तदर्धं पादपङ्कजम्　८. **क**—त्वतः
९. **क-ग-घ**—[ ] कुण्डलितं गलितम्　१०. **ख**—कण्ठात्तु
११. **ख**—कण्ठोपधौ　१२. **ख**—तृतीयं　१३. **क-ग**—भागकव्रतं

द्वाराणि धवलान्यस्मिन् शोभस्स्याद्बन्धुजीववत् । काञ्चनाभमुपद्वारं कृष्णान्यभ्यन्तराणि च ॥
बाह्यं मरतकाभेन तेषां वै परिपूरयेत् । एतद्गुणाकरं विद्धि ध्रुवाख्यमधुना शृणु ॥ २९८
द्विपञ्चदशधा क्षेत्रं कृत्वा जातान्यथाब्जज । शतानि नवभागानि मध्यतः पुष्करं लिखेत् ॥
शतेनैव तु सार्धेन षड्गुनेन ततो बहिः । पीठं पङ्क्तिचतुष्केण ततो द्वौ [1]गात्रगापदैः ॥ ३००
चत्वारिंशत्तु भागानि चतुरभ्यधिकानि च । दिक्षु मध्यमबिम्बार्थं द्विषट्कं परिमार्ज्य च ॥ ३०१
आद्यपङ्क्तौ चतुष्कं तु अन्त्यपङ्क्तौ तथैव च । मध्यपङ्क्तिद्वयाच्चैव द्वितयं द्वितयं पुनः ॥
एकीकृत्य ततो बाह्ये द्वे द्वे बिम्बेऽष्टभागजे । प्रागावसानपङ्क्तिभ्यामेकैकं च द्विजांशकम् ॥
त्रिणि त्रीण्यन्तरस्थाभ्यां कृत्वैवं तस्य पार्श्वयोः । कार्यं बिम्बद्वयं चास्य प्राक् प्रत्यक्पादयोर्द्विज ॥
मध्यसंस्थैः [2]पदैरेतामेकैकामन्तरा द्वयोः । एवं गात्रगणे सिद्धे पञ्चबिम्बान्विते ततः ॥ ३०५
चतुर्बिम्बजयुक्तानि चरणानि प्रकल्पयेत् । एकैकं चरणं कुर्याद्विंशत्यंशकसंवृतम् ॥ ३०६
ततो व्योमाश्रिनिकटाच्छोधयेद्भागसप्तकम् । एकांशमाद्यपङ्क्तौ तु त्रीणि त्रीण्यपरं द्वयात् ॥
कृत्वैवं पादमध्ये तु बिम्बं त्रीण्यथ मे शृणु । पार्श्वद्वये तु द्वितयं त्रितयं तदधस्तयोः ॥ ३०८
द्वितीयपङ्क्तावेकांशं गृहीत्वा द्वितयं पुनः । तृतीयपङ्क्तावेकं तु बहिष्ठायां तु रञ्जयेत् ॥ ३०९
एवं [3]चतुर्विधं विद्धि पक्षबिम्बद्वयं तु तत् । पञ्चांशं यत्तयोर्बिम्बं बाह्यपङ्क्त्या तु कल्पयेत् ॥
भागं पङ्क्तिद्वयेनाथ वीथीं शेषत्रयेण तु । द्विचतुष्षट्पदान्यत्र द्वारं कण्ठादितः क्रमात् ॥ ३११
शोभोपशोभशोभानि प्राग्वन्नवपदानि च । [4]यथैकैका ? दिशं ? भागे भवेच्छोभाचतुष्टयम् ॥ ३१२
उपशोभद्वयं चैव तथा तत् परिमार्जयेत् । द्विबिम्बमथ कोणं च कुर्याच्छोभान्तरस्थितम् ॥ ३१३
एकांशं पूर्वपङ्क्तौ तु द्वितीये स्याच्चतुष्टयम् । अग्रं हित्वा पदेनैव बिम्बं कोणगतं भवेत् ॥ ३१४
भागपञ्चकसंयुक्तं यथा बाह्यस्थमुच्यते । नवांशानि बहिष्ठायां द्वितीयायां तु वै पदम् ॥ ३१५
एवं दशांशजं कृत्वा रागजालेन पूरयेत् । प्रफुल्लरक्तोत्पलवत् कोणं कुर्यात्तु पङ्कजम् ॥ ३१६
गात्रस्य मध्यबिम्बानि पीतपिष्टप्रभाणि च । द्वे बिम्बे तदुपस्थे तु कुर्यान्मरतकोपमे ॥ ३१७
तस्यामपि च बाह्यस्थे तपनीयोज्ज्वले [5]स्मृते । चरणे मध्यबिम्बं यत् तत् कार्यं रजतोज्ज्वलम् ॥
बाह्लीकपुष्पसदृशो [[6]भागा....क....मध्यवत् । कुर्यान्मरतकाभस्तु स ? समीपगतं च यत् ॥
तस्याभ्युपगतं शोता] .... स्य बाह्यगते द्विज । दाडिमीपुष्पसदृशं तृतीयं तदुपस्थितम् ॥ ३२०
कुन्देन्दुधवलां वीथीं कुर्याद्द्वाराणि पूरयेत् । राजपाषाणतुल्येन शोभां गात्रकमध्यवत् ॥ ३२१
कुर्यान्मरतकाभं तु तत्समीपगतं च यत् । तस्याद्युपगतं शोभं भवेत्तच्चम्पकप्रभम् ॥ ३२२

---

१. क-ग—गात्रकापदैः
२. क-ग—पदे ह्येता
३. क-ग—चतुर्भिस्ससिद्धं
४. ख—यथैकैकं
५. क-ग-घ—स्मिते
६. ख—[ ] अन्तर्गतं गलितम्

कोणात् सुन्दरगं बिम्बं कार्यं रक्तोज्ज्वलेन तत् । इन्द्रनीलनिभेनाथ तद्बाह्यं परिभूषयेत् ॥
[1]ध्रुवाभिधानमित्युक्तं **परमानन्द**मुच्यते । एकत्रिंशत्पदैस्सम्यक् कृत्वा [2]क्षेत्रं हि जायते ॥
[3] .... .... .... .... ....
....

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां
सर्वतोभद्रादिमण्डललक्षणो नाम
पञ्चमोऽध्यायः

---

# अथ षष्ठोऽध्यायः

[4] .... .... .... .... ....
.... .... .... .... ....

[5]भूमौ विभजयेत्तस्मात् ततो विभजयेत् पुनः । कृत्वोभयं परिच्छिन्नं [6].... गवं पुरा ॥ १
ततोऽष्टमनवांशं च [7]दशमैकादशं च वा । द्वादशांशं परित्यज्य [8]क्रमात् पत्राग्रसिद्धये ॥ २
पञ्चानामपि [9]पञ्चानां त्रिपत्राद्यावदन्तिमम् । शेषेण कर्णिकाभागे केसराणि दलानि च ॥ ३
सम्यग्विकसिताकारं पद्मक्षेत्रेष्वयं क्रमः । दलाग्रसिद्धये नूनमाख्यातं कमलोद्भव ॥ ४
वक्ष्ये मुकुलिताकारं पद्मपत्राग्रसाधनम् । [10]मध्याचिह्नावसानं? तु कर्णिकाद्यैर्विभज्य च ॥ ५

---

१. क–ग–घ—धूपाभिधान   २. क–ग–घ—क्षेत्रं हि ···

३. अत्र ग्रन्थपातः—अय पञ्चमोऽध्यायः सर्वतोभद्रादिचतुर्विंशतिभेदभिन्नानां मण्डलाना लक्षणप्रतिपादनैकान्ततया प्रवृत्तः. अन्तिमस्य परमानन्दस्य लक्षणोपक्रमे भग्नः; अथ त्रुटितादिभागेन षष्ठाध्यायखण्डेनानुस्यूतस्सर्वेषु कोशेषु लक्ष्यते. अतष्षष्ठाध्यायखण्डमितः पृथक्कृत्य पञ्चमाध्यायस्य समाप्तिस्थानमत्र समाहितम्.

४. अयमध्यायः पद्मलक्षणप्रतिपादकः तथैवान्ते निगमितश्च. अस्यादौ महान् ग्रन्थपातः. अत्रेदमवधेयं—अस्मादध्यायात् पूर्वतनः पञ्चमोऽध्यायः इदम्परतया सर्वतोभद्रादिमण्डललक्षणप्रतिपादकः. तस्य चान्ते ग्रन्थपातः; तच्चिह्नमपि न किञ्चत् प्रदर्शितम् सर्वेषु कोशेषु; प्रत्युत पञ्चमाध्यायस्य त्रुटिस्थले भग्नमुखोऽयं षष्ठाध्यायभागः अलक्षितसन्धिबन्धस्संयोजितः. दैवादन्ते "इति षष्ठोऽध्यायः" इति निगमितो दृश्यते ।

५. क–....पुनः ग–घ–भूतसमात् तः विभज ६. ख–चिह्नं व्यामो ? ग–घ–चिह्नं....च्छयामो
७. ग–घ—दशमेकादशं   ८. क–ग–घ—कामपात्राभशीचये
९. 'पद्मानां' इति स्यात्   १०. ख—मध्यादिह्वावसानं तु

भागैश्चतुष्प्रकारोत्थैस्सुसमैर्विषमैस्तु वा । यथा तत् ते प्रवक्ष्यामि येन निस्संशयो भवेत् ॥ ६
नवाष्टसप्तषट्पञ्चचतुर्भिश्चांशकैर्भवेत् । त्रिदलाद्यष्टपत्रान्तक्षेत्रं वक्ष्ये पृथक् पृथक् ॥ ७
मध्यदेशात् समारभ्य शेषं क्षेत्रावसानकम् । एकैकांशेन सर्वेषां मध्ये कार्या च कर्णिका ॥ ८
शेषाणां [1]त्रिंशत्संख्यानां त्रिष्वाद्यप्रति[2]दीर्घिताः । केसराण्यंशदीर्घाणि [3]दलमूलार्धकर्णिका ॥
अथवा कर्णिकोच्छ्रायतुल्यानि परिकल्प्य वै । स्थितानि पत्रमध्ये तु सर्वत्र द्वित्रिसंख्यया ॥
दलशेषं द्विधा कृत्वा तन्मध्ये प्रथमं स्मृतम् । मध्यात् पद्मदलाग्रं यत् कोटिमूले तु कीर्तितम् ॥
त्रिपत्राद्यष्टपत्रान्तं पद्मानामीदृशो विधिः । [4]नवपत्रादितो यावत् सप्तविंशद्दलान्तकम् ॥ १२
यथा स्यात् कर्णिकामानं तत् ते वच्मि सकेसरम् । न्यूनं विंशतिमं भागमष्टपत्रस्य कर्णिकम् ॥
तत्कर्णिकाप्रमाणस्य [5]त्वेकवृद्ध्या तु वर्धयेत् । विधिनाऽनेन पद्मानां प्रथिका ? कर्णिकां नयेत् ॥
दलप्रदं केसरं यत् कुर्याच्छिष्टेन पूर्ववत् । दीर्घिकाकेसराणां तु कर्णिकार्धेन वर्धयेत् ॥ १५
अथोऽन्येन दलाब्जानां यागानां देवता पुनः । ब्रह्मन् निर्वर्त्यमानानामेष एव विधिस्स्मृतः ॥
सुस्थिताधारपद्मानां हेमशैलादिवर्त्मनाम् । पर्यङ्कशयनाभोगं मूर्त्यादीनां निवेशने ॥ १७
तत्प्रभा[6]पतिकानां च चतुर्थांशेन कल्पयेत् । पत्राणि केसराढ्यानि त्रिभिरंशैस्तु कर्णिका ॥ १८
सा चोच्छ्रिता दलार्धेन दलमानेन वा भवेत् । कुर्याद्दलार्धदीर्घाणि पतितानि तदन्तरे ॥ १९
केसराण्यथवा विद्धि तत्त्रिभागसमानि च । कल्पनीयानि वा विप्र कर्णिकासंश्रितानि च ॥ २०
प्रागुक्तोच्छ्रायमानानि सम्यगेवोत्थितानि च । ईदृशानां द्विजाब्जानां सहस्रशतसंख्यया ॥ २१
शोभानुरूपया दृष्ट्वा संपाद्या पत्रसन्ततिः । कर्णिकाऽपि ततः कुर्यादुक्तमानाधिका [7]यया ? ॥ २२
वृत्तायतानां पद्मानामेष भावविधिस्स्मृतः । एवं सञ्चिन्तयित्वा तु द्यौस्स्यादूनाधिका यथा ॥ २३
आद्यं वृत्तचतुष्कं तु मध्यस्थं विद्धि कर्णिका । द्वितीयं केसराख्यं तु दलमध्यं तृतीयकम् ॥
नार्यो ? दलावसानं तु स्यात्तं चिह्नोन्तिकन्तुवत् ? । पश्चाद्दलावसानस्थवृत्तस्याभ्यन्तरे स्थिते ॥२५
पद्मानां प्राग्बहिश्चोक्तं प्रागुक्तपरिसंख्यया । अनुक्तेष्वपि वाऽब्जेषु नियमादूर्ध्वगेषु च ॥ २६
सामान्यमंश[8]संख्याता तेष्वन्येषूदितेष्वपि । त्रिपत्रादिषु सर्वेषु त्वथवा कमलोद्भव ॥ २७
येन यद्भ्राजते पद्मं सोंशस्तस्याग्रतः क्षिपेत् । पत्रविस्तारसंक्षेपवशेन च वरप्रदः ॥ २८
तस्मात् संक्षिप्तपत्राणामग्रं दीर्घं विराजते । तद्वद्बिम्बोदरस्थानां बहुपल्लविनां तु वै ॥ २९
साग्रपत्रांशसिद्धिं च कृत्वैवं सूत्रसञ्चयम् । स्फटिकादर्धमंशानां विनिक्षिप्य ततोऽब्जज ॥ ३०

---

१. क-ग-घ—त्रिंशत्संख्येन २. ख—दीर्घकाः

३. क—दलमूला ... ... ग-घ—दलमूलाथकान्यथा

४. क-ग-घ—नवपत्रान्ततो ५. ख—त्वेकवृद्धितु ६. क-ग-घ—पतिकाञ्चाना

७. ग-घ—ऽथवा ८. ख-ग-घ—सङ्घाता

दलार्धमानसूत्रेण दलाग्रं संस्थितेन च । दलांशकं[1] .... सन्तु दलांशस्यैव मध्यमा ॥ ३१
मत्स्यचिह्नद्वयेनैव सम्यगुत्पाद्य सङ्गमम् । पत्रमध्यं प्रसिद्ध्यर्थं तेषु सूत्राण्यतः क्षिपेत् ॥ ३२
दलरामप्यमं ? सूत्रं प्रकीर्त्या ? ह्यवतिष्ठते । शेषं सूत्रद्वयं ह्येषां साधकं स्यात् परस्परम् ॥ ३३
इत्युक्तं पद्मयागानां सूत्रपातं समासतः । दलानां [2]घटनां चाथ समासाच्छृणु सन्ततिम् ॥ ३४
यद्वेन्दुलाञ्छनाद्यैस्तु ससूत्रैरेव जायते । अभीप्सि[3]तामपूजास्य ? प्रादक्षिण्याल्लिखेद्दलम् ॥ ३५
दिग्विदिक्सप्तसंश्लेषैः पूरणाय कजच्छदैः । दलमध्ये कदोरस्थं ? सूत्राणां तु दलान्तरम् ॥ ३६
तुर्यवृत्ता[4]वसानाद्वै समारभ्य तु लाञ्छयेत् । स्पृशेत् तत्सिद्धिसूत्राभ्यां मध्ये तु सदृशक्षितिः ॥
सूत्रयोश्शशिनो ? नन्याद्यथा कण्ठौ तु [5]र्मालिता । ततश्शशिकलाशृङ्गस्थाने सूत्रं निधाय च ॥
दलाग्रभागपर्यन्त [6]निष्पाल्यावपरं तु वा । कृतेनानेन विधिना शीर्णपत्राकृतिर्भवेत् ॥ ३९
[7]अन्तराद्यन्तसूत्राभ्या[8]मशान्तानाममत्यशीम् ? । सिद्धस्य [9]शर्णोपत्रस्य [10]त्वग्रांशार्धस्य चान्तरे ॥
कृत्वा सूत्रं [11]समानीय प्राग्दत्तांशस्य सन्निधिम् । एवं तदवधे [12]सूत्रस्तदेव ? कमलोद्भव ॥
दिव्य[13]चन्दनलेख्यां च जलयेच्छशिलाञ्छने । भग्नवज्जायते तीक्ष्णं मध्यदन्तौ ? दलान्तरम् ॥
अथ संसक्तपत्राणां स्यादिदं [14]....साधनम् । अथासंसक्तपत्राणां [15]स....सूत्रत्व[16]....विना॥
विना शकुर्याच्चपसा .... .... । .. .... मुत्थानमर्थानां पत्रजन्मावधेः पृथक् ॥४४
यथा तदधुना वच्मि तव सन्देहशान्तये । दलसिद्धिं विना प्राक् .... संयुक्तं लिख्य पङ्कजम् ॥
त्यक्त्वा व्योमार्धमात्रं तु समीपात् सूत्रमध्ययोः । तृतीयांशं तु पादं वा ज्ञात्वांशाब्जे पदे स्मृतिम् ॥
[17]एतं चन्द्रेऽर्धचन्द्रं तु दलमध्यं तु पूर्ववत् । छत्रं ग ? ब्रह्मदेशस्थं सूत्रद्वितयपातनात् ॥ ४७
.... स्याग्त् संसक्तपत्रं तु मार्जनासिद्धिसूत्रयोः । अदृष्टपृष्ठभागस्य परिवारावृतस्य च ॥ ४८
सांमुख्यं तु विभोः कल्प्यं भागमाश्रित्य दक्षिणम् । आश्रयं भूतपादीनां दिग्विदिग्हृदयं हियम् ? ॥
अग्रात् प्राच्यमथाग्नेयं दक्षिणे नैरृतिक्रमात् । एवमुत्तरभागे तु ऐशानं दैवतं स्मृतम् ॥ ५०
दलता देवमस्याथ ? ददतं धनमुच्यते । प्रागीशदलसन्धेस्तु मध्यात् सूत्रं प्रसार्य च ॥ ५१

---

१. क— .... ख-ग-घ—द्विसासन्तु २. ख—विदलानां च समासा
३. ख—तामपूजा स्यात् ४. ख—वसानाद्येः ५. क-ग-घ—मीलिता
६. ख—निष्पाद्यावपरं तु च ७. क-ग-घ—अन्तरादद्य
८. क—मन्तनाम ... ग-घ—मन्तनाममत्यशि ९. क—'शीर्णपत्रस्य' इति स्यात्
१०. घ—त्वग्रांद्दशार्धं स्य शान्तरे ११. ग-घ – समानीवा
१२. क-घ—सूत १३. क—चन्दनवे ... ग—चन्दनवेल्यां चां घ—चन्दनवेलां याचां
१४. ख—चय १५. ख—साद्विं सचि
१६. ख—बिंबिनाम् १७. ख—एतच्चन्द्रार्ध

आप्यत्रक्षेशयोः पत्रं सिद्धपर्यन्तमानयेत् । प्राक्पदादीश्वराख्यस्य पोम्यन्त्यं? पूर्वलक्षितम् ॥
पङ्क्तित्वे वर्तमानस्य दलजालस्य लक्षणम् । इत्येतत् पत्रबन्धानामब्जानामब्जसंभव ॥ ५३
कीर्तितं सर्वसामान्यं कर्णिकासाधनं शृणु । सार्धेन मूलव्यासेन तेन पादाधिकेन वा ॥ ५४
द्विगुणेनाथवा विप्र कुर्याद्वै कर्णिकोच्छ्रितम् । सबीजं वक्त्रविस्तारं [1]तथैनेन प्रकल्पयेत् ॥ ५५
हिबेरकर्णिकाप्रान्तं? मेखलार्थं विवर्ज्य च । ब्रह्मस्थानपदे शेषं बीजार्थं विभजेद् द्विधा ॥ ५६
[2]बीजैस्तन्मध्यतस्तस्य दिग्विदिक्ष्वष्टकं लिखेत् । परिवेरवसानं तु बीजानामन्तरं द्विज ॥ ५७
किञ्चिन्निम्नाऽथ कर्तव्यं [3]बीजो वै कथ्यते यथा । जाम्बूनदादिधातूत्थं यज्ञकाष्ठाश्मजं तु वा ॥
सुषिरं कर्णिकाकारं मन्त्रं कुर्याद्वि[4]भेदभृत् । तेनेन्द्रकर्णिकाकारं कर्णकेल? समुच्छ्रितम् ॥
श्रीवेष्टकससमुदितमीषत्क्षीरमधुप्लुतम् । ....ण्डपिष्टशालीनचूर्णेन सह योज्य च ॥ ६०
रञ्जितं कुङ्कुमेनैव [5]सुपीतेनाथ सानुना । द्विदेहं तेन तद्वक्त्रे पत्रबन्धु प्रसूर्य च? ॥ ६१
कवाटरहितं कृत्वा पिण्डीभूय यथागतम् । तदा नियोज्य स्वक्षेत्रे हेमरत्नादिकान्विते ॥ ६२
[6]....पात्राणि सर्वाणि कामान्निम्नादि पूर्य च । प्रोक्तानि तु च वै मध्याज्जलस्थमिव गोलकम् ॥
करिकुम्भसमानानि द्विजाण्डसदृशानि च । स बाह्याभ्यन्तरन्तस्थो देवीशोणोन्नतानि च ॥ ६४
क्रमान्निम्नं तु वै यावद्भूभागसतां व्रजेत् । तनुमूलप्रसुप्रान्तं? मध्यमध्यानि पूरयेत् ॥ ६५
वृक्षस्थलतुल्यानि क्रमशः केसराणि च ।

एवं सम्पाद्य संपूज्य अन्येषाम्यन्तरे? द्विज ॥ ६६
अध्यात्मा ह्यधिदेवाख्या अधिभूतक्रमेण तु । मन्त्राणि मन्त्रमूर्तिश्च तत्त्वानि सकलानि च ॥ ६७
मन्त्रो ह्यध्यात्ममुद्दिष्टं मन्त्रमूर्त्यधिदैवतम् । अधिभूतं स्मृतं तत्त्व मित्येवं क्रियते द्विज ॥ ६८
स्थूलसूक्ष्मपरत्वेन स्वयं [8]मान्त्री स्थितिस्तथा । संनिवेश्यात्मसक्तं वा उत्तरोत्तरया सह ॥ ६९
प्रभवाप्ययोगेन [9]योजयेन्मन्त्रसन्ततिम् । अभिन्नाभेदभूतानां वेदानां च पृथक् पृथक् ॥ ७०
अध्वक्रमेण युक्त्या वै स यागफलमश्नुते । मन्त्रोदितं हि यद्वस्तु तद्विद्ध्यानन्दलक्षणम् ॥ ७१
सर्वभावेष्वतीतत्वात् सर्वेषां [10]....योजयेत् । समस्तपद्मयागानां पत्रेष्वाद्यन्तयोस्तथा ॥ ७२

---

१. 'तथैतेन' इति स्यात् २. घ—बीजैः इत्याद्यर्धत्रयं गलितम्
३. ख-बीजोपं सज्यते ४. ख-भेदकृत्-हृत् ५. क-ग-घ—सवि ··· थ
६. ख-ग-घ—भसा पत्राणि ७. अत्र महान् ग्रन्थपातः
८. ख—मन्त्रस्थित ९. ख-यो यजेन्मन्त्र १०. ख—स्तुत ग-घ—स्फुट

सर्वेष्वाधारभूतत्वात् [1]तद्बिम्बत्वात्तु तत्त्वतः । न्यसेम केसरे लाजास्तां शक्तिं तद्धि कर्मणि ॥ ७३
अनेकभेदभिन्नानां व्यापिनीं सर्वदेहगाम् । तदङ्गषट्कज्ञानाद्यं [2]समुदायान्यदैश्वरम् ॥ ७४
[3]येनानन्दाद्यशक्त्या वै ग्रहणं प्रतिपद्यते । सिञ्चञ्चो? तत्त्वतो भिन्ना न्यसेत् केसरकोटिभम्॥
साधिभूताधिदैवो यो मन्त्रोऽनुग्रहकृत् प्रभुः । यष्टव्यो दलमध्ये तु तदङ्गानि च तत्र वै ॥ ७६
तदग्राच्च चतुर्दिक्षु [4]सद्यभूतं हृदादयः? । विदिक्संकल्पनां कृत्वा तत्रास्त्रं तु प्रपूजयेत् ॥ ७७
केवलं द्विति? शक्तित्वान्मध्ये मन्त्रसमीपतः । ध्यात्वा न्यस्याथ संपूज्यो नेत्रमन्त्रो द्विजोत्तम ॥
इत्येष परमात्मीयमन्त्रन्यास उदाहृत. । पृथक् षड्विंशसंख्यैस्तु तुर्यादौ यत् प्रकाशितम् ॥
स्थानभेदैश्शरीरस्थं मन्त्रव्रतमहद्विज? । यत् पिण्डं मन्त्रसंख्यस्तु पदमन्त्रगणस्य च ॥ ८०
वर्तते हि प्रभुत्वेन त्वाधिपत्येन वै तथा । व्यूह[5]स्यागममन्त्राणां प्रागुक्तानां च सर्वशः ॥ ८१
[6]यदयत्यभिविंशत्य? [7]त्वथवा ध्येययुक्तिभिः । पीठाख्यदेवतानां च पीठस्थानाननेकशः? ॥
द्वास्थाद्वास्थानुयायिभ्यां स्थानाश्रिष्वपरेष्वपि । सबाह्याभ्यन्तरस्थानि यागानां विविधानि च ॥
तानि त्वया ह्यभक्तानां नाभिव्यञ्ज्यानि पद्मज । वचसा कर्मणा चैव [8]सुतप्ते . . कषात्मनाम् ॥
विषयग्राहभूतानां ज्ञानज्ञेयाभिलाषिणाम् । श्रेयोर्थिनामिदं वाच्यं योगभेदं मयोदितम् ॥ ८५

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां
पद्मलक्षणो नाम
षष्ठोऽध्यायः

---

# अथ सप्तमोऽध्यायः

**पौष्कर उवाच—**

भगवन् पुण्डरीकाक्ष ज्ञातलोकव्रत त्वया । भविनामभुवं ज्ञात्वा व्यूहभेदस्तु सूत्रितः ॥ १
तस्याहं श्रोतुमिच्छामि यथावत् परमेश्वर । स्वरूपं च प्रमाणं च [9]साधनं न्यासमेव च ॥ २

**श्रीभगवानुवाच—**

शृणुष्वावहितो ब्रह्मन् कथयामि समाहितः । स्वरूपं लभते ब्रह्मन् [10].... निर्वृतिम् ॥ ३
[11]द्वाराणा .... कोणानां पुरा[12]णान्तरतो द्विज । वर्तुलानां विचित्राणां भुवनानां विशेषतः ॥४

---

१. क-ग-घ—तल्लबत्वात्तु २. ख—समुदाया तु? ३. क—ग-घ—येनानन्दाद्य
४. ख—साष्टमन्त ५. ख—स्थानगमन्त्राणां
६. ख—यदद्यस्थभिविशस्य ७. ग-घ—त्वायाधेय ८. ख—सुपक्के ....
९. ग-घ—साधनान्यास क—साधनन्यास १०. ख—नानायोन्यस्य ग-घ—ननायोस्स्य
११. ख-ग—द्वाराणानिति १२ .ग-घ—णान्तरते

पीठवीथीयुताद्वा वा तुर्याग्राणां तु मध्यतः । प्रागुक्तानां च सर्वेषामेकैकस्मिन् यथेच्छया ॥ ५
सपद्मपत्रभेदेन त्वेकमूलोत्थितानि च । प्रवृत्तपीठवीथ्यग्रद्वारमध्ये चतुर्दलम् ॥ ६
कमलं तद्बहिस्त्रीणि त्रितलान्यम्बुजानि च । चतुर्दशसमानेन यथा [1]या . शृणु । ७
अस्य चाद्यं चतुर्व्यूहत्रिकोणभुवनान्तरे । चतुरश्रेण वाऽब्जानि [2]वृत्तशेषाणि मध्यतः ॥ ८
प्राग्व्यूहं स्याच्चतुःपद्मं तन्मध्ये तु चतुर्दलम् । कमलं तद्बहिस्त्रीणि त्रितलान्यम्बुजानि च ॥ ९
द्वितीयं पञ्चभिः पद्मैः पञ्चपत्रे हृदन्तरे । चतुर्दिक्ष्वथ चत्वारि चतुष्पात्राणि तद्बहिः ॥ १०
षड्भिरब्जैस्तृतीयं तु तन्मध्ये लिख्य षड्दलम् । पञ्चभिः पञ्चवक्त्रैस्तु प्रागादापावृतं तु यत्॥
व्यूहानि त्रीण्यतोर्ध्वं वै सप्त पद्मानि पौष्कर । सप्ताष्टनवपत्राणि तेषां मध्येऽम्बुजानि च॥ १२
बाह्यस्थानि च षट् सप्त क्रमादष्टदलानि च । व्यूहत्रयमथोर्ध्वान्तादष्टकं कमलं भवेत् ॥ १३
सप्त सप्त कजास्तस्मिं स्तृतीया बाह्यतस्तथा । एकैकमन्तरस्थं तु क्षेमपद्मं तु पद्मज ॥ १४
त्रीण्यथो नव पद्मानि व्यूहानि कमलोद्भव । तेषामेकैकशो मध्येष्वष्टदिक्ष्वष्टकं स्थितम् ॥ १५
पत्रत्रयोदशव्यूहसंसाध्यैकादशाम्बुजम् । एकं पूर्वोक्तवत् तस्मिन् दश शेषाणि तद्बहिः ॥ १६
ततश्च सप्तमव्यूहादादितश्चाष्टपङ्कजम् । सप्तादशदलं यावत् .... ... .... १७
[3]....न्तस्थबाह्यपद्मानां दलसंख्यां निबोध मे । आद्यस्याभ्यन्तरे कुर्याद्दशपत्रं सरोरुहम् ॥ १८
तदेकैकं च तद्वृद्ध्या [4][शेषाणां परिकल्पयेत् । सप्तादशदलं यावत् तेषामभ्यन्तरे भवेत् ॥ १९
[5]भूयस्तदपि .... बाह्यस्थानां प्रकल्पयेत् । [6]नवपत्रात् समारभ्य] त्वेकवृद्ध्या तु पूर्ववत् ॥२०
पृथक् पृथक् [7].... तस्य सत्तम । बहिस्स्थानि च पद्मानि सुषोडशदलानि च ॥ २१
इत्येषां व्यूहयागानां सपत्रा पद्मकल्पना । कीर्तिता वै समासेन मया ते कमलोद्भव ॥ २२
दिग्विभागं च पद्मानां प्राग्वत् पत्रोदितं भवेत् । प्रमाणमयनं पश्चाद् गर्भस्थकमलादितः ॥ २३
वीथ्या वै सह बाह्यस्थपङ्कजानां क्रमेण तु । एकादशक्षेत्रमाद्यं .... व्यूहस्य वर्तुलम् ॥ २४
तादृग्द्वादशहस्तं स्याद्द्वितीयस्य ततः परम् । एकैकं तु करं तावत् क्रमेणानेन कल्पयेत् ॥ २५
निष्ठां व्यूहस्य वै यावच्चतुर्विंशतिभिः करैः । सर्वदिग्वर्तुलं क्षेत्रं जायते विततं समम् ॥ २६
[8]आकुलस्य पुरा मानं ब्रह्मन् व्यूहस्य कस्य चित् । तन्मानेनार्धसूत्रेण मध्याद्भ्राम्य भ्रमं समम् ॥
क्षेत्रमानमिति ख्यातमधुना साधनं शृणु । प्रागुक्तयुक्तं प्रागादौ भागौ द्वादशभिस्समैः ॥ २८
.... .... क्षेत्रे भागीकृते सति । मध्यदेशात् समारभ्य तन्तुभिः पक्षसंमितैः ॥ २९

---

१. ख—याया तमह ग-घ—याणिमह २. ग-घ—वृत्ते
३. ख-ग-घ—संतस्थ ४. घ—[ ] कुण्डलान्तर्गतं गलितम्
५. ख—भूयस्तदपि .... विप्र ६. क-ग—नखपत्रात्
७. ग-घ—कहजाध्यायदं तस्य ८. ग-घ—आकलस्य

प्रपूर्य व्यूहभृन्नाम यत् पुरा वर्तुलीकृतम् । ततो ? पद्मपदादादौ भागैर्द्वादशभिस्समैः ॥ ३०
चिह्नयेत् सर्वसूत्राणि यावत् क्षेत्रमवाप्यते । ब्रह्मस्थानात् समारभ्य क्षेत्रस्याद्यात्तु तद्गुण ? ॥ ३१
न ह्यंशकानां तु .... क्षेत्रान्तात् तावदाचरेत् । मध्ये तु पञ्चभिर्भागैरेकैः प्राग्भ्राम्य वर्तुलम् ॥
एकांशमथ सन्त्यज्य वीथ्यर्धं चैव तद्बहिः । परितो मध्यवृत्तस्य बाह्यवृत्तगणाश्च तम् ॥ ३३
सूत्राणामुपरि ब्रह्मन् चतुरंशकसंमितम् । भ्रमणीयं च सूत्रेण मध्याद्यक्षे समे स्थितौ ॥ ३४
भ्रामितानां च वृत्तानां क्षेत्राख्यपरिधेर्द्विज । अंशकद्वितयं मध्ये [1]सवितानेव शिष्यते ॥ ३५
मध्यतो [2]बाह्यसूत्रस्य बहिस्स्थानं च पौष्कर । स्वव्या .... ........ ३६
बहिस्स्थानां तु वृत्ताना[3]मन्तरालं तु यत् स्मृतम् । तच्चानियतमानेन समानं स्यात् परस्परम् ॥
अन्तर्गतं हि वृत्तस्य .... । एकस्मिन् वहुधा व्यूह्य त्वन्तरालेषु चान्तिमम् ॥ ३८
एवमुल्लिखिते वृत्ते दिग्विदिक्परिसंस्थिते । परिमण्डलरूपाणि गा .... .... ॥ ३९
[4]........ ये द्वे ते संयुतानि च । स्थूलसूक्ष्मस्वरूपाणि पत्रभेदान्वितानि च ॥ ४०
काम [5] ... ये ........ ब्जानि ततश्शृणु । प्राक् चोदितानि सूत्राणि बहिस्सत्ताप्रसिद्धये ॥
[6].... मध्यमाद् वृत्ता [7][माज्ययोत्रतिकावते] । प्राक् प्रत्यक् सौम्ययाम्यं च समं सूत्रद्वयं तथा ॥
सूत्राणां ह्यंशमानेन भ्राम्य मध्यं तु पौष्कर । मध्यमस्य .... .... तत्राब्जं लिख्य पूर्ववत् ॥
चतुर्दलानि भेदेन यस्मिन् तर .... । प्राक् साधयित्वा पीठादिं द्वारान्तर्मण्डलं बहिः ॥ ४४
संसाध्यं च ततः पद्मा ? नान्यथाऽर्थस्य साधनम् । अंशकत्रितयाशेषात् षष्ठ्यं [8][शं साधनस्य मे]॥
.... .... .... तो भवेत् । शिष्टं यदन्तरस्थं तदेकीकृत्य विभज्य च ॥ ४६
चतुर्धा सुसमैर्भागैर्भ्राम्यैकांशेन चासमा ? । .... .... यैर्द्वारादीनां तु येन तु ॥ ४७
एवं क्षेत्रत्रयं भ्राम्य ततः पीठं तु साधयेत् । पादगात्रकभेदेन यथा तदवधारय ॥ ४८
पूर्वयामं .... .... बीजसंमुखम् । क्षिप्तसूत्रचतुष्कं प्राग् ब्रह्मस्थानक्रमेण तु ॥ ४९
ततः पैठीयवृत्ताभ्यां दिक्सूत्रस्य तु मण्डले । .... .... ये च द्वयोर्द्वयोः ॥ ५०
[9]पीठ .... पुरुषगात्रेण द्विगुणेन बहिस्स्थितः । [10]सार्धेनान्तर्गतं वृत्तं तन्मात्रेण न पौष्कर ॥
[11]भागस्तु चिह्नवृत्ताभ्यां द्वाभ्यां ह्येतत् तथान्तरे । सूत्रं कृत्वा तथाऽल्पस्य .... [12]देव हि ॥

---

१. ग-घ— .... वधितानं २. क—बाह्यस्य वृत्तस्य ग-घ—सूत्रस्य
३. ख—मन्तरालात्तु ४. ग-घ—कामप्रथतामार्गमद्वारे ये द्वे
५. ख— .... .... ब्जानि तत ६. ग-घ—निवेद्ये
७. ख-[ ] कुण्डलगतान्यक्षराणि ८. ख-[ ] अन्तर्गतान्यक्षराणि ग-घ-शंवासनस्यमे
९. ख—पीठवेसूत्रस्य तु सूत्रेण १०. ख—एकेनान्तर्गतं
११. क-ग-घ—ततस्तु १२. ख-ग-घ—द्वितततवं द्वि

षोडश[1]वीथिभूभागं ? सूत्राभ्यामन्तरा भजेत् । ब्रह्मस्थानं तु सूत्रेण मत्स्यवल्लाञ्छयेत् ततः ॥ ५३
पातिताभ्यां तु सूत्राभ्यां वृत्ताभ्यां तु समासतः । उक्तषड्भागसूत्रेण मध्यभागद्वयस्य च ॥ ५४
[2]....भागाभ्यां मत्स्याभ्यां संरुद्धेन मदन्तुना ? । लाञ्छयेदथ चन्द्रौ द्वौ दिक्सूत्रस्य तु संमुखौ॥
शृणुष्व पीठवृत्ताभ्यां [3]यथैकैकं लयं व्रजेत् । एकं वै मत्स्यचिह्नाभ्यां शृङ्गमेति लयं तथा ॥ ५६
प्रागास्फालितसूत्राभ्यां [4][चान्द्रीया]परिभे ? द्विज । मीलनं विधिना येन जायते लाञ्छयेत् तथा ॥
आ .... मध्यस्थितं मध्यमर्धचन्द्रं तु लाञ्चयेत् । विधिना येन तद्वच्मि गोत्र [5].... सिद्धये॥
समीपस्पष्टसूत्राभ्यां ममत्पु .... विवर्जयेत् । पीठं वैपुल्यमानं तु तत्र सूत्रं निरुध्य च ॥ ५९
प्राक् प्रमा .... मध्ये तु लाञ्छयेत् पादसंमुखम् । गात्रकं विधिना येन पार्श्वयोरुभयोर्भवेत् ॥
वितताद‌न्तरहितं व्यालवक्त्रं यथा द्विज । [6]भूताभ्यां गात्रकाभ्यां तु मध्यं यच्चरणं ततः ॥ ६१
एतत् पीठविधिं विद्धि त्वथ द्वारकृतिं शृणु । [7]द्वारादिष्वतिवृत्तस्य दिक्सूत्रस्य तु सङ्गमे ॥ ६२
हृत्वा सूत्रं समावृत्ते पार्श्वद्वारं तु लाञ्छयेत् । द्वाराण्यभ्यं तु ? वैपुल्यं दीर्घेणैव तु तन्तुना ॥
[8]तत .... सूत्रं कृत्वा प्रसार्य च । द्वारान्तर्गतवृत्तस्य दिक् [9]ततो वृत्तसङ्गमम् ॥ ६४
एवमास्फाल्य सूत्रेण शूकाङ्घ्रिद्वारसिद्धये । द्वारक्षेत्रान्तरस्थं तु दिक्सूत्रस्य द्विजोत्तम ॥ ६५
संविभज्य चतु [10][र्धानात् ? व्यक्तैः]चिह्नास्तु लाञ्छयेत्।द्वे चिह्ने तद्बहिस्त्यक्त्वा कृतसूत्रस्तृतीयके॥
तद्द्वारान्तरवृत्तस्य समीपं च नयेत्ततः । लाञ्छयेच्छशिवद्वृत्तं ... गतद्विज ॥ ६७
प्रागास्फालितसूत्राभ्यां मीलनीयं प्रयत्नतः । तेनैव कुसुमान्नेन भूयसे .... लाञ्छयेत् ॥ ६८
शृङ्गादयस्ततसूत्रस्य संस्थितो नततन्तुना ? । यथा द्विजार्धचन्द्राभ्यां शृङ्गयोर्मीलनं भवेत् ॥ ६९
अथा ? तथैव सूत्रस्य द्वारबाह्या ? भ्रमस्य च । कृत्वा सिद्धिगतं सूत्रं शशिशृङ्गावधिं नयेत् ॥
तस्य स्थानात् तदानीय लक्ष्यमाणं तु मत्स्यवत् । बाह्यवृत्तावधिं यावद्द्वारस्याद्य तु सत्तम ॥ ७१
सदृशं कम्बुवक्त्रस्य द्वाराभ्यामन्तरं तु यत् । ज्ञेयं तत्कोणभूभागं चतुर्धा वृत्तमण्डले ॥ ७२
तत्र विन्यस्य वा लिख्यं समांशं च चतुष्टयम् । एवं तु मध्यमं वृत्तं मध्ये निष्पाद्य मण्डलम् ॥
तदाकारांश्च बाह्ये तु वृत्ते कुर्याच्च मण्डले । कीर्तितेन विधानेन विशेषमथ मे शृणु ॥ ७४
तेषामंशद्वयेनाब्जं पीठादिद्वितयेन तु । संमुखं मध्यदेशस्य सूत्रं सूत्रं तु मध्यतः ॥ ७५
प्राग्दत्तं यत् स्थितं तेषां तद्दृष्ट्वा ह्यपरं व्रजेत् । मध्यसूत्रं तु वृत्तानां चतुर्धा येन भान्ति ते ॥
गात्रकाणि तु तैस्सूत्रैर्द्वाराण्यालिख्य पूर्ववत् । मध्यं मण्डलपद्मस्य बहिष्ठानां तु पौष्कर ॥ ७७

---

१. ख—विधि   २. ख—मत्तो ग-घ—पत्तो   ३. ख—वृत्ताभ्यां तु समासतः
४. ख-(  ) अक्षराणि   ५. ख—गोत्रकेशस ग-घ-गोत्रकेडश   ६. ख-भूभा[illegible]
७. क-ग-घ—द्वार ··· वृत्तस्य   ८. ग-घ—ततस्तत्वाभ्यलाभ्यं तु
९. क-ग-घ—ततोपत्र   १०. ग-घ—(  ) पाठः

मण्डलानां सपद्मानामसत्वं ? सर्वदा भवेत् । व्यूहानां लिख्यमानानां बहिस्स्या[1]न्मध्यमण्डलम् ॥
एतत् समण्डलानां च व्यूहानां लक्षणं मया । कथितं केवलाब्जानां विशेषमधुनोच्यते ॥ ७९
एतस्मात् क्षेत्रमानं तु [2]मानतो व्यूह्य कल्पयेत् । सर्वेषां चापमानीय बाह्यमण्डलकैर्विना ॥ ८०
किन्तु तत् सप्तधा कुर्यात् प्राग्वद् द्वादशधाकृतिम् ? । क्षेत्रं कजानां वीथीनां पूर्ववद्भागकल्पना ॥
व्यूहक्षेत्रं तु सकलादष्टमांशेन बाह्यतः । न्यश्रादीनां पुराणां तु विस्तारं परिकल्पयेत् ॥ ८२
शोभोपशोभकोणं च द्वाराणां साधनाय च । सपुरस्याथवा विप्र [3]त्वद्य व्यूहस्य जायते ॥ ८३
चतुर्दशकरं क्षेत्रं मानं वै षड्भिरङ्गुलैः । [4]त्रिंशद्धस्तं तथा व्यूहं तस्य .... [5]भावयेत् ॥ ८४
भुवनस्य त्रिकोणस्य त्वेतन्मानं तु मध्यतः । दिक्त्रयोस्त्यु ? पपद्येत कोणेभ्यश्चातिरिच्यते ॥ ८५
तस्माद् द्वे दिक्प्रधानत्वं मण्डलेऽस्मिन् न चाश्रिपु । अथास्यैव द्विजश्रेष्ठ वच्मि ते साधनं शृणु ॥
यथोक्तमानविस्तीर्णं साध्यमानं तु सिध्यति । व्यूहक्षेत्रात्तु वै वृत्तात् साध्याद् द्विगुणविस्तृतम् ॥
चतुरश्रं तु तद्बाह्ये पुरं कृत्वा तु पूर्ववत् । त्रिकोणपूर्वसिद्ध्यर्थं मार्गसिद्धेन तेन तत् ॥ ८८
क्षेत्रार्थं तु तदा मध्ये सूत्रं तत्क्षेत्रसंमितम् । कृत्वा तत्पार्श्वसूत्राभ्यां संरुद्धमथ पातयेत् ॥ ८९
सूत्रद्वयं ततः पश्चात् तृतीयं तु विनिक्षिपेत् । प्रागास्फालितसूत्राभ्यां वर्जयित्वा तथाऽन्तरम् ॥
बाह्यतो वृत्तपरिधेस्त्रिकोणं व्यज्यते स्फुटम् । अनेन क्रमयोगेन स्पृशेत्तद्वर्तुलं [6]पुनः ॥ ९१
अभ्यन्तरे त्रिकोणस्य सूत्राणां त्रितये क्षिपेत् । त्रिगुणस्य तु वृत्तस्य त्वष्टमांशयुतस्य च ॥ ९२
[7]यदैव्यन्त ? प्रमाणं स्यात् कोणात् कोणेषु पौष्कर । अथ वै मध्यतो दिक्षु कोणयोरन्तरं द्विज ॥
द्वारादीनां प्रमाणं च साधनं चावधारय । मध्यस्य संमुखं दद्यात् सूत्रं सूत्रं दिगन्तरे ॥ ९४
द्विगुणेन कृतेना ? ये लाञ्छयेद् द्विगुणेन वा । एकैकं मध्यसूत्रस्य पक्षबाह्यात् तथाऽन्तरात् ॥
ताभ्यामभ्यन्तरं कुर्यादष्टकाया ? द्विरष्टधा । मध्यसूत्रं तु सांगं तत्र सूत्राणि पातयेत् ॥ ९६
एवं तिर्यग्गतं सूत्रं [8]तद्विधःकरणे ... । एवं षोडशकोष्ठानि भवन्ति द्विगुणानि च ॥ ९७
एकैकस्य दिशि ब्रह्मन् द्वारा द्वारात्तु पूर्ववत् । कण्ठोपकण्ठसिद्ध्यर्थं षट्कं षट्कं तु शोधयेत् ॥
शेषैश्शोभोपशोभानि भागैर्द्वारानुसारतः । द्वारं शोभाद्वयोपेतं भागैर्द्वादशभिर्भवेत् ॥ ९९
एकैकम[9]वशेषं यत् तत्कोणा[10]भ्यां वधं नयेत् । उपशोभद्वयं चैव शोभानां तु चतुष्टयम् ॥१००
द्वात्रिंशदंशकैर्विद्धि प्राग्वद्भागौ तु कोणगौ । द्वौ द्वौ शोभोपशोभौ वा कृत्वाऽन्यच्चांशपञ्चकम् ॥
निक्षिपेत् कोणमन्त्रौ तु द्वात्रिंशद्भिस्तु कोष्ठकैः । अनेन विधिना कुर्यात् त्रिकोणं भुवनं बाह. ॥

---

१. क-ग-घ—न्मध्यकुण्डलम् २. क—मानं मा ··· तः व्यूह ३. ख—प्रत्यद्यू ?
४. क-ख— .... तथा ५. ख—विस्तरं तु ग-घ—विस्तातु ? ६. ख—स्फुटम्
७. ग-घ—यदेप्य तत् ८. क-ग-घ—तत् क्षिपेत् करुणे क्षिपेत्
९. ख—शेषं तत् १०. क-ख—भ्यां .... नयेत्

प्रणीतमानव्यूहानां निष्पन्नानां च पौष्कर । निष्पन्नस्य तु वै यस्य लिख्यन्ते कमलादयः ॥
तन्मध्यभूप्रमाणेन तस्य लक्षणमुच्यते । चतुरश्रात् त्रिसूत्रं तु त्रिकोणं साध्य पूर्ववत् ॥ १०४
ततः कोणाद् ग्रहं सूत्रं कृत्वादौ मध्यमानयेत् । द्वे सूत्रे तेन सूत्रेण पक्षोपरि हि लाञ्छयेत् ॥
शेषकोणद्वयं कुर्यात् तद्वद्द्वे द्वे तु पक्षगे । सूत्रे सञ्चिह्नयेत्तावद् यावत् कोणोपगं द्विज ॥ १०६
द्वारादीनां प्रमाणं च साधनं ह्यवधारय । प्रधानं मन्त्रमूर्तीनां सार्धमेकशतं तु यत् ॥ १०७
ऊनमूर्तिद्वयेनैव पुरा ते प्रकटीकृतम् । [1]भोगमोक्षप्रसिद्ध्यर्थं भवेऽस्मिन् भविनां तु वै ॥ १०८
मूर्तिसङ्घकृतादेव सप्तत्रिंशद्विसंख्यया । आदिमूर्तिक्रमाद्यावत् [2]समर्च्यन्ते च मूर्तयः ॥ १०९
अब्दायनऋतूनां च मासानां च पृथक् पृथक् । पक्षाणां च दिनानां च क्रमात् ते पतयस्स्मृताः ॥
आदावब्दपतिः प्रोक्तस्ते चान्येऽयननायके । ऋत्विजा षट् समाख्यातं मासाधिपतयस्तथा ॥
द्वादश क्रमशो ब्रह्मन् मेरोः पक्षपतिस्स्मृतः । [3]तृचा.....संख्याता दिनेशत्वेन मूर्तयः ॥ ११२
यस्मिन् यदा यदा यागं हेतुना येन केन चित् । एकाब्जं बहुपद्मं वा चक्राब्जाब्जमथापि वा ॥
पतितौ पीठयाह्ये तु ऊर्ध्वतो गुरुसन्तते । इष्टा चाब्देश्वरं पूर्वमयनेशमनन्तरम् ॥ ११४
यदिदं मासषट्कं तु दक्षिणं वा द्विजोत्तम । तत्कालीयं च ऋत्वीशं तां मासेशक्रमान् यजेत् ॥
मासान्यं पक्षनाथं यत् पूजनीयमनन्तरम् । संवत्सरीयपक्षाणामेकमेव द्विजोत्तम ॥ ११६
[4]स्वं स्वं दिनेशं संपूज्य पक्षनाथादनन्तरम् । प्रत्यहं पृथुकार्यैश्च वह्निसन्तर्पणेन च ॥ ११७
निवारयति मूर्तीशं पूजाकालेऽभ्यपूजितः । यस्य वै मूर्तिसर्वस्य विषयोऽयं मयोदितः ॥
चतुर्मूर्त्यादितस्तेन कल्पयेद्व्यूहकल्पनाम् । यावत् सप्तदशस्तस्मात् क्रमेण परिसंख्यया ॥ ११९
तस्मिन् यस्याधिपत्येन तदाद्या मूर्तिमन्त्रराट् । दलानां क्रमशश्चान्ये मूर्तयः विनिवेश्य च ॥
यथा तदभिधास्यामि समासात्तन्निबोधतु । चतुर्व्यूहे चतुःपद्मे चतुर्मूर्ते द्विजोत्तम ॥ १२१
विन्यासं कीर्तयिष्यामि सर्वेषां व्यापकं तु यत् । मध्यपद्मे चतुःपत्रे व्यूहेशं कर्णिकान्तरे ॥
पूर्वदक्षिण आप्ये तत्तत्पत्रेषु क्रमान्न्यसेत् । मूर्तयश्चैव चत्वारष्षडङ्गपरिभूषिताः ॥ १२३
प्रदक्षिणक्रमेणा हि पूर्वपद्मादितः क्रमात् । मध्याम्बुरुहपत्रस्था मूर्तयो विनिवेश्य च ॥
प्राङ्मूर्तिः कर्णिकामध्ये [5]द्वितीयवलयेषु च । पूर्वनैर्ऋतवायव्यदिग्भागावस्थितेष्वथ ॥ १२५
तत्रैवापरपद्मे तु कर्णिकामध्यतो न्यसेत् । मन्त्रमूर्तिर्द्वितीया वै द्वौ द्वौ पूर्वदलान्तरे ॥ १२६
नैर्ऋतानिलपत्राभ्यां क्रमान्मूर्तिद्वयं तु तत् । ततस्तृतीयपद्मे तु तृतीयं कर्णिकान्तरे ॥ १२७
द्वितीया प्रथमा मूर्तिश्चतुर्थी पत्रमध्यतः । न्यस्याश्चामरमूर्त्यादिमूर्तयः कमलेषु च ॥ १२८

---

१. ख—भोगरक्षा  २. ख—समुच्यन्ते च

३. क-ग-घ—तृचा ... श्रञ्च ख—तृचास्तृतं च

४. क-ग-घ—स्वस्या  ५. क-ग-घ—द्वितीयादालयेषु

विन्यासश्च पुनः कार्या[1] सत्यमूर्त्यादि तेऽब्जज । मध्यपद्मं विनाऽन्येषां पद्मानां तु समूर्तिषु ॥
येन स्यादन्तमूर्तेर्वै प्राधान्यं कमलोद्भव । सर्वेषां कर्णिकामध्ये निष्ठामूर्तिर्निवेश्य च ॥ १३०
एवं मूर्तिचतुष्कं तु [1]न्यस्येत् तत्पङ्कजत्रये । पुरा वर्तितयोगेन दलानां पूरणार्थतः ॥ १३१
व्यूहनाथद्वितीयं यद् यत्तेषामूर्ध्वगं न्यसेत् । स्वस्य येन द्विविधिना[1] यजेन्मूर्तिगणं ततः ॥
अथोर्ध्वव्यूहसङ्घं यत् पञ्चपद्मादिसंस्थितम् । अनेनैव प्रयोगेण तस्मान्न्यासं समाचरेत् ॥
पद्मानां पद्मपत्राणां प्रादक्षिण्यक्रमेण तु । बहिस्स्थव्यूहपद्मानां यदा वै कर्णिकान्तरे ॥ १३४
न्यास एष द्वितीयादिमूर्तीनां कमलोद्भव । आदिमूर्तिमुद्देशविधिस्सर्वत्र पूर्ववत् ॥ १३५
मूर्तिन्यासं द्वितीयं यत् तत् प्राग्वत् परिकल्पयेत् । सर्वेषां व्यूहयागानामेष एवमिति स्मृतः ॥
प्रधानमन्त्रभूतस्य न्यासार्थं कमलोद्भव । व्यूहेशं पञ्चविंशो यत् प्राग्वद्व्यूहे त्रयोदशे ॥ १३७
अन्तर्बहिस्थपद्मानां बाह्याब्जा विशसो[1] न्तिमे । यथाऽस्मिन् व्यूहनिचये सहस्रपरिसंख्यया ॥
मन्त्रसङ्घापसव्यं च न्यसनीयं क्रमेण तु । व्यूहादाद्यात् समारभ्य यावदन्तं निबोधतु ॥ १३९
मध्ये व्यूहेश्वरं प्राग्वत् ततो मन्त्रचतुष्टयम् । न्यस्य पत्रचतुष्के तु पश्चात् प्राग्बाह्यपङ्क्तिजे ॥
व्यूहेशं कर्णिकामध्ये तत्रान्यस्मिन् द्वये तथा । पूर्वपत्रात् समारभ्य यावत्पत्रं तु वायवम् ॥
विन्यस्य पञ्चमं मन्त्रं क्रमात् षष्ठं तु सप्तकम् । अथ नैर्ऋतदिक्पद्मे तद्वत् पद्मक्रमेण तु ॥
अष्टमं नवमं न्यस्य दशमं [2]दशमन्त्रराट् । वायव्याशां गते पद्मे पात्राणां विनिवेश्य च ॥ १४३
यदेकादशकं मन्त्रं द्वादशाख्यं त्रयोदशम् । आद्ये व्यूहचतुष्पद्मे न्यस्य मन्त्रास्त्रयोदश ॥ १४४
पञ्चपद्मे द्वितीयेऽथ मन्त्रन्यासं वदामि ते । गर्भस्थे पञ्चपद्मे वै व्यूहेशं कर्णिकोपरि ॥ १४५
पूर्वपत्रात् समारभ्य [3]तस्मिन् वै मन्त्रपञ्चकम् । मन्त्राच्चतुर्दशादादौ यावदष्टादशं क्रमात् ॥
[4]तद्बाह्यस्थितपद्मानां चतुर्णामथ वक्ष्यते । पूर्वपद्मं समारभ्य [5]यावदुत्तरपङ्कजम् ॥ १४७
मध्ये व्यूहेश्वरं न्यस्य मन्त्रषोडशशक्तितः । चतुर्व्यूहक्रमेणैव दलानां विनिवेश्य च ॥ १४८
न्यूनविंशतिमाद्यावच्चतुस्त्रिंशच्च मन्त्रराट् । एवमेव क्रमेणैव व्यूहानां पत्रसन्ततिम् ॥ १४९
मध्यपद्मात् समारभ्य पूर्यं मन्त्रगणेन च । यावद्दशाम्बुजं व्यूहमाद्यव्यूहत्रयोदशः ॥ १५०
यावती पत्रसंख्या स्याद्व्यूहानां कमलोद्भव । तावन्ती मात्रसंख्या वै तेषु तेषु च विन्यसेत् ॥
सह व्यूहेश्वरो यावन्मन्त्रैष्षट्पञ्चभिर्विना । सहस्रकं तु मन्त्राणां ब्रह्मन् परिसमाप्यते ॥ १५२
त्रयोदशानां व्यूहानां विन्यसेदधिकं तु यत् । तावत्तु दशमे व्यूहे न्यसेदेकादशाम्बुजे ॥ १५३
मध्यपद्मात् समारभ्य सर्वेषां कर्णिकान्तरे । मध्याम्बुजे तु पत्राणा[6]मग .... तत्त्रिधा न्यसेत् ॥
पूर्वपत्रात् समारभ्य पुनरन्तर्दलाग्रकम् । एवमेव बहिष्ठानां स्वमन्त्राच्च पृथक् पृथक् ॥ १५५

---

१. ग-घ—सैन्यत्  २. ख—दशमन्दिरात्  ३. ख—तस्मिन्यन्मन्त्र
४. ख—बाह्यतः  ५. ख—पूर्वादुत्तर  ६. ख—मगद्यर्कं

तृतीया तु परावर्त्य द्रा .... कर्णिकान्तरे । प्राग्वत् सर्वदलाग्राणामस्त्रमन्त्रं निवेश्य च ॥ १५६
यथा भागेऽग्रमूर्तीनां विधानं सन्मयोदितम् । सहस्रमूर्तिविन्यासं व्यूहानां तु भवेत्तदा ॥ १५७
न कर्णिकागतं मन्त्रं दलमध्ये नियोजयेत् । [1]तद्द ... न्यसेन्मध्ये प्राग्वत् संचारयोगत ॥
किन्तु व्यूहेश्वरं प्राग्वन्न्यस्य मन्त्रगतं ततः । विनिवेश्य दलानां च यथा ते कथितं मया ॥
एकरूपमिदं न्यासं सह तस्य प्रकीर्तितम् । द्विधावृत्तं न कर्तव्यं मूर्तिवद्द्विजसत्तम ॥ १६०
इच्छायां तेन विधिना मन्त्रसंख्यां प्रकल्प्य च । अभीष्ट .. आत्मपूज्यो व्यूहयागे त्वभीप्सिता ॥
अभीष्टफलसिद्ध्यर्थं भक्त्या परमया द्विज । रुचिमूर्तिषु नित्यंव कर्माणि स्थापनादिके ॥ १६२
वत्सरे वत्सपर्यन्ते क्रमाद्याद्याश्च [?] यस्य यत् । [2]क्रमोजतोवहाद्यस्था [?] त्विच्छासिद्धिव्यपेक्षया ॥
प्रयायात् सोहया[3]रूपा . .त्वन्नाम्य [4]परेव्रजेत् [?] । साङ्गं वा यस्य मन्त्राख्ये ततपत्राष्टके [?] परा ॥
शब्दभावस्वरूपा च षाड्गुण्यमहिमावृता । पूर्णावसानमिष्ट्वैव कर्णिकाकेसरोर्ध्वगा ॥ १६५
स्वरे चान्तस्वरूपां च सर्वगां ब्रह्मलक्षणाम् । ततस्तु भागपद्मस्थां मन्त्रमूर्तिज्वलप्रभाम् ? ॥
संस्मरेत् कर्णिकोर्ध्वे तु साकारां भावयेत्ततः । केसरेषु तदङ्गानि तैर्विना पूजयेत्ततः ॥ १६७
शब्दमात्रेण [5]तत्त्वेन . प्राग्वद्दलेषु च । क्रम एवं त्रिमूर्तेर्वै कथितो मण्डलार्चने ॥ १६८
त्रिमूर्तेरपि विप्रेन्द्र त्विच्छामूर्तिधरस्य च । तत्रायं हि विशेषस्स्यात् प्राग्जले कर्णिकोर्ध्वजा ॥
द्वितीया केसरोर्ध्वस्था तृतीया दलदेशगा । सवस्तुपञ्चषट्सप्तपूर्वास्वभ्यर्चने तु वै ॥ १७०
मूर्तिसंख्यासमं कुर्यात् पद्मस्य दलसञ्चयम् । यजेद्दलेन मूर्तिं तु .. वै क्रमात् ॥ १७१
मध्ये च कार्या विधिवन्मध्यस्था तत्र तद्बहिः । एवमग्नौ जलेऽप्यत्र हृदये कमलेक्षण ॥ १७२
परापरविभागेन मन्त्रमूर्तिगणं महत् । सामान्यपरिवारं च पूजितं शुभमिच्छति ॥ १७३

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां

व्यूहलक्षणो नाम

सप्तमोऽध्यायः

---

१. ख—तद्दलस्थममे मध्ये २. ख—क्रमावता ३. ग-घ—रूपालेव ... न्नाम्य
४. ख—परे व्रजेत् ५. ख—तत्रैव त्वाद्यात्

# अथ अष्टमोऽध्यायः

**पौष्कर उवाच—**

चक्राब्जे देवदेवेश न श्रुतं लक्षणं मया । यत् त्वया पूर्वनिर्दिष्टं तदिदानीं वदस्व मे ॥ १

**श्रीभगवानुवाच—**

चक्राब्जं बहुधा [१]ख्यातमेतच्छतसहस्रकम् । एकं त्वनेकधा यातं यथा तन्मे निबोधतु ॥ २
[२]यमोचकाराश्शतशो द्विरात्मादौ तु देवता । यातास्सन्ति भविष्यन्ति येषां संख्या न विद्यते॥३
मोक्ष[३]मार्गाः प्रवर्तन्ते लोकानां हितकाम्यया । सन्तारयति भूतानि ते घोराद्भवसागरात् ॥ ४
भक्तानामाश्रितानां च तथा शुद्धावलम्बिनाम् । कुर्वन्त्यनुग्रहं चैव नित्यं सन्मार्गसेविनाम् ॥ ५
ममांशाश्शक्तिरूपास्ते षाड्गुण्यविभवान्विता. । हितास्तेषु प्रपन्नास्ते पूजयन्ति जयन्ति च ॥ ६
स्तुवन्नुच्चैर्नमन् ध्यायन् सततं संस्मरन्ति च । ते पद्मोदरचक्रेषु पूजिताभिमतप्रदाः ॥ ७
हेतुनाऽनेन विप्रेन्द्र त्वस्माच्चक्रवरादहम् । [४]सर्वाधाराच्च विकारात् प्रलीनाराच्च कारणात् ॥ ८
सहस्ररविसंकाशात् तद्बिम्बवरवर्तुलात् । अष्टवायदर्चां नित्यात् साक्षा[५]दवयवोज्झितात् ॥ ९
द्वारकादीनि चक्राणि स्वेच्छया संसृजामि च । यत्रस्थास्संप्रपूज्यन्ते भक्तैश्च व्यूहकादयः ॥१०
त्रिद्व्येका नाभिसंसक्तास्तद्वन्नेमिविभूषिता । प्रधिभिश्चावृतास्सर्वे प्रतिभिश्चाक्षशोभिता ॥ ११
नानारूपाणि च मया क्रमाद्यान्युदितानि च । चक्रमाद्यं पुरस्कृत्य सर्वेषा साधनं शृणु ॥ १२
वक्ष्ये नवविधं विप्र भेदं चैवोत्तमादयः । रूपभेदं समासेन मानवृद्धि तथैव च ॥ १३
सूत्रपातविधि चैव ततश्चैवांशकल्पनाम् । संसाधनमराणां च रजसा पूरणं ततः ॥ १४
चक्रावयवदैवत्यं तथा निर्वचनं द्विज । अक्षादौ नेमि? विन्यस्य पूजनं देवतास्वपि ॥ १५
चक्रं पूजाफलं चैव सर्वमेतन्निबोध मे । [६]यस्त्वि दं चरणं चक्रं मार्यार मभिपूजने ॥ १६
साम्प्रतं सम्प्रवक्ष्यामि यथा तल्लिख्यते द्विज । भद्रादीनां हि सर्वेषां मण्डलानां समासत. ॥ १७
मध्यभूमौ ततस्सर्वं ससरोजं समुज्ज्वलम् । क्षेत्राभ्यां द्वादशांशं तु त्यागा[७]पीठोपगं सदा ॥ १८
आमितं व्योमवृत्तं तद्बहिश्चक्रसरोरुहात् । व्योमवृत्तान्तरे तद्वद्द्वितीयं भागमुत्सृजेत् ॥ १९
ततस्संविभजेच्छेषं पद्मं वै चक्रपङ्कजम् । केवलानां च पद्मानामाख्यातं लक्षणं मया ॥ २०
प्रोक्तं संसक्तपत्राणां त्रिदलादौ समासत. । तथा संसक्तपत्राणां यथा वै कमलोद्भव ॥ २१
सचक्राणामथो वच्मि लक्षणं लक्ष्मिवर्द्धनम् । विभज्य पञ्चधा क्षेत्रं यदुक्तं प्राज्ञया तव ॥

---

१. क-ग-घ—ख्यातमेतैश्शत  २. ख—यामोचकारा ··· द्विरात्मातो तु
३. क-ग-घ—मार्गात्  ४. क-ग-घ—सर्वधाराच्च  ५. क-ग-घ—दवयवो ··· ता
६. क— ··· ··· श्चरणं  ७. ख—पीठोपसङ्गताः

भ्रामक्रमेण विधिवद्विभागेनाक्षमक्षयम् । चक्रभ्रमद्वयेनाथ भागैकं चक्रभूमिका ॥ २३
एवं च विविधं भङ्क्त्वा भ्राम्य वृत्तं भयं ततः । सितादि[1]रत्नजेनैव धातुजेनाथवा द्विज ॥ २४
[2](पवित्रेणोज्ज्वलेनैव धातुजेनाथवा द्विज ।) पवित्रेणोज्ज्वलेनैव रजसा पूरयेत्ततः ॥ २५
अक्षक्षेत्रे लिखेत् पद्मं सम्यगुच्छ्रितकर्णिकम् । सुशुद्धं कर्णिकाबीजं स्फटिकामलसन्निभम् ॥ २६
श्यामं बीजान्तरं कुर्यात् कर्णिकाकनकप्रभम् । प्रशान्तपावकाकारं कुर्यात् केसरसन्ततिम् ॥ २७
पद्मपत्रसमूहं तु सुसितं च सितादिकम् । इन्द्रनीलनिभं कुर्यात् पङ्कजेऽस्मिन् दलान्तरे ॥ २८
सितेन चक्रवृत्तेन सर्वाणि परिरञ्जयेत् । अयस्कान्तसमानेन राजोपल[3]निभेन वा ॥ २९
रजसा पूरयेच्चक्रं समन्तात् सुशुभेन च । दर्पणोदरवद्विप्र तीक्ष्णाग्रं भ्राजयेत्तथा ॥ ३०
रञ्जयेच्चक्रभूमिं च रविरश्मिचयोपमम् । रोचनाभेन रजसा पद्मरागनिभेन च ॥ ३१
[4]पीनपिष्टोपमेनाथ हुतभुक्सदृशेन वा । पूरयित्वा तु पीतेन रश्मिपुञ्जं समालिखेत् ॥ ३२
चक्रभूमौ तु विप्रेन्द्र या पूर्वं परिकल्पयेत् । ज्ञात्वा तु मण्डलं चैव पूर्ववत् परिरञ्जयेत् ॥ ३३
इति ते वर्तुलश्शुभ्र[5]चक्रधाम मम प्रियात् । पद्मगर्भाभिधानं च विधिवत् कथितं मया ॥ ३४
वासुदेवाभिधानेन [6]मद्रूपश्शब्दविग्रहः । अस्मिन् मध्येऽष्टपत्राब्जे पूज्ये चैकोपरोपरि ॥ ३५
भक्त्या जनत्रिधामो वा त्रिधामोपरि सत्त्वभाक् । पूर्ववच्चाङ्गषट्कं तु न्यसेत् पद्मदलान्तरे ॥
ममापरं च यद्रूपं पौरुषं हि यदब्जज । तं चक्रोपरि संपूज्य स्वनाम्ना प्रणवादिना ॥ ३७
नमस्कारान्तयुक्तेन कर्मणा मनसा गिरा । पूजनं परिवारं च विज्ञातव्यं हि पूर्ववत् ॥ ३८
पद्मयागप्रणीतं च [7]कर्माधारादिपूजनम् । इति तं पूर्वचक्राब्जं यथावत् समुदाहृतम् ॥ ३९
ब्रह्मेन्द्ररुद्रदेवानामस्य रश्मिचयश्च यः । [8]आपा .. वै सुदूराच्च निरीक्षणात् ॥ ४०
तेन चक्रं तु विख्यातं नाम्ना सुदर्शनं द्विज । प्रणतानां च भक्तानां यस्माच्च सुलभं सदा ॥
ददाति दर्शनं तेषां स्मृतं तस्मात् सुदर्शनम् । आसप्तमात्तु पातालात् सत्यान्तं यावदेव हि ॥
धारयत्येष वीर्यात्मा सृष्टि[9]संहारकृत् सदा । संसारश्च [10]भ्रमत्यस्मिन् सदेवासुरमानुषैः ॥ ४३
भ्रामयत्यपि सर्वेषां नित्यं ह्यविदितात्मनाम् । संसारचक्रं तेनेदं वदन्ति विबुधादयः ॥ ४४
कालेन संहरत्येषां मयोद्दिष्टेन तेजसा । सर्वं कल्पावसाने वै भूतसङ्घं द्विजोत्तम ॥ ४५
[11]क्रमाच्चक्राब्जधारां वै कलचक्रं [12]चतश्रुति । इत्येतत् कारणं चक्रमव्याकृतमनुस्मृतम् ॥

---

१. क-ग-घ—रक्तजेनैव २. इदमर्धं सर्वत्राप्यस्ति ३. ख—निभेन च
४. ख—पीत. चीनेति स्यात् किम् ५. क-ग-घ—चक्रयाच ६. क-ग-घ—मरुचश्शब्द
७. क-ग-घ कर्मधारादि ८. ग-घ—आपभूल्लोहिताना लोपिताना
९. क-ग-घ—संहारकस्सदा १०. क-ग-घ—भ्रमं तस्मिन्
११. क-ग-घ—क्रमाकर्कचधार १२. ख—चक्रं च तत् शृतम्

सविकाराणि कार्याणि द्वारकादीन्यतश्शृणु । चक्रस्यानेकरूपाणि नानासिद्धिप्रदानि च ॥ ४७
इदं कचित्क्रमं चक्रं [1]वायातं[1] बहुधा द्विज । [2]अस्य भेदस्तु प्रथमो ह्यरकस्समुदाहृतः ॥ ४८
तथैव त्र्यरकस्त्वन्यो भेदः पश्चात् सुकीर्तितः । अन्यं द्विद्विगुणाकारं पञ्चारं षडरं तथा ॥ ४९
सप्तारमथवाऽष्टारं नवारं च दशारकम् । अस्य चक्रद्वयस्यान्तर्यानि चक्राणि सन्ति वै ॥ ५०
तानि चक्राणि पूज्यन्ते त्रैलोक्ये विबुधादिभिः । चक्रत्रयं च सामान्यं ज्येष्ठमध्यकनिष्ठकम् ॥
त्रिधागतमथैकैकं [3]यथा मे तन्निबोधतु । भेदेन चक्रसंङ्घं च प्रवदामि पृथक् पृथक् ॥ ५२
प्रथमं चोत्तमं विद्धि चक्रं चक्रगणस्य च । अन्यच्चोत्तममध्याख्यं चक्रं च समुदाहृतम् ॥ ५३
तथोत्तमकनीयं च तृतीयं परिकीर्तितम् । [4]मध्यमोत्तमचक्रं तु तथा मध्यममध्यमम् ॥ ५४
[5]तथा मध्यकनीयो हि मध्यमत्रितयं त्विदम् । तृतीयस्य [6]त्रिकं सम्यक् कनीयञ्च करास्मृतम्[?]॥
कनीयो[?] मध्यमं ज्ञेयं कनीयस्यकनीयसा । [7]एकैकस्य च वक्ष्यामि ज्ञापकं शुभलक्षणम् ॥ ५६
त्रिनाभि चोत्तमं चक्रं त्रिनेमि द्विजसत्तम । त्रिनाभिचक्रं द्विर्नेमि द्वितीयं तृतियं शृणु ॥ ५७
ज्ञेयं त्रिनाभ्येकनेमिं तृतीयं प्रथमं स्मृतम् । द्विनाभिचक्रं कथितं युक्तं नेमित्रयेण च ॥ ५८
त्रिचक्रस्य [8]द्वितीयं स्यादित्युक्तं द्वितयं शृणु । द्विनाभिसंयुतं तच्च नेमी च परिकीर्तितम् ॥५९
अतो द्विना[9]भ्येकनेमि द्वितीयं [10]त्रितयाञ्चितम् । तृतीयं च प्रवक्ष्यामि चक्रेण त्रितयं च यत् ॥
आद्यं स्मृतं चैकनाभि [11]वृत्तनेमित्रयेण तु । ज्ञेयं द्विनेम्येकनाभिरूपं हि द्वितयस्य च ॥ ६१
स्यादेकनाभ्येकनेमि तृतीयस्य तृतीयकम् । इति तच्चक्रनवकं व्यापकं कथितं मया ॥ ६२
[12]विभवेच्छानुरूपेण प्रमाणं परिकल्पयेत् । स्याद्विप्र षडरं याव[13]द्दिव्यं चक्रं सुलक्षणम् ॥ ६३
[14]त्रितयं त्रितयं विद्धि अङ्गुलानामतो नयेत् । द्वादशारं भवेद्यावन्मासाख्यं चक्रमुज्ज्वलम् ॥६४
अतोऽर्धद्वितयं विद्धि अङ्गुलानां नयेत् क्रमात् । षट्त्रिंशसंख्यया यावत् संख्या भवति चक्रराट् ॥
[15]संवत्सराख्यचक्रस्य इत्येषाऽङ्गुलिकल्पना । भक्तानां[16]च विभक्तानां सममानं प्रकल्पयेत् ॥
एकहस्तात् समारभ्य षडंश वर्धयेत् क्रमात् । सहस्रारविधि यावदित्येषामंशकल्पना ॥ ६७

---

१. ख—वावातं २. क-ग-घ—अर्ध्यभेदस्तु प्रथमो ह्यरकास्समुदाहृताः
३. क-ग-घ—यथा मेय ४. क-ग-घ—चक्र तु चक्रमध्यं तु यज्ञ चक्रं तथाम्यहम्
५. क—तथामध्यम ··· तयञ्चित ग-घ—तथा मध्यकनीयो हि .... कं
६. क—त्रिकं सद्यकनीयं च करात् स्मृतम्* चक्रराट् स्मृतम्, इति स्यात्
७. क-ग-घ—अनेकैकस्य ८. ख—द्वयस्यादि इत्युक्तं
९. क—भ्येकनाभि १०. ख—त्रितय त्विद ११. ख—वृत्तनाभि
१२. क-ग-घ—विभवैश्चानु १३. क-ग-घ—दिग्विचक्रं
१४. ख—तृतीयं १५. क-ग-घ—सेवेत्साराख्य
१६. ख—चाविभक्ता

प्रोक्ता युगाख्यकल्पस्य सिद्धेस्संपूजितस्य च । समाङ्गुलोत्थितानां वै चक्राब्जानां तु सर्वदा ॥
पीठादिकल्पना कार्या बहिर्द्वारावसानिका । सपादगात्रगार्थं ' ञ्च विंशं वा परिकल्पयेत् ॥६९
तुर्याग्रं पञ्चरेखं च पादगात्रकवर्जितम् । पुरं प्रकल्पयेद् यत्नात् पञ्चरङ्गोज्ज्वलं समम् ॥ ७०
प्राक् प्रसिद्धेस्तु दिक्सूत्रैः पूर्वयाम्याप्यसौम्यगैः । संसाध्य कण्ठनिचयं सूत्रैश्चैव बहिस्स्थितैः ॥
चक्रक्षेत्रार्द्धतो यावत् प्रमाणेन प्रकल्पयेत् । प्रतिवारणरेखानां क्षेत्रपीठस्य तत्समम् ॥ ७२
[1]वीध्यर्थं द्विगुणं तस्माद्द्वाराणां वीधिसंमितम् । षष्ठेन वाऽष्टमांशेन तत्र त्वेतानि कल्पयेत् ॥७३
[2]यूनया विप्रसामान्या युवत्या सविशेषया ? । पीठभागं तथा सम्यक् कृत्वा सूत्राष्टकं क्षिपेत् ॥
दिक्षु मध्यस्थितैर्भागै[3]र्गात्राण्यग्रीन् विदिक्स्थितैः । द्वारवैपुल्यमानं तु द्विधाकृत्य त्रिधाय तत् ' ॥
[4]समानेन विभागेन चतुरश्रङ्ग ' सिद्धयेत् । विभज्य सूत्रयेत् पश्चाद्द्वारशोभाश्रिसाधने ॥ ७६
इच्छयाऽऽलोकयेद्वाह्य ' यथाशोभानुरूपतः । सद्वाराणि सकोणानि सशोभान्यथतो ' रिव ॥७७
उपशोभसमानानि सोपचारं त्रिपूर्ववत् ' । न ह्यप्राप्तिरसंख्यानामंशानां मार्जनाश्रिषु ॥ ७८
कंठदेश्शो .... ... क पदादिना । क्रमेण सन्तु विप्रेन्द्र पुरुषाणां ... ॥ ७९
.... साधना ह्येषां सविशेषोऽथ वक्ष्यते । यागमेकं तु सूत्राणां तुर्याश्रीकृत्य बाह्यतः ॥ ८०
रुचिमण्डलकह्लारक्षेत्रवत् तस्य कल्पनम । कृत्वाऽथ सर्वदिक् तस्य तत्समैर्विभजे' ' पदैः ॥८१
वीतभागप्रमाणेन .... .. । तस्यैवाब्जकल्पा वै मण्डलस्य तु विस्तरः ॥ ८२
.... .... कृत्वांशं गणतां पुरा । चतुरश्रं पुरा त्र्यंस्त्वेकसूत्रं बहिः क्षिपेत् ॥ ८३
सूत्रेण चापभेदेन पादयित्वाऽङ्कय पूर्ववत् । नानाविधेन रूपेण पीठादीन् परिलोपयेत् ' ॥ ८४
[5]व्योमवृत्तसमं भागं नेमिवृत्तात् त्यजेत् पुनः । एव हि व्योमवृत्तादौ भक्त ' भ्राम्य प्रमाणतः ॥
यदा यच्च लिखेच्चक्रं .... याव .. ररकैर्युतम् । नद्यादौ पूर्वदिग्भागे .... . . ॥ ८६
एवं चक्रारविन्दानां प्रमाणं कथितं मया । गुसाधनमथो वक्ष्ये साधकानां हिताय वै ॥ ८७
चक्रक्षेत्रात् षडंशेन नेमिक्षेत्रं प्रकल्पयेत् । ८८

---

१. क-ग-घ—विध्यर्थं ... ... विधिसमित

२. ख—युतय विप्रसामान्य .... .... सविशेशपतः

३. ग-घ—गात्राण्यस्त्रर्विदिक् ४. ख—समभागेन चतुरा शृङ्गभागं सुसिद्धयेत्

५. क-ग-घ—'नानाविधेन-परिलोपयेत्' इत्यनन्तरं "एवं चक्रारविन्दानां" "संसाधनमथो वक्ष्ये" "चक्रक्षेत्रात्" इत्यर्धत्रय, अनन्तर "व्योमवृत्त" "एवं हि व्योमवृत्तादौ" "यदा यच्च" "नद्यादौ" इति ग्रन्थानुपूर्वी दृश्यते ।

ख—कोशानुसारिणि उपरि प्रदर्शिते ग्रन्थशरीरे "यदा यच्च" इत्यर्धानन्तरं "नद्यादौ" इत्यादिः पाद एकः लेखकप्रमादपतित इति साधीयसी दृष्टिः ।

नद्यादौ पूर्वदिग्भागे ससाध्ये मरकद्विज ? । क्षेत्रद्वारसमं भङ्क्त्वा व्यक्तं चैवाङ्कयेत्ततः ॥ ८९
भाजितानामरांशानां कुर्यात्तु दलनां पुरः । दले कृतेऽथ सर्वेषां मध्यसूत्रं तु पातयेत् ॥ ९०
पतितैर्विभजेत् [1]पश्चाद्दलैकैकं द्विरष्टधा । स्पष्टसूत्रक्रमेणैव सूत्रमास्फालयेत्ततः ॥ ९१
[2]संभज्य भागमेकैकमराणां पार्श्वयोर्द्वयोः । सिद्धिं कुर्यात् तथाऽराणामंशषट्केण सर्वदा ॥ ९२
इत्येवाऽध्वरगादीनां चक्राणां भागकल्पना । आख्याता द्विजशार्दूल त्वराणां साधनं शृणु ॥ ९३
अराख्यमध्यमन्त्राभ्यामराख्याभं तथैव च । शृङ्गमानान्तरसमं कृत्वा सूत्रं तु तेन वै ॥ ९४
भ्रामयेत् पूर्णचन्द्रौ द्वौ भावयोरुभयोरपि । [3]तस्यातिशायकौ यस्य पूर्णा यैः परिधावतः ॥ ९५
सिद्धिस्थानाद्भ्रमं कुर्यात् सूत्रे ब्रह्मपदे स्थिते । प्रागाद्यायुपसंख्यैर्वा क्षेत्रं सूत्रैर्विभज्य च ॥ ९६
द्वाभ्यां द्वाभ्यां ततः कुर्यात् सप्तधा सप्तधाऽन्तरम् । षट्कं षट्कमथो बाह्या ? सूत्राणां प्रत्यरांशके ॥
मध्यसूत्रैरारासिद्धि ? प्राक्छदं चारमानतः । द्वाभ्यामराभ्यामेकांशमन्तरेवं विशिष्यते ॥ ९८
अनेन विधिना विप्र क्रियमाणेन सर्वदा । इदं त्वराणां सन्धानं चक्राणां कथितं मया ॥ ९९
वरसीकी ? च संज्ञानं केवलानां समासतः । कर्तरीयन्तरीयाणा ...ञ्च ? लक्षणं प्रवदाम्यहम् ॥
यदष्टधा कृतं पूर्वं मराङ्गस्तु ? द्विषट्कधा । विभज्य भागषट्केन पूर्वकं द्वारकं स्मृतम् ॥ १०१
स्थापितेष्वरकेष्वेवं कुर्यात् कर्तरि[4]सञ्चयम् । उभाभ्यामप्यराभ्यां च शिष्टं यत्त्रितयद्वयम् ॥
अंशकानां च पार्श्वे तु संसाध्या तेन कर्तरी । [5]प्रदक्षिणाग्रहा चोरा परशोरद्वरूपिणी ? ॥ १०३
प्रोद्धृत्य चोत्तरे भागे प्रागाकारस्य दिग्वशात् । [6]परिपात्व ? नयत्येषामरकाणां तु साधयेत् ॥
प्रदक्षिणक्रमेणैव कर्तरीणां च साधनम् । तत्साधनार्थं सूत्राणां संख्यातं वागमस्मृतम् ? ॥ १०५
पूर्वापरं मध्यपूर्वं ... वृत्तस्य सङ्गमे । निधायान्यन्नयेत् सूत्रमध्याद्वै . नमस्य च ॥ १०६
अरमूलाद्द्वितीयस्य त्रयाभ्यामस्य सङ्गमम् । मध्यमं लाञ्छ्यमानं तु तदराग्रमथानयेत् ॥ १०७
अरमध्यात्तृतीयस्य पूर्णचन्द्रयुसङ्गमे । संस्थाप्याथानयेत सूत्रं स्थानं यत्तन्निबोधतु ॥ १०८
अराग्रपरिलेख्यस्य चतुर्थस्यारमध्यगात् । षट्सङ्गमं द्विजश्रेष्ठ तस्मात् स्थानं तु मत्स्यवत् ॥ १०९
लाञ्छयेन्मूलपर्यन्तं व्यज्यते कर्तरी स्फुटा । सामान्यलक्षणं ह्येतद्विशेषमधुनोच्यते ॥ ११०
अरसंकोचविस्तारवशात् कमलसंभव । साधनं कर्तरीणां च न्यूनमप्यहिवारयत् ? ॥ १११
मूलादन्यत्तथाऽराग्रे वृत्ताभ्यां मानमन्तरात् । गृहीत्वा सूत्रमानं तु [7]तस्मिन्धा ? .... पौष्कर ॥
सूत्रादर .... त्रिस्थं पुनरेव हि । [8]संस्पृशेत् सङ्गमं यद्वै त्वरातुर्येऽन्तरभ्रमे ॥ ११३

---

१. क-ग-घ—पश्चाद .... .... कैर्द्वि ख—दरैकैकं द्वि
२. ख—सन्त्यज्य ३. क-ख—तस्याति ··· यकौ यस्य पूर्णा ··· परिधावतः
४. ख—संयमः ५. सर्वत्र एकरूपाण्यक्षराणि ६. ख—परिपात्य
७. ख—तस्मिन् धायत ? ८. क-ग-घ—सङ्गस्पर्शात्सङगमं

प्रेर्यमाणं तदवधे? पूर्वचिह्नस्य मीलयेत् । यथा स्यात् कर्तरीणां तु स्फुटमूलमरास्समम् ॥११४
कर्तर्यन्तरितानां च? मित्युक्तं साधनं मया । परिद्धितीयसंज्ञानमन्येषां वक्ष्यतेऽधुना ॥ ११५
सार्धेष्वरेषु विप्रेन्द्र त्वरमूले भ्रमान्तरे । नेमिक्षेत्राच्चतुर्थांश[१]माद्यात् तं भ्रामयेत् समम् ॥ ११६
विज्ञातव्यं तु तच्चक्रमरकायस्य साधिका । नेमिक्षेत्राच्चतुर्थांशं भिन्नं तु परिकल्पयेत् ॥ ११७
नाभिक्षेत्रं द्विजश्रेष्ठ भजेच्चक्रवशात्तु ते । क्षेत्रे तु नाभिनेम्याख्ये वृत्ते स्त्री द्वैतकं क्रमात् ॥ ११८
नाभिक्षेत्राद्यतं[२] स्थूलं क्षेत्राख्यं क्षेत्रमुच्यते । पराख्याऽस्या स्वरागस्य तस्यैषा क्षेत्रकल्पना ॥
कार्या वै व्योमवृत्तादौ यावदक्षावसानिका । अक्षादौ कल्पना कार्या व्योमवृत्तावसानिका ॥
मातुलुङ्गाकृतिर्येस्मिन् पद्मपत्रायता समा । इन्दीवरदलाकारा वलिका जठरास्तथा ॥ १२१
यवोदरे त्रिसंज्ञाश्च त्वेनेषां साधनं शृणु । कृत्वा द्वादशधा क्षेत्रं भ्रमाख्येन क्रमेण तु ॥ १२२
मध्ये भागत्रयेणाक्षं नाभिं भागद्वयेन तु । नाभ्यरक्षेत्रयोर्मध्ये भागैकं चक्रसंज्ञितम् ॥ १२३
भागद्वयं त्वरक्षेत्रनेमिं भागद्वयेन वै । नेम्यरक्षेत्रयोर्मध्य एकांशं संपरित्यजेत् ॥ १२४
अरक्षेत्रं द्विधा कृत्वा भ्रामयेत् तदनन्तरम् । अराख्यमध्यसूत्रस्य नावृत्तस्य च सङ्गमे ॥ १२५
अरात् त्रिभागजं सूत्रं स्थापयित्वाऽथ लाञ्छयेत । पार्श्वे द्वे मध्यसूत्रस्य मध्यसूत्रात्तु वै ततः ॥
एतस्मिन् लाञ्छने सूत्रे स्थापयित्वाऽपरं तथा । मत्स्यवल्लाञ्छनं कुर्यादरमूर्ध्ना तु तेन वै ॥
अराग्रात् परिधीन् यावद्द्वितीया तावदेव हि । बीजपूरोपमाराणां सन्धानं कथितं त्विदम् ॥
अराख्यमध्य[३]सूत्रस्य त्वरमूलस्य च तत्? । मन्धौ ध्वंशकजं सूत्रं लाञ्छयित्वा नरोभ्य च? ॥
अर्धचन्द्राकृतिममं यावन्मूलभ्रमं स्पृशेत् । मूलमग्रं शशि[४]शृङ्ग .. सूत्रं निधाय च ॥ १३०
तथाऽराग्रमथास्फाल्य पद्मपत्रायते द्विज । लक्षणं च समाख्यातमुद्दिष्टं यत् पुरा मया ॥ १३१
इन्दीवरदलाग्राणामराणां साधनं शृणु । आरान्मूलभ्रमाद्विप्र द्वितीयस्य भ्रमस्य च ॥ १३२
तन्तावरोदरी यस्या सूत्रं कृत्वा तु सन्धिगम् । हाद्गमन[५]सूत्रेण भक्तव्यमपि लाञ्छनम् ॥
पार्श्वाभ्यां मध्यसूत्राणि कृत्वा मध्यभ्रमे द्विज । तच्चिह्नरादितं सूत्रं कृत्वाऽराग्रमथानयेत् ॥
लाञ्छयेन्मध्यवत्तसाद्यावन्मूलमराख्यकम् । कृते प[?] लाञ्छने स्यान्नीलनीरजपत्रवत् ॥ १३५
त्रिभागभाजितं क्षेत्रं कृत्वाऽऽदौ भ्रामयेत् समम् । ततोऽङ्कयेदरैकैकं स्पष्टसूत्रक्रमेण तु ॥ १३६
षोढा द्विजेन्द्रयाऽङ्केषु सूत्राणि च निपातयेत् । कोष्ठकाष्टदशैकैकमराभागवतो? नयेत् ॥ १३७
[५]असो अय चवाश्चो द्वे[६] .. कोष्ठकद्वयम् । लोपयेद्विजशार्दूल तद्वन्मूलात्तु मर्दयेत् ॥ १३८
द्वे द्वेऽथ मध्यदेशाच्च पार्श्वयोरुभयोरपि । एवं लुते त्वराद्यये लोपयेदप्यरान्तरम् ॥ १३९

१. क-ग-घ—दद्यात्त २. ख—सूत्रस्य त्वरादस्य च तत्परा
३. ग-घ—शृङ्गतद्धौ सूत्रं ४. क-ग-घ—सूत्राणामुपाभ्यामपि
५. सर्वत्र एकरूपाण्यक्षराणि ६. क-ग-घ—अभकं ख—अभृतं

मूलात् कोष्ठचतुष्कं तु तथा चैवाग्रतस्ततः । कोष्ठकद्वितयं मध्याल्लोपयेत् सिद्धये द्विज ॥
वल्मीकोदरसंज्ञं च न वल्मीकोदरं तथा । अरान्तरं यथा लुप्तमग्रमूलाच्च मध्यतः ॥ १४१
तद्वल्लुप्तमराबाह्य[1] मूलमध्या त्वराग्रतः । यवोदरं हि धानाध्यात्? न यवोदररूपदृक् ॥ १४२
भङ्क्त्वा भ्राम्य चतुर्धा वा स्याद् द्वादश यथा. . .। वल्मीकद्वयमध्यानां मध्यभागाच्च पक्षयोः ॥
क्रमश्चतुश्चतुर्द्वे द्वे मूलाग्रेभ्यः पुरोदितम् । . . . [1]द्विषट्कस्य बाह्या वै संख्ययाऽनया ॥ १४४
षड्विधेन तु भेदेन स्वस्याचाराद्यनेन च । [2]ततोऽक्षादौ यदन्तस्थ[?] स्पष्टसूत्राणि लोपयेत् ॥
शुद्धिं कुर्याद्विजातानां षण्णां व्यञ्जन्ति ते यथा । प्रतिचक्रं तु चक्राणां नेमिक्षेत्रस्य मध्यगम् ॥
दर्शयेद्द्विविधं चैव यथा तन्मे निबोधतु । अरा समं द्विगुणितं तत्क्षेत्रं चांकयेत् समम् ॥ १४७
अराग्रसंमुखं [3]चैव तत्पार्श्वे तु यथा तथा । निपातयेच्च सूत्राणि[4] .... स्थानगतान्यतः ॥
[5]एवं द्विजेन्द्र चक्राणां प्रधिनामयनं स्मृतम् । उत्तमाङ्गं च [6]पादाङ्गं शरीरं स्नायुभिर्यथा ॥
निबद्धं तद्वदेवास्य चक्रस्य प्रथमस्थिता । नान्यत्र दर्शनं तासां नेमिक्षेत्राद्दते क्वचित् ॥ १५०
[7]चक्रस्य .... त्वित्येतत् समुदाहृतम् । द्विरनेकेमपागम[?] [8]बाह्यस्थे संप्रदर्शयेत् ॥ १५१
द्वयमभ्यन्तरे त्यक्त्वा त्रिनेमिवलितस्य च । तृतीये प्रथमं कार्या पूर्ववत् परिसंख्यया ॥ १५२
चक्राणां द्व्यरकादीनां विधिनाऽनेन साधनम् । कथितं द्विजशार्दूल रासाम? पूजयेत्ततः ॥ १५३
यत्नाराख्यानि लम्बानि लाञ्छने स्थापितानि च । सर्वाणि चक्रवृत्तानि सितेनापूर्य पूरयेत् ॥
सुसमासु च रेखासु खड्गधारोपमासु च । पद्मं तु पूर्ववत् कुर्यादसंसक्तदलं सितम् ॥ १५५
[9]नेम्यरा नाभियुक्तस्य .... तदन्तरे । कल्पितं कमलं तस्य कृष्णं कुर्याद्दलान्तरम् ॥ १५६
हेमदूर्वाप्रवालाभं [10]त्रिनाभेः क्रमशो द्विज । [?] दि त्यादि हेमश्यामेनाप्यरुणेनैकनाभि च ॥ १५७
चक्रस्य पूर्वमुद्दिष्टं रञ्जनं कमलासन । चक्रवच्चारकान् सर्वान् रजसा संप्रपूरयेत् ॥ १५८
अरान्तरं द्विजश्रेष्ठ चक्रभूमिसमं स्मृतम् । पीतकाभेन शुक्लेन त्रिनेम्यपि सितेन च ॥ १५९
रोचनाभेन रजसा द्विनेमं सुसितेन च । [11]संपूरयेदेकनेमिं [12]केवलेन सितेन च ॥ १६०
[13]नाभिनेमिशतैकाभैस्समस्तैर्वाऽथ रञ्जयेत् । प्रधीनामन्तरं [14]बाह्यं .... स्सतः ॥ १६१
अन्योन्योपगतेनैव विधिना पूरयेत्ततः । विभेत्रपत्रतोऽकारैरङ्गदेव .... सञ्चयैः? ॥ १६२

---

१. क-ग-घ—कित त्वरा ख—कित्वन्तरो २. क-ग-घ—ततोक्षादभयदन्तस्त
३. ख—चैतत् ४. क-ग-घ—त्वं स्तनगततान्यतः ख—त्वं च स्थान
५. क-ग-घ एतद् द्विजेन्द्र ६. ख पातालं ७. ग-घ चक्रस्य लैकतेमलिमेत्वि
८. क-ग-घ-द्वाभ्यस्थे ९. ख-नेम्यन्ता नाभियुक्त तु १०. क-ग-घ-त्रिनाभे गमशो रजः
११. क-ग-घ—सपूरयेदेव किते १२. ख—केवलेनासितेन च
१३. क-ग-घ—नाभिनेम्य ··· समस्ते १४. क-ग-घ—बाह्यं तेभ्यस्ते कुचितस्यतः

सुसिताः प्रथयस्सर्वास्तुषारचयसन्निभाः । इतीदं च समाख्यातं रजसा पूर्णं मया ॥ १६३
बीजेष्ववस्थितं सत्त्वं पद्मं धामत्रयेण च । वर्णं दद्यान्मयेनैव कर्णिकादौ क्रमाद्युतम् ॥ १६४
तन्नालसंहिताशेषसिद्धान्तलक्षणकेष्विव । अक्षादिदैवतं व्योम चाक्षं तु परिकीर्तितम् ॥ १६५
मध्वज्यममदैवत्यं [1]चक्राणां हि त्रयं क्रमात् । [2]कल्पान्तानिलदैवत्यं चक्रधारासमं क्रमात् ॥
कालवैश्वानरं ब्रह्मन् सिद्धचक्रान्तरेषु च । क्षमा सरस्वती देवी नियन्त्री देवपूजिता ॥ १६७
एतास्तु नेमित्रितयं देवता स्वामिमिश्रिता । संगृह्य परितस्सर्वं समुद्रागच्छ सागरात् ॥१६८
चक्रदेशोभयात्तच्च द्विसप्तभुवनस्य च । स्थित आप्यायनार्थं तु प्रस्थितानेष्वपांपतिम् ॥ १६९
इत्युक्त्वा देवतास्सर्वाः पूज्य काले प्रपूजयेत् । स्थानेष्वेतेषु विधिवत् पुष्पधूपा[3]दिकेन वा ॥
अस . त्वात् समं चाक्षं नेम्यरानाभिमध्यगम् । यस्मात् त्रयीमयी नाथ ऋग्यजुस्सामसंभवा ॥
संप्रविष्टा भिनत्त्याशु दैत्यश्रोत्रावधौ द्विज । हृदयान् दैत्यकान्तासु स नादस्संप्रविश्य च ॥
क्रोडस्थितानां गर्भाणां यावत्यंश[4] यदा तदा । [4]नादेन भयदा तस्माद्विभिद्यन्ते सुरारयः ॥
हृदयान्तर्गतश्शुद्धो नादश्श्रुतिसमुद्भवः । सा हिनस्त्यशुभं तस्मान्नित्यं सन्मार्गसेविनाम् ॥ १७४
अक्षाद्ब्रह्ममतो हेतोर्नाभिसंज्ञा प्रगीयते । यस्मादतीव राजन्ते [5]कालान्ते चोपबृंहिता ॥ १७५
अनेकरूपभेदेन रश्मिवच्चक्रमण्डले । तेन काया समुद्दिष्टा नाभिनेम्यन्तरे स्थिता ॥ १७६
यथा नाडीषु मेदस्थं प्रवहत्यनिलं द्विज । [6]नाभ्यारासु स्थिरं तावत्तेजो [7] .दुस्सहम् ॥ १७७
चक्रनाडीषु निर्यानि गिरिस्योदम्बिवेदकम् । प्रकाशप्रभवत्वाच्च यत्र नाच्च द्विजोत्तम ॥
यत्र यष्टिस्वरूपत्वान्नाडयः प्रथमं स्मृताः । प्रथिष्वनेकथा यातं तेज[8]श्चक्रोत्थित च यत् ॥१७९
बहिस्तद्भ्रममाणस्य चक्रस्य चतुरात्मनः । वर्तते वृत्तिवृत्त्यादि क्षणं चो परिवेपयेत् ॥ १८०
सुसमेयाम्बुधिमल[9]तेजो . . द्विज । अष्टकैर्दीप्यमानैश्च निर्धूमैः पावकावृतैः ॥ १८१
[10]स .... भानि [11]भ्राम्यन्तं गोलकं यथा । सितं सति पृथग्याते स्वयं पावकवृत्तवत् ॥ १८२
चक्रं तथा रूप[12]मिदमरकर्तरिभिस्स्मृतम् । तेजोजं यदिदं वृत्तं यत्रवह्निकितो द्विज ॥ १८३
तदा रूपत्रयमिदं कदारूपपदान्वितम् । कदा तदा दीप्तिर्या चक्रं तेजश्चलात्मिकाम् ॥ १८४
तस्य तेजोजवृत्तिस्या .. मिसंज्ञा विधीयते । तस्मान्नेमिद्वितीयाब्दानां जयन्त्यपितरं क्षयम् ॥

---

१. ख—चक्रनाभित्रय २. क-ग-घ—कल्पान्ता तिलदैवत्यं चक्रया ... सारसं
३. ख—दिकेन च ४. क-ग-घ—नादेनाभयदा? ५. ख—कालं ते
६. सर्वत्रैकरूपाण्यक्षराणि ७. ख—ह्यत्रत्य दुस्सहम् ८. ख—श्चक्रोज्झित
९. ख—तेजोजोलितं ग-घ—तेजोजेळिक .... द्विज
१०. ख—सप्लादवृत्तममम ग-घ—सप्लुलातत्रत भानि. अत्र अलातशब्दयोगः स्यात्
११. क-ग-घ—भ्राम्यन्तं १२. क—मिद .... रकर्तरिभिः ख—कर्तरीति

मिश्रभूतं तु [1]तेजोत्थं वृत्तनेम्यतस्मृता ? । अथेदानीं समासेन मन्त्रन्यासं निबोधतु ॥
मया मन्त्रसमूहस्तु यत् पुरा ते प्रकाशितम् । षडङ्गं सर्वमूर्तीनां पुमादीनां द्विजोत्तम ॥ १८७
प्रदक्षिणेन [2]पूर्वादौ त्वानि सुनिवेश्य च । विधाक्रमेण तं .... रकादौ शृणुष्व मे ॥१८८
पुंप्रकृत्यात्ममन्त्रेण पूर्वचक्रात् परे स्मृता । पौरुषं प्रकृतिं चैव प्रद्युम्नाख्यं तथैव च ॥ १८९
विन्यस्य चारके चैव चतुरात्मा तथा परे । यावदाख्यरकं ? चक्रं [3]सर्वमन्त्रात्मकं क्रमात् ॥
.... .... मन्त्रत्रयमिदं शुभम् । मूर्तिमन्त्रसहस्रेण कोणोनानेन वै द्विज ॥ १९१
द्विसहस्र[4]मराणां च षडङ्गेन प्रपूरयेत् । पूजिते द्वारके चक्रे द्विरात्मा पूजितो भवेत् ॥ १९२
त्रिरात्मा त्र्यरके चैव चतुरात्मा तथा परे । यावदाख्यारकं चक्रं पूर्वमन्त्रादिकं क्रमात् ॥ १९३
प्रवृत्तिमूर्तिमन्त्रेण तत्संख्यात्माऽथ कथ्यते । द्विरात्माख्येन भेदेन चक्रेषु द्वारकेषु च ॥ १९४
सवाराणा [5]सहस्रस्य कृत्वा सकलपमात्मना । सहस्रमूर्तौ विप्रेन्द्र भक्त्या पूजां करोति यः ॥
स वै चक्रसहस्रस्य [6]पूजनाद् वांच्छितं भवेत् । एकस्मिन् द्विसहस्रारे चक्रे यः पूजयेत् पुमान् ॥
केवलं [7]त्वथवा मिश्रे सारमेतान्विते शुभे । [8]आचार्यवरकेणैव रूपेण परिसंस्थिते ॥ १९७
सहस्रमूर्तिमन्त्राणां सोऽमृतत्वाय कल्पते । सर्वेषां द्विज चक्रस्य मध्येऽष्टदलपङ्कजे ॥ १९८
भक्त्यादौ पूर्ववत् पूज्यं षडङ्गपरमाक्षरम् । पवित्रारोहणेऽनन्त[9]कलशे त्वांकुरे विधौ ॥ १९९
विनोत्सवेन हि तथा स्थितस्थापनकर्मणि । हेतुसां ? पूजया हेतु ? हेतयो विष्टरादिके ॥ २००
आधाननिचये स्वामिन् [10]स्थाने. . संलिखेत् । त्रयस्था लोकपालानां भित्तिगावाम्बराश्रका ? ॥
निर्दिष्टकल्पना हस्त ? तद्भूमावर्चयेत्ततः । मिश्राणामपि चक्राणा[11]मेष एव विधिस्स्मृतः ॥
विन्यासं पूजने चैव सर्वेषामब्जसंभव । [12]इति ते देवतान्यासं संक्षेपात्तु प्रकाशितम् ॥ २०३
स्वदेहं [13]सकलं न्यस्य ध्यात्वाऽऽदौ हृदयान्तरे । [14]स्वाद्यं यः पूजयेच्चक्रं स मोक्षफलभाग्भवेत् ॥
सामीप्यं मम चाभ्येति द्वितीयं [15]यः प्रपूजयेत् । यस्तृतीयं पूजयति मम सालोक्यमेत्यसौ ॥
सत्यलोकेऽप्यसौ पूज्यो यश्चतुर्थं तु पूजयेत् । [16]तपोलोकेऽक्षयं कालमास्ते [17]यः पञ्चमं यजेत् ॥
यष्षष्ठं पूजयेच्चक्रं ज्ञानलोकं स गच्छति । सप्तमं चार्चितं येन स मल्लोकमवाप्नुयात् ॥

---

१. क-ग-घ-तेजो अन्तवृत्त २. ख-पूर्वादौ सृत्वा सुनिवेश्य ३. क-ग-घ-पूर्वमन्त्राविकं
४. क-ग-घ—द्विसहस्रं कराणा च ५. ख—सहस्राख्य ··· मात्मनः
६. क-ग-घ—पूजाना चा .... तं ७. क-ग-घ—त्वथयामिश्रे ८. क-ग-घ—आचार्य
९. क-ग-घ—कलशे त्वा गुरौ ख—कलशात्यङ्कुरौ
१०. ख—स्थानेर्चास्नाप्य ग-घ—स्थानेर्च्यास्नाच्च ११. क-ग-घ—मेष एव इति स्मृतः
१२. ख-इतीदं १३. क-ग-घ-सकल ··· ध्यात्वा १४. क-ग-घ-स्वरन्य ... पूजये
१५. क-ग-घ-द्वितीय यमपूज १६. क-ग-घ- ··· लोके १७. क-ग-घ-यः परमं

स्वर्गे स वासवादीनां [1]पूज्यश्चामरतां व्रजेत् । येनाहं नवमे पूज्यश्श्वेतद्वीपं व्रजत्यसौ ॥ २०८
भक्त्या जन्मसमं कालं दशमं येन वाऽर्चितम् । यदासक्तं च नागानां सप्तपातालवासिनाम् ॥
पातालसुन्दरीणां च सम्मान्यो द्विजसत्तम । एतत्ते सर्वमाख्यातं चक्रपूजाफलं शुभम् ॥ २१०
सम्यक्कारणचक्रादौ [?] त्वेकनाभ्येकनेमि च । पर्यन्तं पद्मसंभूत तस्मात् [२]त्वां [?] परिपूजयेत् [?] ॥
प्रकाशय स्वभक्तानामास्तिकानां च सर्वदा ॥ २१२

**पौष्कर उवाच—**

इत्युक्तोऽहं पुरा विप्र विष्णुना व्यक्तमूर्तिना । यथावत् सर्वकथितं [?] भवतां चक्रलक्षणम् ॥ २१३

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां
चक्राब्जलक्षणो नाम
अष्टमोऽध्यायः

# अथ नवमोऽध्यायः

**ऋषय ऊचुः—**

ब्रह्मन् ब्रह्मविदां श्रेष्ठ मिश्रचक्रं तु कीदृशम् । एतत्संशयमाचक्ष्व ऋषीणां हितकाम्यया ॥ १

**पौष्कर उवाच—**

एवमेव पुरा विप्रमशयाद्विप्रबुद्धिना । सर्वलोकहितार्थाय मया संचोदितं प्रभो [?] ॥ २
[३]उत्तिष्ठ ... येनोक्तं यत् पुरा तद्वदस्व मे । मिश्राणां चक्रयागानां लक्षणं लक्ष्मिनन्दन ॥ ३

**श्रीभगवानुवाच—**

उत्तमादिविभागेन चक्रेषूक्ता यथा पुरा । कल्पना विविधा तद्वन्मिश्रेषु परिकीर्तिता ॥ ४
मुख्या वै मध्यमा चान्या [४]ततश्चैवाधमा स्मृता । मुख्यसंख्यामनाख्यातं [?] त्रिधा वै मध्यका भवेत्॥
विज्ञेयं च तथा तद्वन्मिश्राख्येष्वम्बुजोद्भव । [५]सविधा नवधा या वै प्रथमा परिकल्पना ॥ ६
सांप्रतं तामहं वच्मि समासादवधारय । प्रागष्टपत्रं कमलं त्वसंसक्तदलं लिखेत् ॥ ७
तद्बहिश्चक्रषट्कोणं मिश्रं कुर्यात्तु चक्रराट् । यश्चैकैस्साधनीयं तं रक्तचक्राणि पौष्कर ॥ ८
परस्वं च [६]पथीहीरनिसूतं निसु संलिखेत् । अथवा षष्ठपूर्वाभ्यां चक्राभ्यां संप्रदर्शयेत् ॥ ९
पूर्ववन्नेमिभूमौ तु वर्ज्यं मध्यचतुष्टयम् । बहिस्स्थितं वा चक्रे .त्वेकस्मिन् प्रधयस्स्मृताः॥ १०

---

१. क-ग-घ—पूज्यो यश्चरम २. क-ख-ग-घ—सर्वत्राप्येवमेव
३. क-ख-ग-घ—उत्तिष्ठं चन ४. क—ततश्चे ...स्मृता ग-घ—ततवेश्चे···न्यतास्मृता
५. क-ग-घ —सविता नवधा ६. सर्वत्र समानान्यक्षराणि

अध्यक्ष लक्ष्यते तेषां चक्राणां भिन्नरूपिणाम् । [1]आवार्यावारकाख्येन संस्थाने संस्थिते सति ॥
प्रयोजनं मया ते वै प्रथितु प्रागुदीरितम् । आदावुत्तमचक्राणां यावन्मध्येऽन्तरं तु वै ॥ १२
[2]चक्रयागमिदं मिश्रं प्रथमं चामर ? शृणु । आरभ्योत्तममध्यात्तु चक्राद्यावत् प्रजायते ॥ १३
कानीयोत्तमचक्रं तु [3]द्वितीयं मिश्रमिश्रराट् । अनेन क्रमयोगेन मिश्रीकरणमाचरेत् ॥ १४
यावन्न्यूनेतराच्चक्राच्चक्रमध्यममध्यमम् । भवत्येवं कृते सम्यक् चक्र[4]षट्का....शुभम् ॥ १५
मिश्राणि चक्रयागानां नवकं परिसंख्यया । इत्युक्ता वै समानेनाप्युत्तमा मिश्रकल्पना ॥ १६
द्वितीयामथ वक्ष्यामि मध्याख्या या त्रिधा हि वै । [5]त्रिह्येकनाभि वा [6]तद्वद्युक्तं नेमित्रयेण तु ॥
लिखेच्चक्रं तु वै पूर्वं पञ्चबाह्ये यथेच्छया । [7]सनाभिनेमियुक्तस्य तस्य चक्राम्बुजस्य च ॥ १८
क्रमेण च बहिष्कुर्याच्चक्राणां [8]पङ्कजं तु वै । तेनाभिद्दत ? वै ब्रह्मन् नेमियुक्तं समालिखेत् ॥१९
तस्माद्वा पूर्वचक्रस्य नेमिनाभ्यवरस्य च । अनेन क्रमयोगेन लोहं नाभिगणं नयेत् ॥ २०
अर्धषट्चक्रषट्कस्य [9]सांप्रतं नेमिपूर्ववत् । कुर्याद्यत्नेन चेत् तेषां मध्यमा कल्पना स्मृता ॥ २१
चक्राम्बुजेषु मिश्रेषु [10]त्ववरामवधारय । त्रिनाभिसाम्बुजं कुर्याद्विना ह्येकाञ्चितं ? तु वा ॥२२
चतुष्टयं तु तद्बाह्ये तानि भिन्नेभिवर्जितम् ? । साधनीयं च चक्राणामिष्टं नेमियुतं बहिः ॥ २३
अलंकृतश्च ? नाडीभिर्न्यूनं [11]चान्येन कीर्तित। । [12]ताभ्यां देववसञ्चरैर्बहुभेदं स्थितस्य च ॥
योजनंषांशकारस्य ? कीर्तिता निर्मिता द्विज । त्रिविधेन सहस्रारमुत्तमाद्येन कल्पयेत् ॥ २५
त्रिगुणेन [13]त्रितयतो गर्भतश्चाथवा शृणु । उत्तमाश्च कनीयांश्च प्रथमं परिकीर्तितम् ॥ २६
मध्यमादुत्तमानां च सहस्रारं द्वितीयकम् । [14]न्यूनं द्वे मध्यमान्तं च तृतीयं समुदाहृतम् ॥
क्षेत्रमाद्यं तथैतेषां क्रमेण शृणु पौष्कर । प्रधानकल्पनोक्तानि यानि चक्राणि वै पुरा ॥ २८
सर्वाणि नवहस्तानि षट्कोलकयुतानि ? च । यथाविभागसंस्थानि कन्यादौ ? कथयाम्यहम् ॥२९
मानानामङ्गुलानां तु विज्ञातव्यं शतं द्विज । [15]द्विसप्तकाङ्गुलैर्युक्तं विभागं चाधुनोच्यते ॥ ३०
सर्वेषां कमलार्धं तु ज्ञेयं पञ्चदशाङ्गुलम् । नाभ्यानामरसिध्यर्थं . बलात्रयम् ॥ ३१
क्षेत्रं यन्नाभिपूर्वात्तत् तत् षडङ्गत्रयेण तु । वरं प्रणद्विजस्थाने ? चक्रार्धं वृत्तमुल्लिखेत् ॥ ३२

१. क-ग-घ—आवार्यवरका    २. क—चक्रयागादिनं    ३. ख—तृतीयं मिश्र
४. क—षट्का .... शुभं   ख—षट्काद्वितरशुभ   ग-घ—षट्काद्वितं शुभ
५. क— ... ह्येक    ६. क—तद्वत् .... त्रयेण    ग-घ—तद्युक्तमेनित्रयेण
७. क— ... नानेम्यर्ध    ग-घ—सनानेम्यर्ध    ८. ख—चक्राणां पञ्चकं
९. क-ग-घ—सप्रतिनेमि    १०. ख—त्वपरामव    ११. ख—चान्ये प्रकी
१२. क-ख—ताभ्यां देववसं चरै    ग-घ—ताभ्या देववसं चैरै
१३. क—त्रिधा ... गर्भ    ख—त्रितयतो गर्भ    ग-घ—त्रिगुणेन त्रिधातमगर्भतः
१४. क—न्यून ... मध्य    १५. ख—द्विसप्त

सनाभिनेमिचक्राणां तद्विताना ? विशेषतः । अरान्मूलोपगं तस्मिन् प्रति[1]बन्धा .... ॥ ३३
मानं वै चक्रबन्धस्य यदिदं परिकीर्तितम् । परश्चरकचक्रेण सामान्येषां तु सर्वदा ॥ ३४
चक्राङ्गजेऽथ ? वा तन्तु कृत्वैषां क्षेत्रकल्पना । ततोऽत्र नाभ्यरानेमिसिद्धि कुर्यात् क्रमेण तु ॥
एवं प्रकल्पिते चक्रं साम्बुजेऽम्बुजसम्पदाम् । तद्बाह्ये परचक्रस्य तस्माच्चक्रात्तु केवलात् ॥ ३६
त्र्यङ्गुलेनाथगं ? मानं कल्पनीयं प्रवर्तते । क्षेत्राणां नाभिपूर्वाणां संविभज्य च संस्थिता ॥ ३७
एवं हि सर्वचक्राणां बाह्यस्थानां [2] प्रकल्पयेत् । मानमन्तरचक्रात्तु त्र्यङ्गुलेनाधिकं क्रमात् ॥ ३८
यावद्बहिष्ठचक्रस्य नाभ्यामिष्टं गुलाष्टकौ ? । क्षेत्रं भवति विप्रेश त्वेकीकृत्य समं समम् ॥ ३९
सनाभिनेमिचक्राणामेतन्मानं विधीयते । विधिवच्चोत्तमानां तु मध्यमानामतश्शृणु ॥ ४०
चतुर्विंशत्यङ्गुलाब्जं कृत्वा मानं तु लोपयेत् । नाभीयं पूर्वमानं च न्यूनाना .... मेव च ॥ ४१
सनाभिनेमिमानं च स्वयमूह्य[3]मवाग्भवेत् । किन्त्वेषां पद्ममानं च ज्ञेयमष्टादशाङ्गुलम् ॥ ४२
इत्युक्तं क्षेत्रमानं तु त्रिधा मिश्रवयस्य च । विप्रभागमराणां ? च साधारमवधारय ॥ ४३
षडरं पद्मबाह्ये तु प्रचक्रं परिकल्पयेत् । तस्य कुर्यात्तदा चक्रं परिलेखरपत्रवत् ? ॥ ४४
यवोदरेऽथवाऽष्टारमरकैस्तं बहिर्लिखेत् । द्वादशारं तदा कुर्याच्चक्रपद्मस्य तैस्स्वरैः ॥ ४५
[3]पिपीलिकोदरे चक्रं षोडशारमतः परम् । चतुर्विंशत्यरं कुर्यान्मातुलङ्गोपमारकैः ॥ ४६
अथ कर्तरिसंयुक्तो [2] केवलैर्वसितो द्विज । चतुस्त्रिंशत्यरं कुर्याच्चक्रं परशुसंज्ञकैः ॥ ४७
भवत्येवं कृते मिश्रे चक्रयागं शतारकम् । द्रैरूप्येणास्य कथितं देहं संवत्सरेण तु ॥ ४८
अथ षड्तवो ज्ञेयाष्षडरेष्ववधारयेत् । परे बहिर्द्वारमासात् ते षोडशकमासकम् ॥ ४९
चतुर्विंशति तत्पक्षा [4]तन्मारद्विने [2] स्थिता । ततष्षोडशमासाख्यपक्षा ? संवत्सरस्य च ॥ ५०
[5]तत्रायनद्वयं विद्धि संस्था चारकतु [2] द्वये । दक्षिणोत्तरसंज्ञे च सामान्यं वत्सरद्वये ॥ ५१
विप्रभङ्गं च यत्रेदं बन्धं चति [2] स तिष्ठति । मिश्राख्यस्य शतारस्य नानाभेदगतस्य च ॥ ५२
इत्येतत् साधनं प्रोक्तं निश्शेषेण तवानघ । सूचितं प्राक् सहस्रारं मिश्रया संस्थितं त्रिधा ॥ ५३
क्षेत्रमाणं [2] तथाऽराणां ? विभागं चापि मे श्रुतम् । शतद्वादशकेनैव क्षमस्य परिकीर्तितम् ॥ ५४
एकत्रिंशत्यङ्गुलैस्तत् पद्मार्धं चास्य कल्पयेत् । तद्बहिर्नाभ्यरा[6]न्नेमिभूमयोऽथ दशाङ्गुलैः ॥ ५५
तद्बाह्यस्थस्य चक्रस्य [7]नेम्यरान्नेमिमेदिनी । [8]स्वर्गो याति द्विजैकत्र ... त्वर्धं षोडशाङ्गुलैः ॥

---

१. क—बन्धा ··· ख—बन्धाद् भवे .... त ग-घ—बद्धात् हकेतात्

२. क-ग-घ—मत्रासयेत् ३. ख—पविभिक्रोदरे

४. सर्वत्र अशुद्धम् ५. ख—अत्रायन

६. क—न्नेमिभू ··· योथ ग-घ—न्नोमि भूमयो दशधा ७. ग-घ—नेम्यरानेमि

८. क—स्वर्गोधा .... .... ग-घ—स्वर्गोया .... द्विजैकत्वर्ध ··· षोडशाङ्गुलै

[1]एकोनविंशत्यङ्गुलकैः क्ष्मातृतीयस्य कीर्तितम् । [2]ततश्चतुष्कलांशस्य द्वाविंशत्यङ्गुलैर्महीम् ॥
प्राक् प्रोक्तयवमानं तु पञ्चमस्य च चक्ष्महे । पञ्चविंशत्यङ्गुलकै [3]र्हस्त .... त्रितयं भवेत् ॥
अष्टाविशत्यङ्गुलैस्स्यात्[4]षष्ठचक्रस्य पौष्कर । [5]धरारान्वाभि नेम्यर्धमर्धतश्चेद ? सर्वदा ॥ ५९
एकैकस्याधिचक्रस्य यदुक्तस्तत्त्रिधा व्रजेत् । समांशेन ततः कुर्याज्ज्ञात्वा [6]त्रिवैकधातु वा ॥६०
स्वक्षेत्रनाभिनेमीया वर्जयि[7]त्वा परा यथा । [8]चक्रं भ्रमसुगेहं ? च चक्रं चापि च पूर्ववत् ॥ ६१
समद्वादशकात् क्षेत्रात् [9]पूर्णिमाद्यदि नेच्छसि । कुर्याद्वै [10]भूमिसंकोचं नाभिनेमिक्षये सति ॥
ततोऽरकाणां साहस्रं क्रमेणानेन साधयेत् । [11]पद्मवृत्तं च संलिख्य प्राक् तु तारं तु हेतिराट् ॥
ततोऽन्यत् पञ्चचक्राणि क्रमात्तस्य बहिर्लिखेत् । प्राग्वदावरणायुक्त्या [12]गेषु राम नामा शृणु?॥
[13]शतैश्शतैस्तैर्विन्यस्तैस्त्रिशत्त्रिशत् क्रमाद्युतैः । चत्वारिंशत् क्रमाद्युक्तैः कुर्याच्चक्रद्वयं तथा ॥
शतद्वयेन सार्धेन तथा षष्ट्यधिकेन तु । चक्रत्रयं क्रमात् कुर्यात् सहस्रारं यथा भवेत् ॥ ६६
युगाख्यं मिश्रमित्युक्तं सिद्धैस्संपूजितं तु यत् । यथाऽङ्गयागच्चैते ? हि ज्ञेयास्त्वष्टादश क्रमात् ॥
वीर्यसंसिद्धिका ब्रह्मन् न ममाद्यामुकेषु ? च । यथोत्तमादिचक्राणां सञ्चार ? परिकीर्तिता ॥६८
[14]अरेष्वाच परित्यर्थं तत्सञ्चारमयोगतः । यान्युत्पलदलाग्राणि पद्मबाह्ये स्थितानि च ॥ ६९
युवोन्तकाशदुर्देशे तत् स्थाने जीवरञ्जत ? । पद्मपत्रावधौ जाता कुर्यादुत्पलपत्रकम् ॥ ७०
नीलाम्भोजदलाकारं स्थाने संयोजयेच्च ताः । परश्चाकथपद्मस्य ? बहिस्तत्रोलसच्छदः ॥ ७१
परश्चारैर्यदा ? चक्रं बाह्ये भवति कस्य चित् । चक्रेऽस्य देवचक्रे च तदादधरसाधवम् ? ॥ ७२

१. क-ख- ··· शत्यङ्गुलकैः २. ग-घ-ततश्चतुर्थं ··· लस्य ३. ग-घ-हस्तगास्त्रितयं
४. क-ख-स्यात्···चक्रस्य ५. क-ख-धारारान्वि···नेम्यर्ध घ-धारान्नाभिनेम्यर्धमध्यतश्चेद
६. ग-घ—त्रीवैकधा ७. ग-घ—त्वराख्य ८. ग-घ—चक्रभ्रमसूरित्यहं चक्रस्यापि च
९. ग-घ-प्रणीताद्यदिकेश्छसि १०. ग घ-भ्रमसकोश ११. ग-घ-पद्मवृत्य च सलिख्यप्रात्वतारं
१२. ग-घ—तेपुरामानमाशृणु १३. ग-घ-शतैश्शतैन्यै विंन्यैस्तस्यैः त्रिशत्क्रमाद्युतैः
१४. ग-घ—कोशपाठोऽयम्

क—पाठः—

अरेष्वाच परित्यज्य त ··· मयोदितम् । धान्यात्प ··· ··· बाह्ये सितानि च ॥
युवोन्तका ··· देशे तत्स्थाने जीवर जत । पद्मपत्रं य ··· जाता कुर्यादुत्पलपत्रकम् ॥
नीलाम्भोजदलाकारं स्थाने सयोजयेच्च ताः । वरण्या .... पत्रस्य बहिः क्षेत्रे लसच्छदः ॥
परश्चारै .... चक्रं बाह्ये भवति कस्यचित् । चक्रे सदेवचक्रे च तदाददरसाधवः ॥
नमोने पूर्ववच्चैव ततोत्तद ··· च्छृणु !

ख—पाठः—

अरेष्वाच परित्यस्मान् .... सम्भ्रामयेत्ततः । यस्य .... प .... श्रा .... बाह्येर्पितानि च ॥
युवोन्नका ··· ··· ··· ··· । सिशर्देशेतत् ··· नैर्जीवरजित ॥

नमोने? पूर्ववच्चैव तथोत्पद्येत तच्छृणु। आराख्यं मध्यमं सूत्रमास्फल्यादौ तदा द्विज॥ ७३
अरक्षेत्रादराग्रे तु किञ्चिन्मानकलांशजम्। त्यक्त्वा तु व्यवधानार्थं बाह्ये [1]वृत्तारकस्य च॥ ७४
सूत्रं कृत्वाऽरमध्ये तु अर्धचन्द्रेषु लाञ्छयेत्। प्राप ब्रह्मपदे सूत्रं कृत्वा तच्छृङ्गमानये?॥ ७५
भ्रमणीय तदे? षोढा त्वन्तोश्रं त्वयान्तरम्?। संविभज्य समैर्भागैर्भ्रमादेशावधेर्द्विज॥ ७६
पातयित्वाऽथ सूत्राणि पूर्वं च क्रमयोगतः?। अरसिद्धिं तु वै कुर्यान्मित्रं ते देवमेव? हि॥
नस्य [2]चक्रविधौ ब्रह्मन् नयतोरान्तरस्य च। अराचये तु संसिद्धे शेषक्षेत्रेण कल्पयेत्॥ ७८
चक्रक्षेत्रं सुवृत्तं वै बृन्द[3]मानानि ....। प्रागुक्तेनैव विधिना त्वेकैकस्य पृथक् पृथक्॥ ७९
अरावशाच्च? विप्रेन्द्र सूत्रपातं समाचरेत्। वृत्तानां कल्पनं कुर्यादरसिद्धिं तथैव हि॥ ८०
इत्येतत् कथितं सर्वं मिश्राणां साधनं मया। चक्राणां च समासेन विशेषं चात्र मे शृणु॥ ८१
[4]यदुक्तमथ तन्मानं नाभिनेमिगणस्य च। सर्वेषां चैव चक्राणां तस्मात् सञ्चारमाचरेत्॥ ८२
ज्ञात्वा संकोचविस्तारं भौमक्षेत्रेषु पौष्कर। क्षेत्रात्तु ह्येकनाभीयं तथा वै ह्येकनाभिजात्॥ ८३
नामार्धे तु त्रिभागं वा संगृहीत्वा विनिक्षिपेत्। त्रिनाभि[5]नेमिक्षेत्राभ्यां त्वादिमध्यत्वभिर्गता?॥
[6]रागभेदमथो वच्मि त्वरादे? त्वादितः क्रमात्। प्राग्वत् पद्मजकह्लारं भ्रमाणामपि सन्ततिः?॥
[7]समपात्रान्तरालानि वैडूर्यसदृशानि च। समानवर्णेन ततो रागेणेन्दीवरच्छदा?॥ ८६
प्रपूरयित्वा [8]वाप .... स्तदन्तः पाण्डुरोज्ज्वलम्। [9]यवोदरांशुशुक्लेन कृष्णेन तदनन्तरम्॥ ८७
कुर्याद्धारितपीतेन? मातुलुङ्गोपमारकाः। रक्तोज्ज्वलेन रागेण तेषु मध्यं प्रपूरयेत्॥ ८८
राजोपलनिभेनाथ [10]पारश्चास्त्वथ रञ्जयेत्। रोचनाभेन रजसा तदरेष्वन्तरं तु यत्॥ ८९
[11]सकेसरालीचाराणि सर्वचक्रगणस्य च। [12]रङ्गे शोभानुरूपेण पूरणीयानि वा द्विज॥ ९०
द्वारवीथ्यादिकं ब्रह्मन् सर्वसिद्धिं पुरोदितम्। संपाद्य परया भक्त्या सद्रागनिचयं महत्॥ ९१
[13]रागेषु कामभूतं च चक्रगात्रं विचक्षणम्। नाभिर्गार्भिदरा[14]पक्षासप्र .... श्च पुत्रभृत्॥ ९२
[15]संविशेच्च तन्मध्यं नयज्ञ च नव' द्विज। क्रमर्णाये यथा मध्यं तथा ब्रह्मन् प्रचक्ष्महे॥ ९३

---

१. क-ख—हृत्तारकस्य च २. ग-घ—चक्रविधे
३. क-ख—मानानि ··· ग-घ—मानानिबोधकम्। अत्र-माननिबोधकम्,-अथवा मानं निबोधतु इति स्यात्। ४. क-ख—यदुक्तमिय ५. क-ख—नेमिनेत्राभ्यां
६. क-ख—रागमेवमथोवाच मम त्वरादेत्वादित ७. ग-घ—समुपात्रं तरालानि
८. ग-घ—वाब्रह्मा? तदन्तः। ब्रह्मंस्तदन्तः इति स्यात् ९. क-ख—यवोदरां....शुक्लेन
१०. ग-घ—परश्चास्त्वस्तु ११. ग-घ—सकेसरालिचाराणि ··· गणस्य तु
१२. क-ख— ··· गे शोभा १३. ग-घ—रागेष्टकाम
१४. ग-घ—पक्षं संप्रथामां च पुत्रभृत्
१५. क-ख—संविशेच्च तन्मध्यं ग-घ—संविशेच्चेत

सद्दशैर्यज्ञकाष्ठैश्च शमोचैर्द्राचमेस्तव ? । गजवाजिवृषाकारं [1]त्रयाद्यष्टचतुष्टयम् ॥ ९४
सुस्थूल[2]स्थिरजान्विध्यं स्थाप्यं तद्दिक्चतुष्टये । द्वाराणां तु बहिःपार्श्वे तद्वद्वीथ्यन्तरे तु वा ॥
समदीर्घे सुदृढैश्चाथ [3]बध्वांसशैस्स पट्टिकात् । [4]शमध्यम .... शमानं यन्मूलाद्यै रज्जुभिर्दृढैः ॥
यत्रान्याप्ृष्ठतस्ता वै कृत्वा तस्मात् समारुहे ? । [5]संछाद्य पूजयित्वाऽथ क्रमासात्सर्वमीषु वै ? ॥ ९७
एवमेव प्रयोगेण वंशवीथिश्च वा बहुः । [6]सञ्चा विदिक्षु वै दत्त्वा मध्यचक्रं तु साम्प्रतम् ॥ ९८
अर्घ्यपात्रोद्धृतेनैव पवित्रीकृत्य चाम्बुना । बद्ध्वा स्वमुद्रां संस्पृश्य मन्त्रदृष्ट्याऽवलोकयेत् ॥ ९९
पूज्यो राजोपचारेण तत्र मन्त्रगणो द्विज । [7]यायात् प्रवेशमार्गेण पूर्णायश्च ? ततो बहिः ॥ १००
द्वितीयं स यजेत् प्राग्वत् कृत्वा संस्कारसंस्कृतम् । एवमेव प्रकारेण परिशिष्टानि चाचरेत् ॥ १०१
एतेन कल्पितं ब्रह्मन् भूमौ चक्रं तु चक्रवत् । कर्मणा प्रोक्षणाद्येन ध्यानन्यासान्तिकेन च ॥ १०२
तावन्न चास्ति दोषोऽत्र चक्राणां तु विलङ्घनात् । यस्माच्चक्रारविन्दानां द्वारवीथी न विद्यते ॥
यस्मान्न जायते[8]दोषात् साधकस्य कृतात्मनः । चक्रान्तरोपविष्टस्य नाभ्यादङ्गेषु ? मर्दनात् ॥ १०४
मध्ये शतारचक्राणां कर्णिकारौ क्रमेण तु । पुरुषं चोत्तरं देवं परमेश्वरपूर्वकम् ॥ १०५
न्यसेत द्वितयं पश्चात् पुरुषं [9]केसरावधौ । पत्रे त्वष्टविधां चैव पूर्वादौ प्रकृतिं न्यसेत् ॥ १०६
[10]षडात्मा षडरे चक्रे त्वष्टारेऽष्टतनुस्तथा । द्वादशात्मा द्विषट्कारे तदात्मा षोडशारके ॥ १०७
त्रिरष्टधा च प्रकृतितत्त्वभेदस्तथा पुनः । द्विर्द्वादशारके पूर्वे क्रमशश्शक्तयस्त्रयः ॥ १०८
[11]द्विषोडशारसंख्याते [12]शेषं शक्तिद्वयं हि यत् । [13]अरद्वये चानिचया ? प्रागुक्तं नाभिनेमिषु ॥
[14]ऋग्वादद्याम्बुजानीया यथा चानुक्रमेण तु । पूर्वमुक्ता सहस्राख्या यो मन्त्रनिचयो महत् ॥ ११०
[15]तमेव विन्यसेन्मन्त्रे त्वेकीकृत्यादिकुमम ? । इष्ट्वा शरीरचक्रेऽस्मिन् पुण्डरीकोदरे पुरा ॥ १११

---

१. ग-घ—तृतीयाद्यष्टचतुष्टयम् २. ग-घ—स्थिरजानाद्यं ३. ग-घ—वध्वासंशैस्म
४. ग-घ—शमध्यमं शमानं यत् मुरुद्यैः ५. ग-घ—सञ्चार्य ... क्रमान् सर्व
६. सर्वतैकरूपाण्यक्षराणि ७. क-ख—ययाप्रवेश ८. क-ख—दोपासक ··· कृतात्मना
९. क-ख—सेश्वरं वधौ १०. क-ख—षडात्मविद्वरे
११. ग—द्विषोडशाखी घ—द्विपोडशार ख—द्विपोडशारे १२. क-ख—शष···न्तिचयं
१३. क-ख—पुरद्वये चानिचया ग—अरद्वये चानीया घ—अरद्वये चानियता
१४. क-ख—वादद्याम्बुजोनीया ग-घ—ऋग्वादद्यांबुजानीया
१५. क-ख—
तमेव विन्यसेनि . . . मम । . . . पुण्डरीकोदरे पुरा ॥
नित्यशुद्धे . . . विधवेदुर्वैसिकल्पयो द्विकैः । क्रमेण हृदय . . . वतार्य शनैश्शनैः ॥
उष्णदीधितिमार्गेण भ्रमणे चक्र . . . । . . . प्राप्तं तु निखिलं विद्युत्पुञ्जनिभोज्ज्वलम् ॥
दिव्योपकरणं नाथ यथाप्राप्ते . . . व्रजेत् ! विसर्जनाद्यस्नान च यावत्कालं यथेच्छया ॥

नित्यशुद्धैस्तु विधिवै दुर्व्येसङ्कल्पयोद्धिकैः ? । क्रमेण हृदय.... अवतार्य शनैश्शनैः ॥ ११२
उष्णदीधितिमार्गेण भ्रमणे चक्रज न्यसेत् । मन्त्रग्रामं तु निखिलं विद्युत्पुञ्जनिभोज्ज्वलम् ॥ ११३
दिव्योपकरणं नाथ यथाप्राप्तेव ? संयजेत् । विसर्जनावसानं च यावत्कालं यथेच्छया ॥ ११४
देहचक्रारविन्दे यः प्रविशंस्तं विचिन्तयेत् । द्विसप्तशब्ददेहं तु तन्मात्रानिचयं महत् ॥ ११५
पथाऽमृतविवाहेण स्वे स्वे स्थाने नियोजयेत् । विसर्जनं तदाह्वानमवतारं च नान्यथा ॥ ११६
[1]नाभ्यागमो नैव ...सि च विसर्जनम् । साधकेभ्यस्स्वमन्त्रस्य नित्यं यस्मान्न तन्मया ॥ ११७
आगच्छेति च यद्ब्रूते [2]त्वात्मन्यामन्त्रमात्मवित् । जनार्थमपि साम.... भवामि भगवन्मया ॥ ११८
[3]एतदावाहनं चान्यदादरात् प्रेरणं बहिः । पूजावसानकाले हि गच्छेत्युक्त्वा भूतिं न्यसेत् ॥ ११९
गच्छामि भगवंश्चाहं मन्ये कर्मणि मे क्षमम् । एतव्याच ? सशक्तीनामावाहनविसर्जनम् ॥ १२०
सर्वगाणाममन्त्राणा [4]मुक्तं न त्वितरेषु वै । तेषामगञ्च वै गच्छ ? कर्मस्वेति यथा स्थितम् ॥ १२१
ज्ञात्वैवं च यजेत् पश्चाद्देवाचक्रेति भूगते ॥ १२२

**पौष्कर उवाच—**

इदं शरीरं भगवन् [5]ज्ञातं च व ..वत् कथम् । [6]सञ्चितं च त्वयाऽद्यापि त्वामस्य च परस्य च॥
अक्षाद्यनेमिपर्यन्ता साम्बुजावयवा तथा । शरीरेऽस्मिन् महाभूत .... मये प्रभो ॥ १२४

**श्रीभगवानुवाच—**

कदली पूर्ववद्ब्रह्मन् शरीरं [7]प्राकृतं त्विदम् । ययो ? द्वियद्गुणा वायुतेजश्चाप्युदकं नर ॥ १२५
सपद्मामातदेहाख्यं चक्रसाराय ? वस्मृतम् । संसिद्धा चाष्टधा बुद्धि [8]कमलाख्य .... मध्यमा ॥
[9] .... पकन्नाभिनिचयं विज्ञतद्गुणसूत्रयम् ? । गुणत्रयस्य बाह्ये तु तस्मिन् सर्वं प्रतिष्ठितम् ॥
समीपवर्तिवैयोस्ते . . .... । [10]ज्वालाचक्रसहस्रेण संख्या . .. स्वेच्छया भवेत् ॥१२८
ब्रह्ममूर्तिवशाच्चैव [11]त्वाधारस्स्वस्वराधयः । ततस्त्यज्य गणं विद्धि [12]देहचक्रे त्वरागतम् ॥१२९
धाराचक्रधरं तोयं संस्थितं तेजसोरपि । अच्छिन्नया च वै व्याप्त्या आपादतलमस्तकात् ॥१३०
सहस्रनाडीरूपेण ज्ञेयं प्रतिगणं तु यत् । इच्छाराधकवत्तास्यं कल्पना नित्यमाचरेत् ॥ १३१
सर्वसन्देहनाडीभिर्वृद्धित्वेन तु पौष्कर । संस्थिता तोयमावृत्य धारा पञ्चगणा बहिः ॥ १३२

---

१. क-ख—नाभ्या ··· विसर्जनम् २. क-ख—त्वामान्य मन्त्रमात्मवित्
३. ग-घ—एतदाहामन चान्यदादयात् ४. क-ख—मत्तं
५. ग-घ—ज्ञानं च वत्र ? तत्कथम् ६. ग-घ—सवितं च मयाद्यापि
७. ग-घ—प्राकृते ८. ग-घ—कमलाखममध्यमा
९. ग-घ-खोपकं नाभिनिचयमविज्ञे तद्गुणत्रयम् १०. ग-ज्वालाचक्रेण संख्येरा···स्वेच्छया भवेत्
११. क-ख—धातार स्व स्व १२. क-ख—चक्रेश्वरागतम्

अनेन रुचिभेदेन [1]विद्धि तन्नेमिमण्डलम् । व्यक्ताव्यक्तविभागेन धियाद्येन गुणेन च ॥ १३३
भूयो भूयस्तु वैद्याप्या [2]कृत्योच्छिन्नं मया द्विज । संस्थितं कच्छनीयं वै [3]देवमिश्रस्य सर्वगम् ॥
बहिरन्तर्विभागेन द्वीपसागरवत् क्रमात् । इत्येतत् कथितं सर्वं यत् त्वया चोदितोऽस्म्यहम् ॥
नि .... .... देहचक्रस्य विज्ञात्वाऽमृतमश्नुते । षाड्गुण्यविग्रहेणैव अच्युतेनाव्ययात्मना ॥ १३६
सर्वेश्वरेण विभुनाऽधिष्ठितं परमात्मना । बोद्धव्यं विग्रहातीत[4]मेतद्देहं महामते ॥ १३७
बृहद्द्वारोपरिस्थं च संविदक्षादतीन्द्रियम् । [5]तत्प्राप्ति महाज्ञान .... .... वरम् ॥१३८
[6]बोधदृक्कर्तृ तद्वृत्त[7]मस्मिंस्तारं द्विजोत्तम । अभकोरमहानेमि ? त्विन्द्रियप्रथिताक्षयः ॥ १३९
प्रलयार्कानलरुचिस्तद्व्रतामग्रवृत्तयम् ? । [8]सन्धानानन्दको जालं प्रकृतं परमेश्वरम् ॥ १४०
नित्याभ्यासरतानां च श्रद्धासंयमसेविनाम् । भावभूति ? समं ? येति ? भक्तानां पुरुषोत्तम ॥ १४१
मन्त्रेशप्रतिमा जीवा तिष्ठते तन्महागृहे । एवं बुद्ध्या समारोप्य कृत्वा जाम्बूनदादिकैः ॥ १४२
[9]ततनेमिपथे व्यासं [10]सर्वकण्ठोत्थितं तु वै । मानं शिखरवैर्दाय[11]मेककण्ठोज्झितं त्वथ ॥
कण्ठात् कर्णगतं चान्यत् पीठ[12]दैर्घ्यं समं स्मृतम् । द्वारविस्तारगर्भस्थं तुल्यापो नेमिभूस्ततः ॥
कुर्यात् प्राच्यपदोद्देशाद् बालेन्दुशृङ्गलक्षणम् । तत्क्षेत्रे सूत्रमानेन सार्धेन द्विगुणेन वा ॥ १४५
लाञ्छ्ये[13]दन्तरावर्तं प्राक् सूत्रं तु सपद्मयोः । मध्यात् पश्चिमभागेऽथ नातिदूरे ध्रुवार्चने ॥१४६
निधाय मध्यसूत्राभ्यां सूत्रमभ्यन्तरक्षिते । सम्मुखं वायुकोणस्य यत्रस्थं चार्कसन्निधिम् ॥ १४७
नेमेरपि पदे बाह्यं सौम्यं समुपयाति च । लाञ्छयेत् नेन तत् क्षेत्रं तदङ्गात् तत्पदावधि ॥ १४८
एवं निजनिकोणस्तु सूत्रेण चरलाञ्छनम् । याम्यदिक्पदपर्यन्तं परादन्तु समाचरेत् ॥ १४९
[14]सिद्धिसौम्यप्रभायस्यात् ? त्रयं यत् परितोक्षयम् । [15]तेषां चक्रवादि .... मुखस्य च ॥
यथावस्थितनेमि वै .... .... । मुनिसिद्धामराणां च सर्वलोकनिवासिनाम् ॥ १५१
सौम्यप्रभानियत्या मा आनन्दयति वा दिशः । [16]संपदोकैयितं पर्व नेमिमानं तदन्तरे ॥ १५२
दत्त्वा विभज्य वै यूप....निष्ठं हि सप्तधा । चतुर्भिश्चतुरङ्गं तु [17]मध्येऽब्जं द्वादशच्छदम् ॥

---

१. क-ख—विदितोनेमि　२. ग-घ—त्वन्योच्छिन्नं
३. ग—देहमिश्रस्य सर्वदा　४. ग-घ—मेतदेव
५. ख—तत्प्राप्तिमहाज्ञान .... ततानाभित्वन　ग—तत्प्राप्तिममहाज्ञानं नानानाभित्वनं
घ—एतत्प्राप्तिमहाज्ञानं ... नानाभित्वनं　६. ग-घ—बोधधृक् कर्तृतावृत्त
७. क-ख—म ... तारं　८. ग-घ—सद्घानानन्द　९. ग-घ—तते नेमिपथे
१०. क-ख-सकर्णोसितं　११. क-ख-मेकण्ठोसितं त्वया　१२. ग-घ-दैर्ष्यं 'दैर्घ्यमिति 'स्यात्
१३. ग-घ—दन्तरं वृत्तं　१४. क-ख—सिचि ... प्रभाः स्या ... यत्परितोषय
१५. क-ख—तेषां च प्रभाचात्रिरध्य ... मुखस्य च　१६. ग-घ—संपदोजुधितं पर्व
१७. क-ख—मध्येशं

तुर्यांशं पञ्चमाद्भागाद्दलभूमौ दलं नयेत् । तन्मानेन समापाद्य दलाग्रवलयं शिवम् ॥ १५४
तच्छेषविस्तृतं चक्रं [1]वृत्तद्व्यंशोन्नतारकम् । [2]प्रा .... सलक्षणं कुर्याद्द्विगुणं पत्रसन्ततेः ॥ १५५
[3]नीलनीरजपत्राख्या मातुलुङ्गोपमास्तु वा । कर्तव्यं तद्गता शुद्धा परश्वाख्याऽथवोद्यया ? ॥ १५६
पूर्वोक्तविधिनाऽऽपाद्य नेमिमानं तदन्तरे । त्र्यंशोत्थितं वा पादोनं मध्यहीनव्यपेक्षया ॥ १५७
दत्त्वा संसक्तपत्रं च लिखेत् पद्मं सुलक्षणम् । दिक्चतुष्कं तु चाक्षय्यं युक्तं काष्ठद्वयेन तु ॥
प्रभानेमिविहीनं च [4]हिन्दिशन्देन मन्दिने । प्रच्छाद्यं चुलिकाग्रस्थं चक्रव्यासं समा च सा ॥
रजतन्त्वददेकांशं सेव्यब्राह्मणरन्ध्रके । पञ्चमांशं चतुर्थांशं नयेद्वृत्तिं च तद्बहिः ॥ १६०
[5]तस्या सो ? नेमिमानेन तुङ्गालयवशं पुनः । [6]सम ऊनाधिकं चैव सौष्ठीसंवेष्टनं भवेत् ॥ १६१
अक्षमध्यं समाश्रित्य चन्द्रद्वयविभूषितम् । [7]ये .... ग्रहणदक्षं च कार्यमस्य भुजद्वयम् ॥ १६२
खस्थदञ्च तथादारमव्यक्तावयवान्वितम् । तस्य सूक्ष्मतमं रूपमापाद्यममलं तु वै ॥ १६३
कर्मालयात् समानीय विभवेन च हेतिरम । प्रवेश्य यागभवनं विनिवेश्योचिते यते ॥ १६४
ध्यात्वाऽभिमानिकेनैव रूपेणास्त्रगणैस्स्मृतम् । [8]भगवद्बिम्बवत्तस्य स्थित्यर्थं सर्वमाचरेत् ॥ १६५

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां
मिश्रलक्षणो नाम
नवमोऽध्यायः

---

# अथ दशमोऽध्यायः

**पौष्कर उवाच—**

[9]प्रथमानं जगन्नाथ त्वया प्रोक्तं नवात्मनि । [10]ऐहिकामुष्मिकं सिध्यै यष्टव्यं तत् कथं वद ॥
यागः किंलक्षणस्तस्य भेदतस्संस्थितस्य च । [11]कानि ते नवपद्मानि .... .... ॥ २

**श्रीभगवानुवाच—**

यो वै ब्रह्माधिपत्येन चातुर्व्यूहव्यवस्थितः । वासुदेवादिभेदेन त्वनिरुद्धावसानतः ॥ ३
ततो नारायणो मूर्तिर्विराडात्माधि ? पौष्कर । [12]स्थितावधिपतिर्विष्णु[13]र्मूर्तायुधधरः[14].... ॥

---

१. क–ख—वृत्तद्व्यंशौ तु कारकम् २. ग–घ—प्राक्कास ? ३. क–ख—नीलनीरद
४. सर्वत्र समान्यक्षराणि ५. तद्व्यास इति स्यात् ६. क–ख—... ऊनाधिकं
७. ग–घ—येणाग्रहण ८. क–ख—भगवान् बिंब
९. ख—प्रथिमानं ग–घ—प्रथमान्यं तु १०. ग–घ—ऐहिकामुष्मिको सिद्धो
११. क–ख—कानि ते नवमत्यानि सान्यनीवच सिद्धि ?
ग–घ—कानि ते नवमन्वानि सान्यनविचंशंसिद्ध ? १२. क–ख—स्थितावधीवातिः
१३. क–ख–मूर्तायुध ... रः १४. क–ख–ग–घ–प्रभा

[1]सत्त्वरूपावधाद्देवः? नृसिंहधरणीधरौ । [2]नवप्रकृतयस्त्वेतास्शक्तित्वेन व्यवस्थिताः ॥ ५
अचिन्त्यस्याप्रमेयस्य व्यापकस्यामलस्य च । .... [3]द्विजे? तत्र परस्य परमात्मनः ॥ ६
अनुग्रहपराश्चेमं? मग्नानां च भवोदधौ । महापावक[4]वद्यावत् स्फुलिङ्ग[5]निचयो महान् ॥ ७
[6]स्फुर....दीप्ताभ्यां तस्माद्यच्छक्तयस्तथा । अक्षुब्धस्याम्भसो यद्वद्बुद्बुदास्संभवन्ति हि ॥ ८
[7]तव .... यस्तस्य शक्तीशस्य महात्मनः । शक्तिं व्यञ्जन्ति तासां ते त्वजारूपास्तु शक्तयः ॥
सर्वास्ता वासुदेवाद्या रूपैर्नानाविधैर्द्विज । अतस्स्वाभीष्टसिद्ध्यर्थं संपूज्यास्संयतैस्सदा ॥ १०
[8]न त्वाधारं विना पूजां गृह्णन्ति व्यक्तयस्तदा । तस्मादादौ प्रयत्नेन कुर्यादासन[9]कल्पनम् ॥
आसनं सर्वसामान्यमम्बुजं पीठमध्यगम् । नवात्मनि विशेपेण बिम्बौघं पीठसङ्घगम् ॥ १२
कृत्वा चैव सपद्मं तु [10]तत्रावाह्य यजेत् क्रमात् । पद्माधारं तु यद्बिम्बं तानि मे गदतश्शृणु ॥
व्यक्तौ वा वासुदेवाख्या सर्ववृत्तं प्रकीर्तितम् । ज्ञानरूपक[11]गोलत्वात् सर्वदिग्व्यापको यतः ॥
व्यक्त्या संकर्षणाख्यं तु पुण्डरीकनिभेक्षणा । [12]पद्मस्रग्धारिणी सा च नित्यं पद्मासनप्रिया ॥
भवन्ति वृत्तयं सर्वं [13]तदिच्छातः प्रवर्तते । पङ्कजात् पङ्कसख्यं च सूक्ष्मं विभवलक्षणम् ॥ १६
पञ्चपद्मान्विते तात स्रग्वरे कमलोदरे । [14]ध्यायेद्दृष्ट्वा ततस्स्तुत्वा ह्यश्नु? ब्रह्मन् न मोक्षयेत् ॥
द्योतस्सर्वभवानां वा कालादीनां तु सर्वदा । आधारे कालकालाख्ये....तदः प्रपूज्यते ॥ १८
[15]प्रद्युम्नरूप ...त्पत्तिर्यतोर्वी द्योतलक्षणा । सर्वतश्चानुरुद्धत्वादथाधारे तदात्मके ॥ १९
गतौ चैव हि सूर्याख्ये बिम्बे [16]तदुपलक्षणे । [17]शक्तितत्त्वेऽनिरुद्धाख्ये पूजितस्संप्रमोचयेत् ॥
शक्तिर्नारायणाख्या या स्वमूर्तिः परमेश्वरी । मूत्वा चाग्रमदे? भावैस्सर्वमाप्याययेज्जगत् ॥ २१
अतोत्मयेतु? चाधारे ह्यर्धेन्दुसदृशे सिते । संपूजितानि गृह्णानि? पारे? धामनि योजयेत् ॥ २२
ब्रह्मदानक्षमा शक्तिर्वैराजधनुधारिणी? । त्रिस्कन्धे मण्डले पूज्या यतो ज्ञेया त्रयीमयी ॥ २३
वितते .... स्थिते सर्वामुपसंगृह्णते तथा । कूर्मोऽज्ञानीव भयतो ह्यत[18]स्संपूजितः प्रभुः ॥ २४

---

१. ग–घ—सत्वा रूपावधाद्देवो
२. क–ख—नयप्रकृत ... स्वेता ... क्ति ग–घ—नयप्रकृततेस्वेतात् त क्तित्वेन
३. क–ख—निपुमाति ग–घ—निष्टमांति ४. ग–घ—यद्यदुत् ५. क–ख—निचयं महत्
६. ग–घ—स्फुरत्कर ... दीप्ताभ्या ७. ग–घ—तवास्तिशक्तय
८. म–घ—नान्यधारं विना ९. ग–घ—कल्पनाम् १०. ग–घ—तत्र वाह्ये
११. ग–घ—गोलत्व सर्वदार्वापगो १२. क–ख–ग–घ—पद्मस्रग्वारिणी
१३. क–ख—तदिच्छान्ततवर्तते ग–घ—तदश्चान्त प्रवर्तते
१४. क–ख—ध्यायं च्वात्तस्तुत्या मह्यमश्नु ब्रह्मन् हि मोक्षयेत्
१५. क–ख–ग–घ—प्रद्युम्नरूपग्रत्यक्तिर्विदो विद्योत १६. ग–घ—तद्रूपलक्षणे
१७. क–ख—शक्तितश्चानिरुद्धाख्यं पूजितस्यं १८. ग–घ—स्संपूज्यते

कूर्मोदरगते पद्मनियुते .... क्रियापरे । शक्त्यात्मा भगवान् विष्णुश्शङ्खचक्रगदाधरः ॥ २५
या च सैहि? विभोश्शक्ति[1]मूर्तिर्ज्ञानापदेशिनी । मयैर्गभीरनिर्घोषश्शब्दो येन तु लीलया ॥ २६
सम्यक् प्रणवरूपेण तस्माच्छङ्खोदरे सदा । साधर्म्यलक्षणे बिम्बे पूजिता कमलोदरे ॥ २७
[2]भवत्यहरिकी शीघ्रं क्षयत्रं कल्मषस्य च । यज्ञाङ्गतेव्ययाशक्ति[3]कुंभोदरगताम्बुजे ॥ २८
इष्टा फलप्रदा सम्यग्भवते विधिनाशना? । विस्तारं तेऽथ तत्त्वस्य लक्षयित्वा प्रकल्प्य च॥ २९
बहिराग्नेयमाधारमग्नेर्वै....स्तथैव च । एवं ध्रुवस्वरूपं च स्थिरं कृत्यज तद्विज? ॥ ३०
ततः प्रविश्य तन्मध्यं क्षमातत्त्वं तपस्थितम् । ऊरूकृतां स्ववीर्येण जले निवसतां सती? ॥ ३१
निहत्य जलजाद्दोषाद्भूमिसृष्टिं चकार च । प्राजापत्येन विधिना ततः करणमाश्रयेत् ॥ ३२
एतस्मात् कारणाद्ब्रह्मन् पूज्य कुम्भोदराम्बुजे । वाराही भगवच्छक्तिर्नीलजीमूतसन्निभा ॥ ३३
[4]एवं स्त? शक्तयः पूज्या परिवारसमन्विताः । नवपीठे महायागे तं च कृत्स्नं वदामि ते ॥ ३४
येन सन्दृष्टमात्रेण भवबन्धक्षयो भवेत् । क्षेत्रं द्विरष्टधा कृत्वा समैर्भागैस्तु पूर्वदिक् ॥ ३५
एते संविभजेत् पश्चाद्भागं षोढा तु लाञ्छयेत् । यथा जायन्ति भागानां सहस्राणि निवारवम्?॥
शतद्वयं शतामन्ये? मन्ये षोडश[5]कोष्ठगा । एवं संपूजयित्वा तु क्षेत्रं स्वं विततं द्विज ॥ ३७
चतुर्विंशत्यत्रकरं? यजनार्थं नवात्मनि । साधनीयात्मसध्ये तु मण्डलानवकक्रमात् ॥ ३८
द्वारशोभाश्रियुक्तानि तानि वीर्ये युतानि च । [6]मध्ये तत्र च युक्तानि समानि विषमाणि च॥
शतार्धेन षड्नेन [7]त्वंशकानां शतेन तु । कल्पयेत् क्षेत्रमध्ये तु मण्डलं प्रथमं द्विज ॥ ४०
चतुर्द्वाराणि [8]पीठाढ्यं बैम्बक्षेत्रविभूषितम् । मध्यपट्त्रिंशदंशानि प्रथमं परिमार्जयेत् ॥ ४१
बिम्बायापि तु सा ज्ञेया पीठपङ्क्त्या तु तद्बहिः । [9]तस्मादविगमांशानां मध्यतो दिक्षु लोपयेत् ॥
[10]ईशाग्नियातुसामीरकोणेष्वत्र त्रयं त्रयम् । द्वाराणि च सकोणभागं? पद्मपङ्क्तिद्वयेन तु ॥ ४३
[11]चतुर्दिक्ष्वन्तरा पङ्क्तौ कर्णार्थं कोष्ठकद्वयोः । उपकर्णप्रसिद्ध्यर्थं तद्बाह्यं तु चतुष्टयम् ॥ ४४
शोभं चतुर्थकोणस्थमंशकानां त्रिकद्वयम् । कृत्वैवं मण्डलं मध्ये [12]बाह्यतस्तस्य मार्जयेत् ॥ ४५
वीथ्यर्थं पङ्क्तिषट्कं तु [13]प्रागुदग्याम्यपश्चिमम् । अथ क्षेत्रस्य [14]पूर्वात्ममण्डलं मध्यते? परम् ॥
भागैः पूर्वोक्तसंख्यैस्तु मार्जयेत्तद्वदेव हि । तस्य शोभान्वितं तत् स्याच्चतुर्दिक्ष्वब्जसंभव ॥ ४७

---

१. क-ख-ग-घ—मूर्तिर्ज्ञानपदाशन नी   २. ग-घ—भवत्य हरि खी?
३. क-ख—कुर्योदरगतं भजे   ४. ग-घ—एवमस्त्वशक्तयः   ५. क-ख—गोष्टका
६. ग-घ—ध्येतक्षेत्रयुक्तानि   ७. क-ख—अशकेनांशकेन तु
८. क-ख—पीठाद्यं   ९. ग-घ—तस्माद् द्वि द्विगमांशानां
१०. क-ख—ईशाग्नेय तुसारो   ११. क-ख— .... क्ष्वन्तरा
१२. क-ग-घ—बाह्यास्तस्त   १३. ग-घ—प्रागुदग्यम   १४. ग-घ—पूर्वत्र मध्यशो

स्थानं [1]संसाधयन्नेषां शोभानामवधारय । द्वारपार्श्वद्वयं कुर्याच्छुभं शोभाद्वयं द्विज ॥ ४८
तदर्थं बाह्यपङ्क्तौ तु एकांशं त्रीण्यतोऽन्तरात् । [2]सांपकोष्ठकमायातु [3]पर्यस्तद्वद्भवद्भवेत् ॥ ४९
समीपवर्तिशोभस्य कोणं [4]चापथकः पयेत् । उभाभ्यामपि पङ्क्तिभ्यामंशषट्कोणपूर्ववत् ? ॥५०
मार्जयेद्वीथिसिद्ध्यर्थं दिक्त्रयात् पूर्वमेव तु । पङ्क्तिषट्कं तुकाभानां ? याम्योदक्पूर्वदिक्त्रयम् ॥
अनेन विधिना [5]कुर्यादंशां(न्) कुर्याच्च लोपयेत् । यथा न हीयते संख्या नवपीठेति या स्थिता ॥
प्रकल्प्य विधिनाऽनेन विधियुक्तानि पौष्कर । तलङ्घनं स्यादस्यस्य तद्द्वारोपगतस्य च ॥ ५३
अंशपङ्क्तिद्विषट्कोणदिक्षु द्वारचतुष्टयम् । कुर्याच्छोभाष्टकं चैव तूपशोभाष्टकं तथा ॥ ५४
चतुष्टयं च कोणानां रेखाणां त्रितयं बहिः । शतमष्टाधिकं चैव द्वारं द्वारात्तु लोपयेत् ॥ ५५
अशीत्येकाधिकाद्भागात् प्रतिशोभात्तु मार्जयेत् । उपशोभप्रसिद्ध्यर्थं तावत्तचांशकं स्मृतम् ॥ ५६
एकैकं मार्जयेत् कोणं क्रमशोनं च तत्त्रयम् । प्रागेव कल्पनं कृत्वा ततस्साधनमाचरेत् ॥ ५७
द्वारस्य वीथिबाह्यात्तु शोध्यः पङ्क्तित्रयाद्विति ? । षडंशमंशकानां तु [6]स्याद्यथाऽष्टादशांशकात् ॥
जायते द्वारकर्णं तु चतुरश्रायतं समम् । कर्णबाह्ये ततो ब्रह्मन्नुपकर्णप्रसिद्धये ॥ ५९
पङ्क्तित्रयं मार्जनीयं भागद्वादशकान्वितम् । यथा षट्त्रिंशदंशानि मार्जितानि भवन्ति हि ॥६०
अथोपकर्णबाह्ये तु द्वाराधारं प्रकल्पयेत् । उपकर्णोपमं रम्यं [7]तदाऽन्यत् कमलोद्भव ॥ ६१
भागपङ्क्तित्रयं चैव युक्तमष्टादशांशकैः । तर्दनीयं [8]यदा यस्या पञ्चाशच्चतुराधिका ॥ ६२
लुप्त्वैवं तु भवेद्द्वारं [9]त्रिपुनन्त्वादिशन्त्वतः । द्वारपार्श्वोपगं कुर्याच्छोभात्तस्मात्तु लोपयेत् ॥ ६३
द्वारकर्णसमीपाच्च [10]अंशपञ्चदशान्वितम् । पङ्क्तित्रयं तु वै ब्रह्मंश्चत्वारिंशद्यथाक्रमात् ॥ ६४
[11]पञ्चाधिकाश्च जायन्ते संख्यामानं तु पौष्कर । ततोपकर्णनिकटान्नवभागसमन्वितम् ॥ ६५
त्रितयं चैव पङ्क्तिभ्यां लोपनीयं प्रयत्नतः । जायते संख्यमानं तु.. .सप्तविंशत्यंशका ? ॥ ६६
तद्वाधारसमीपात्तु अंशकत्रयसंयुतम् । पङ्क्तित्रयं शोधनीयं [12]यथाऽस्य .... ष्टयम् ॥ ६७
शोभं बाह्याद्यालसमुपशोभा .... न्तरात् । संपाद्य चोपशोभं वै कोणशुद्धिं समाचरेत् ॥ ६८
प्रतिपङ्क्तित्रयाच्चैवमादिमध्यबहिर्मता । नवाधिकानि नवतिकोष्ठकानि तु मार्जयेत् ॥ ६९
यावद्भवन्ति भागानां त्रिभिरूनं शततत्रयम् । द्वाराधारं बहिस्तेन भागं पङ्क्तित्रयेण तु ॥ ७०

---

१. ग-घ—संसाधनं नेषां
२. ग-घ—सांपकोष्ठक्रमायां तु
३. सर्वत्र समान्यक्षराणि
४. क-ख-ग-घ—समान्यक्षराणि
५. क-ख—कुर्यादशां कुर्याच्च
६. क-ख—सन्यधा
७. ग-घ—तदद्य
८. ग-घ—यथाग्रस्य
९. ग-घ—त्रपुरंत्वादशं ततः
१०. क-ख—अंशपञ्चदश .... ....
११. क-ख—पञ्चाशत्वाश्च
१२. ग-घ—यथास्युर्नचकोष्टयं ?

प्रतिवारणरेखाणां त्रितयं पञ्चकं तु वा । अथवा पट्टिकानां तु सम्पाद्या वै परानना ॥ ७१
भवन्तमपरद्वारे कुर्यात् क्षेत्रस्य पौष्कर । रेखागणं तु तद्बाह्यान्मार्जे[२] वा पट्टिकात्रयम् ॥ ७२
विस्तीर्णमस्त्रविविधा यदिवेच्छसि पौष्कर । तदर्धं पङ्क्तिनवकं मार्जयित्वाऽधिकल्पयेत् ॥ ७३
द्वारादीन् पदषट्कोणान् प्रागुक्तेन क्रमेण तु । पङ्क्तिद्वयं द्वयेनैव द्वारकर्णादिको? द्विज ॥ ७४
संख्यानामंशकानां तु मण्डलं द्वियवेषु च । त्रिपङ्क्तिह्रासाद्बोद्धव्यं स्वयं किं कथये न तु ॥७५
संशोध्य मण्डलानां तु प्राङ्मध्ये बिम्बसन्ततिम् । द्विकप्रमाणे रेखासु समासु सुसितानि च॥७६
कृत्वा चैव परिच्छिन्ने बिम्बबाह्यात् क्रमेण तु । रञ्जये[१]द्विविधानेन क्षेत्रं वै ह्यनलान्वितम् ॥ ७७
बिम्बैर्विना बता[२] बाह्यं पाण्डुरक्तेन चात्र वै । राजपाषाण[२]तुल्येन पैठीयं चरणावलम्[२] ॥ ७८
[३]शतधारनिभेनाथ तद्गात्रं कवचं ष यत् । तुषारारुणभेदेन नृपोपलनिभेन वा ॥ ७९
पूरयेद्रागपीतेन पीठकोणचतुष्टयम् । समारभ्य तु चैशानाद्यावत् कोणं तु मारुतम् ॥ ८०
यागक्रमेणानेनैव [४]त्वाप्योदक्पूर्वदक्षिणम् । दिक्चतुष्कं तु [५]वैरस्वं[२] द्वाराणि सुसितेन च ॥ ८१
रक्तोज्ज्वलेन रागेण पूरयित्वा कञ्जं द्विज । अन्तरात् पाण्डुरक्तेन [६]होमद्भोनोपशोभकम् ॥ ८२
[७]मध्यात्मन्तात[२] भेदेन पूरयेत्तदनन्तरम् । हेमाभेनाथ वै मध्याद्बाह्यान्मरतकेन तु ॥ ८३
रक्तोज्ज्वलेन कोणानि [८]केवलेनाथवा द्विज । सह वै पाण्डरक्तेन रञ्जनीयानि तेन वा ॥ ८४
यथा विभागसंस्थेन तन्मे निगदतश्शृणु । अंशपङ्क्तित्रयोत्थेन [९]कोणमानस्य मध्यतः ॥ ८५
पाण्डरोज्ज्वलरागेण पूरणीयं तदन्तरात् । रक्तोज्ज्वलेन रजसा रक्तेन च विभूषयेत् ॥ ८६
रक्तोज्ज्वलेन वा मध्याद्रागेण परिपूरयेत् । आद्यन्तात् पाण्डुरक्तेन रजसा कमलेन च ॥ ८७
कर्णात् कर्णा ..पासूत्रा? दत्वा कोणाद्विमाजयेत् । रक्तोज्ज्वलेन भागैकं पाण्डुरक्तेन चापरम् ॥
[१०]पागवद्वा वैपरीत्येनाप्यर्धमर्धेन रञ्जयेत् । रजसा तु यथार्थार्थमसदृश्येन राजने ॥ ८९
[११]नग्नाश्रिविधिनाऽनेन बाह्यं रेखास्वतादिता[२] । रेखानां चैव रागस्य स्थानभेदस्थितस्य च ॥
व्यवधानविधि कुर्या[१२]दन्योन्यरजसा तु वै । [१३]यागोचिनेन कुसुमैः पीठादि परिपूरयेत् ॥ ९१
त्यक्त्वा परार्धमामं तु ह्येकैकस्मिंस्तु मण्डले । बाह्यतो द्विजरेखार्थी कुङ्कुमाद्यैरनन्तरम् ॥ ९२

---

१. 'द्विधिना' इति स्यात् २. ग-घ—तुल्येन ··· वैधें चारणा
३. ग-घ—शतधामनिभेना ४. क-ख—त्वा .... व्यो ... पूर्व
५. ग-घ—वैरस्थ? ६. सर्वत्रैकरूपं. हेमाभेनोप इति स्यात्
७. ग—मध्यात्थतानाभेदेन घ—मध्यात्मताता ८. क-ख—केवलानि
९. ग-घ—कोणमानेन १०. क-ख—प्रागवद्वा चैव नित्येना
११. क-ख—नग्नाश्री .... धिना १२. क-ख—दन्योन्यारञ्जसा
१३. ग-घ—यागोत्थितेन

[1]मण्डलभ्रमणीं सर्वामुपलिप्य सितादिना । .... .... .... ॥ ९३

[2] .... .... .... .... .... .... ....

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां

नवपद्मविधानलक्षणो नाम

दशमोऽध्यायः

# अथ एकादशोऽध्यायः

**पौष्कर उवाच—**

वृत्तादीनां च बिम्बानामज्ञातं लक्षणं मया । आशंस त्वं जगन्नाथ यदि सानुग्रहोऽस्मि मे ॥

**श्रीभगवानुवाच—**

[3] . . .. .... ... ..

लुप्ते विविक्तयागानामाधारं लक्षणान्वितम् । मण्डलानामतो मध्ये बिम्बसङ्घं प्रकल्पते ॥ १

अधमं क्षेत्रमध्ये तु मण्डलं यत् पुरोदितम् । तन्मध्येऽन्यं परित्यज्य षोडशार्धं च भ्रामयेत् ॥ २

ज्ञानादिगुणषट्कस्य ज्ञापकं रञ्जयेत् क्रमात् । सितेनारुणरक्तेन जाम्बूनदनिभेन च ॥ ३

नृपशैलप्रवालाभ्यां शतं नीलोपमेन तु । एतत्पादस्य मुख्यत्वं तुल्ये पीठादिके सति ॥ ४

तादृग्वा तत्र मध्ये तु कुर्याच्छोभाविवर्जितम् । चतुरश्रं चतुर्द्वारं चापादस्य तु वृत्तता ॥ ५

तद्ब्रह्मदेशमध्ये तु सूत्रं कृत्वा प्रसार्य च । सीमन्त[4]पीठवाग्वाभ्यां[4] भ्रामयित्वा समन्तत. ॥ ६

भूयो वै द्वारवेद्यां तु मन्तरा ? सूत्रमानयेत् । भ्रामं तु पूर्ववत् कुर्यात् तेन सूत्रेण पौष्कर ॥ ७

प्रसार्य द्वारपर्यन्तं वृत्तं पूर्ववदाचरेत् । वृत्तानामन्तरस्थानां [5]निर्वर्ण्य श्री .... माश्रयेत् ॥ ८

द्वारोपगानि बाह्यं तु कोणानि परिशोभयेत् । [6]व्यजने मण्डलं वृत्तं यत् पूर्वं सूचितं मया ॥ ९

व्यूहमध्यं भवत्येवं यदि व्यूहं विना यजेत् । कुर्याद्द्वितीयमेकं तु . . .. कृतं चैव वृत्तये ॥ १०

---

१. क–ख—"मण्डल" इत्यर्धं गलितम्

२. अत्र ग्रन्थपातः सर्वेषु कोशेषु. प्रत्युत "पौष्कर उवाच" इत्यादिरेकादशाध्यायारम्भभागः प्रमादादविभागेन संयोजितः मातृकाचतुष्टयेऽपि.

३. अत्र भगवद्वाक्यारम्भे ग्रन्थपातश्शक्यशङ्कः ४. ग–घ—पीठवावाभ्यां

५. ग–घ—निर्वर्ण्यश्रीण्यमाश्रये ६. 'व्यज्यते' इति स्यात्

द्विसप्तधा कृतं क्षेत्रं जायते मण्डलक्रमात् । राज्या ' सितेन रागेण सितपुष्पैस्तु पूजयेत् ॥ ११
मध्येऽत्र कमलं कुर्यात् सुसितं लक्षणान्वितम् । कृत्वैवं वासुदेवाख्यं शक्तित्वं संप्रपूज्य च ॥ १२
१ .. ... .... .... ...

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां
वृत्तबिम्बलक्षणो नाम
एकादशोऽध्यायः

---

# अथ द्वादशोऽध्यायः

[२]श्रीभगवानुवाच—

कृत्वैवं मध्यतो बिम्बं वृत्ताख्यं कमलासन । प्राग्दिङ्मण्डलमध्ये तु पद्मस्रग्बिम्बवल्लिखेत् ॥ १
अग्निदिङ्मण्डलं चक्रं सूर्यबिम्बं तु दक्षिणे । ततोऽग्र ' चात्र रूपं तु क्षेत्र ' नैऋतमण्डले ॥ २
अथ पश्चिमदिक्कुर्याद्बिम्बं त्रिस्कन्धसंज्ञकम् । मण्डले वायुकोणं तु मध्यबिम्बं तु तत्पदे ॥ ३
परत्वेन च सर्वेषामर्चनं वा करोति यः । वत्सरं मासषट्कं तु मासत्रयमथाब्जज ॥ ४
मासमेकं तु [३]मासार्धं नवांशदिनसंख्यया । प्राग्वत्तस्यापि विहितं क्रमशः परिवर्तनम् ॥ ५
एतेषामधुना ब्रह्मन् शृणु संसाधनं क्रमात् । प्रथमं पञ्चपद्मस्य बिम्बस्य कथयामि ते ॥ ६
यदुक्तं मण्डलं क्षेत्रं तच्चतुर्विंशधा द्विज । विभज्य वृत्तन्यायेन .. संस्थावर्वैः क्रमात् ॥ ७
पीठसूत्रावधिर्यावन्मध्ये बिन्दुं त्रि ' कल्पयेत् । भागैकादशमानेन भागः पद्माद्बहिर्भवेत् ॥ ८
भ्राम्यवृत्तद्वयेनैव भागमष्टादशं ततः । यच्चतुर्विंशतो भागास्सुपीठनिकटे त्यजेत् ॥ ९
एवं सम्यग्यथा कुर्यात् पङ्कजं पद्मपङ्कजम् । यथा तत् कथयिष्यामि समासादब्जसंभव ॥ १०
यत् प्रवृत्तं द्वयं दत्तं मध्यात् तत् पञ्चधाऽङ्कयेत् । पूर्वदिक्संस्थितं कृत्वा चिह्नं तु प्रथमं त्वथ ॥
तच्चिह्नदेशादारभ्य कुर्यादन्यच्चतुष्टयम् । यथागं ' पञ्चगस्यान्ते समं स्याद्भागपञ्चकम् ॥ १२
तेषु चिह्नेषु संस्थाप्य सूत्रं पञ्चाङ्गसंमितम् । सिद्ध्यर्थं कमलानां तु भ्रामयेत् पूर्ववत् क्रमात् ॥
एवं स्यात् पञ्चपत्राणां पद्मानां क्षेत्रपञ्चकम् । मध्यपद्मं भवेच्छुक्लं पञ्चकं पाण्डुरोज्ज्वलम् ॥
पीता स्यात् कर्णिका तेषां रक्तरागेण केसराः । प्रतिपत्रान्तरे तेषु पद्मेषु केसरत्रयम् ॥ १५

---

१. अत्र प्रतिपाद्यो विषयो न निगमितः. अध्यायश्च अकाण्डे अवसानं प्रापितः कोश चतुष्टयेऽपि दृश्यते.

२. अत्र प्रश्नप्रतिवचनप्रतिज्ञावाक्यनिर्देश विनैव "कृत्वैवं" इत्यादिना चोदित प्रतिवचनमारभ्यते. तेन प्रश्नोत्तरप्रतिज्ञावाक्ययोगः सुसन्धानः नानवसरश्च भवति अतः श्रीभगवानुवाच इति योजितम्. ३. ग—घ—सार्धं वा

पद्मानां साधनार्थं तु यत् [1]प्राग्वृत्तत्रयं द्विज । भ्रामितं तस्य मध्यं तु रजसा परिपूरयेत् ॥ १६
इन्द्रनीलोपमेनैव तन्नालं पद्मसन्ततेः । दलान्तराणि सर्वेषां [2]मध्यभागादितः क्रमात् ॥ १७
नृपाश्मरुचिरागेण क्षेत्रान्तं परिपूरयेत् । मध्यवत् सर्वपद्मानां व्योमवृत्तं न कल्पयेत् ॥ १८
निष्पाद्य मध्यपद्मे तु बिम्बेशं संप्रपूजयेत् । सर्वारकर्णिकामध्यात्तदेव विधिवद्यजेत् ॥ १९
पञ्चकं पुरुषाद्यं यत् पूर्वपद्मे प्रपूजितम् । क्रमेण [3]पूर्वपद्माभ्यां यावदीशानगोचरम् ॥ २०
प्रादक्षिण्येन सर्वेषां [4]क्षमं तत्त्वगणं न्यसेत् । न्यस्य संपूज्य पाद्यार्घ्यपुष्पधूपविलेपनैः ॥ २१
अनन्तरूपो [5]भगवान् वनमाली तु यस्स्मृतः । अभीप्सितै[6]रतः कुर्यादरकैर्बीजचक्रकम् ॥ २२
उत्तमं द्वादशारं तु [7]तच्च ते विदिता पुरा । [8]कालक्रमाभिधास्सर्वा सूक्षादौ[?] च क्रमं यजेत् ॥
षट्सु चाङ्गेषु विधिवन्नेम्यन्तेषु च सत्तम । स्थूलसूक्ष्मविभागेन यथा तत् ते ब्रवीम्यहम् ॥ २४
[9]प्राणो ह्यक्षस्थितो सिद्धं? ताभिस्स्यात्तु विनाडिका । ब्रह्मन् विद्धि वा व स्वरागता . . ॥ २५
[10]प्रधिषु प्रस्थितो मासो नेमिभागेषु वत्सराः । स्थूलमेतत् समाख्यातं सूक्ष्मकालमथ शृणु ॥२६
उपोष्टको? निमेषश्च ततस्त्रुटिलवौ द्विज । लक्षणं च तथा काष्ठात् [11]पक्षादोपरिसंस्थिता ?॥२७
एतस्मिन् कालचक्रे तु प्रवर्तकनिवर्तके । पद्ममध्ये यजेत् साङ्गं प्रद्युम्नं परिमार्जितम् ॥ २८

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां
पञ्चपद्मचक्रबिम्बलक्षणो नाम
द्वादशोऽध्यायः

---

# त्रयोदशोऽध्यायः

**श्रीभगवानुवाच—**

चण्डानदीधियन्? बिम्बमनन्तकरभासुरम् । सुरासुरेन्द्रनिमितं शृणु तामप? सोदरम् ॥ १
पञ्चपद्मप्रसिद्ध्यर्थं क्षेत्रं प्राग्भाजितं यथा । संविभज्य तथा ब्रह्मन् सूर्यबिम्बप्रसिद्धये ॥ २
पङ्कजद्वादशांशेन भागं पद्मबहिस्त्यजेत् । द्वे वृत्ते भ्रामयेत् पश्चाद्भागीकृत्वांशपञ्चकम् ॥ ३

१. ग-घ—प्राग्वृत्तित्रय २. ग-घ—मध्यपद्मादितः
३. ग-घ—पूर्वपत्रं यत् ४. ग-घ—क्षमा तत्व ५. क-ख-घ—भगवान् ··· ली
६. ग-घ—रथः कुर्यात् ७. क-ख—तच्छते दीपिता ८. क-ख—जलक्रमा
९. क-ख—प्राणो ह्यक्षस्थविता सिद्धमनाभिभ्रातु विनाडिका
१०. ग-घ—प्रधिष्ववस्थितो ११. क-ख—पक्षादेरापरि

[1]प्रतप्तकरबिम्बं तद्बहिर्भागविपञ्चकम् । संस्थाप्य रश्मिसिद्ध्यर्थं भ्राम्य वृत्तं तृतीयकम् ॥ ४
रश्मिपुञ्जस्य पीठस्य भागमध्ये परित्यजेत् । पर्यन्ते सूर्यबिम्बस्य सूत्रं कृत्वाऽथ सत्तम ॥ ५
प्रसार्य रश्मिपर्यन्तं यावदास्थालकं तु तत् । एकांशं दद्यमानं ? तु त्यक्त्वा सूत्रस्य चान्तरे ॥
संप्रसार्य तथा सूत्रं पातयित्वा द्विजापरम् । क्रमेणानेन वै दद्याद् रश्म्यर्थं सूत्रपञ्चकम् ॥ ७
[2]यं अं सूर्यस्य बिम्बस्य मालप ... खवज्ज । ततः प्रसार्य रजसा रविवद्राजते यथा ॥ ८
रक्तारुणेन रागेण [3]हितैर्मध्यान्तमेव च । बिम्बं भाति यथा सम्यक् तेजोगोलकरूपवत् ॥ ९
पाण्डुरारुणरागेण सूक्ष्मरेखाचयेन च । चक्रेण [4]यत्ततं ? कुर्याद्गोपुच्छादिव गोणकम् ॥ १०
रश्मीनामन्तरं सर्वं रश्मिबाह्यात् तथैव च । छायेन्द्ररजसा ब्रह्मन् विघनाम्बररूपिणीम् ॥ ११
प्राग्वत्तदुत्तरे कुर्यात् कमलं शुभलक्षणम् । [5]न मध्ये धरया भक्त्या यः पूरयति जह्वगम् ? ॥१२
[6]सोऽचिरात् परमं ब्रह्म प्रविशत्यजमव्ययम् । यद्गत्वा न निवर्तन्ते भूयोऽस्मिन् भवपञ्जरे ॥ १३

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां
सूर्यबिम्बलक्षणो नाम
त्रयोदशोऽध्यायः

# अथ चतुर्दशोऽध्यायः

**श्रीभगवानुवाच—**

[7]सुधारसमयारं तु ? तुषारनिचयाकृतिम् । हारपञ्जलमारम्य ? बहिस्थश्चारु राजते ॥ १
तामिदानीं प्रवक्ष्यामि बिम्बार्थेषु च संज्ञितः । अङ्कयित्वाऽष्टधा क्षेत्र दिग्द्वयाद्दक्षिणोत्तरम् ॥ २
क्षेत्रं सूत्रद्वयेनैव युक्तानि नवसंख्यया । एवं पूर्वापरं सूत्रं क्षेत्रमध्ये तु पातयेत् ॥ ३
द्वे वाऽन्ये क्षेत्रजे सूत्रे त्रीण्येवं पूर्वपश्चिमे । प्राच्यादौ संख्यमानं यत् पौष्करांशं तृतीयकम् ॥४
संविभज्य चतुर्धा तत् ब्रह्मस्थानावधेस्समम् । [8]सुपत्यैरङ्कयेच्चिह्नैस्त्रिभिः कमलसंभव ॥ ५
त्यक्त्वा तस्माच्चतुर्थांशं प्राग्दिग्भागद्वयोपमम् । सूत्रं कृत्वा तदङ्गस्थमनेन विधिना ततः ॥ ६
[9]प्रवासा ऋग्यजुत्या च ? यावत् सूत्रं तु सप्तकम् । तस्मात्तल्लाञ्छ्यमानं तु दक्षिणे तु समानयेत्॥
यावद्वै द्वितयं सूत्रमुदग्दिग्लाञ्छनं तथा । एवं मध्येन्दुवच्चिह्नं प्रथमं परिकल्पयेत् ॥ ८

---

१. ग-घ—रम्यार्थं २. ग-घ—य अ ख सूर्यबिम्बस्य मालवाद्विरखञ्जज ?
३. ग-घ—शतैर्मध्योन्तमेव च ४. ग-घ—यन्नत ५. ग-घ—नमध्ये यरया
६. क-ख—इदमर्धं गलितम् ७. ग-घ—सुधारसामियाकामा ८. ग-घ—सुवक्त्रैरङ्क
९. ग—प्रवासा ऋग्यजात्या च घ—प्रवासा ऋश्यजात्या च

सिद्ध्यर्थमर्धचन्द्राख्यं विम्बस्यावरमुच्यते । अंसाभिधाच्चतुर्थस्य .... र्थ .... ते .... मस्य च ? ॥ ९
तं तु कृत्वा नयेत् पश्चाच्छृङ्गं प्राग्वच्चनस्य च । एकं तस्माल्लाञ्छ्यमानं द्वितीयं शृङ्गमानयेत् ॥
कृत्वैवमिन्दुलेखेन त्वर्धेन्दुर्जायतेऽधिकम् । सुपूरणीयं रजसा यथा तदधुनोच्यते ॥ ११
सितपीतेन रागेण समं ग्व्रासु [1]पूरयेत् । लाञ्छनद्वितयं चन्द्रं किञ्चित् स्थूलासु मध्यतः ॥१२
कृशासु शृङ्गदेशाच्च क्रमाद्गोपुच्छरूपवत् । [2]प्रसार्य मध्याच्छुक्केन तद्गर्भेऽम्बुरुहं लिखेत् ॥ १३
ब्रह्मस्थानाच्च यत् सूत्रं कृत्वा सं ' संप्रसार्य च । [3]चन्द्रोदयसमीपं तु यथा चन्द्रं तु संस्पृशेत् ॥
तद्भ्राम्य पद्मसिद्ध्यर्थं पद्मपत्रायतेक्षणम् । यजेच्चन्द्रोदरस्थं च नारायणमनामयम् ॥ १५
भवबन्धक्षयकरं मोक्षलक्ष्मीप्रदं विभुम् ॥ १६

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां
चन्द्रबिम्बलक्षणो नाम
चतुर्दशोऽध्यायः

# अथ पञ्चदशोऽध्यायः

**श्रीभगवानुवाच—**

वैराजीया विभोश्शक्तिर्ब्रह्मतत्त्वेति कीर्त्यते । त्रिस्कन्धलक्षणं यागं तस्य वक्ष्यामि तेऽधुना ॥ १
कृत्वा ब्रह्मपदे सूत्रं चतुरश्रस्य सत्तम । क्षेत्रार्धं पश्चिमाद्भागाल्लाञ्छयेदर्धचन्द्रवत् ॥ २
ततो वै पूर्वदिङ्मध्यं सूत्रं कृत्वाऽऽत्मयत्नतः । नयेत् पश्चिमदिङ्मध्ये तेन सूत्रेण लाञ्छयेत् ॥३
समीपाधातु[4]दिग् वायोश्चतुरश्रपुरं ह्ययम् । सूत्रद्वयमुदग्याम्ये संस्थितं कमलोद्भव ॥ ४
[5]दिग्याल्वन्ते तु तत् सूत्रं त्रिकोणं व्यजने ततः । प्राग्वदुत्पाद्य [6]मध्ये तु . . . कोणपर ? ॥ ५
ताभ्यामभ्यन्तरं कुर्यात् तृतीयभ्रमसिद्धये । यथा सूत्रत्रयोपेतं स्यात् त्रिकोणचतुष्टयम् ॥ ६
स्कन्धत्रयक्रमेणैव सोम्ययाम्यं तु पश्चिमे । सूत्रपातं ततः कुर्याच्छिन्ने क्रुद्धे ? तु तन्तुना ॥ ७
स्कन्धाभ्यां सौम्ययाम्याभ्यां [7]सौम्यापाभ्यां तथैव च । [8]याम्यापाभ्यां तु संस्थाभ्यां सूत्राणां तु तेन तु
एवमास्फालितैस्सूत्रैरंशकानां शतद्वयम् । शतार्धं च शतान्येष जायते त्र्यंशरूपिणाम् ॥ ९

१. ग-घ—पूजयेत्
२. ग-घ—प्रसूर्यमर्धात्
३. क-ख—चन्द्रोथ…समीपं
४. क-ख—दिक् साधो
५. ग-घ—दिश्यात्वङ्के कृत
६. ग-घ—मध्येतु त्रिकोणं .... वरं
७. क-ख—सोम्यावाभ्यां
८. क-ख—याम्यावाभ्या

शोभान्वितानि द्वाराणि कोणानि त्रीणि पौष्कर । भागपङ्क्तिद्वयेनैव वक्त्रा ? तु भ्रमणीशुभम् ॥
पङ्क्त्या तु साधयेत् पीठं सांशपङ्क्त्या तु पङ्कजम् । इत्येतां कल्पनां कृत्वा लोपयेत्तदनन्तरम् ॥
दशकांशं दशानां तु दिङ्मध्याचारसिद्धये । बाह्यपङ्क्तौ तु वै सप्त [1]त्रेधा च .... चतुर्दश ॥
त्रीण्यन्ये योनिरूपाणि लोपयेदंशकानि च । सप्तैतानि बहिः पङ्क्तौ लोपनीयान्यतोऽन्तरात् ॥
कर्णार्थं त्रीणि [2]कोणस्थानि द्वे योन्येकोऽग्नि ? च द्विज । एवमाग्नेयपुरवदित्येने चांशका दश ॥
संशोध्य द्वारसिद्ध्यर्थं कुर्याच्छोभाद्वयं ततः । पश्चात् द्वये तु द्वारस्य [3]त्रिंशत् षट्कोण ? पौष्कर॥
योनिवद्बाह्यपङ्क्तौ तु एवं [4]पञ्चदशान्तरात् । त्रीण्यग्निपुररूपाणि मार्जयेद् द्वेऽथ योनिवत् ॥
व्यज्यते शोभनं शोभं ततः कोणं तु शोधयेत् । [5]स बाह्याभ्यन्तराभ्यां तु पङ्क्तिभ्यां त्रिंशदंशकम्॥
द्वारद्वयं वा कृत्वाऽन्यत् [6]प्राग्वच्छोभोपगं द्विज । [7]अंशकानां तु दशकं शेषं कोणं तु शोधयेत् ॥
वीथीसंसिद्धये चैव पङ्न्त्येका या प्रकल्पिता । भागास्तत्रैव पञ्चा म ? लोपयेत् परितो द्विज ॥१९
वीथ्यन्तर्गतपङ्क्तौ तु कुर्यात् पीठं सुलक्षणम् । पञ्चत्रिकोणानि दिक्षु ? . ब्र तत्र मार्जयेत् ॥
[8]हुताशपुरवत् त्रीणि [9]द्वेऽन्त्ययोन्योपमानि च । अंशषट्कं तु वै ब्रह्मन् प्रतिकोणं तु मार्जयेत् ॥
पद्मपीठान्तरे कुर्याच्छिष्टैष्षोडशकोष्ठकैः । पृथक् सम्पूजनार्थं तु ह्येतलक्षणलक्षितम् ॥ २२
कुर्याद् द्वारा च शक्तौ तु मण्डलं यन्मयोदितम् । स लुप्तश्चतुरश्रं तु युक्तं रेखात्रयेण तु ॥ २३
नवाध्वरस्य यागस्य यदाऽङ्गत्वेन वै व्रजेत् । लुप्तवीथि तथा कुर्याद्द्वारादिपरिभूषितम ॥ २४
मुक्तारेखात्रयेणैव चतुरश्रं पुरान्वितम् । त्रिकोणं पूर्ववत् पूर्वं क्षेत्रं कृत्वा द्विसप्तधा ॥ २५
विभज्य सुसमैर्भागैस्सूत्राण्यस्फाल्य पूर्ववत् । अथ मन्त्रविशेषम्स्यादंशकानां तु मार्जयेत् ॥ २६
शोभान्वितानि द्वाराणि भागैः पूर्वोदितैर्द्विज । [10]श . न्यंशकसत्येन कुर्यात् कोणत्रयं ततः ॥
पूर्ववत् पीठकोणेषु भागषट्कं तु मर्दयेत् । दिक्त्रयादवशेषेण [11]शोधयेदंशकानि च ॥ २८
पीठान्तर्वर्तिनिश्वासैरवशिष्टैस्तु पङ्कजम् । लक्षणाढ्यं मम कुर्यात् कुर्याद्वा पीठवर्जितम् ॥ २९
अथवा षोडशांशोत्थां [12]पीठवत्युज्झितां लिखेत् । यथा तु संकटं न्यस्य पञ्चानां चाथ वक्ष्यते ॥
द्वाराणि सुसितेनैव पाण्डुरक्तेन चोत्तरम् । [13]कृष्णवर्णोन्तः ? दिग्भागं रञ्जनीयं च तेन वा ॥३१
रक्तारुणेन तद्बाह्यमीशादौ वा सितादिना । हुतभुङ्मारुतस्सूर्यः पीठकोणत्रयं स्थिते ॥ ३२

---

१. ग-घ—त्रेधानि च २. ग-घ—कोणस्थानि (कोणानि ?) ३. क-ग-घ—त्वंशन् पट्
४. ग-घ—पञ्चतदन्तरात् ५. क-ख—सबाह्याभ्यन्तर तं तु
६. क-ख—प्राग्वत् शोभावकं ७. क-ख—अंशकाना इत्याद्यर्धत्रय गलितम्
८. क-ख—हुताशपुरश्च ९. ग-घ—देन्ये योन्योपमानि च
१०. क-ख—श...न्यं श ग-घ—शयशेन्यश ११. ग-घ—शोपयेदशकानि च
१२. क-ख—पीठवदुज्झिता १३. क-ख—तूर्णवर्णान्त

पूर्वमास्तविप्रेन्द्रदिक्त्रयेऽथ श्रुतित्रयम् । [1]सौम्ये च दक्षिणे चैव ऋग्यजुस्सामसंज्ञितम् ॥ ३३
संपाद्यैवं तदन्तस्थं ब्रह्मतत्त्वं तु योजयेत् । परिवारावृतं ब्रह्मन् भक्त्या भोगैश्च याज्ञिकैः ॥ ३४
तदर्पितं मनः कृत्वा सुवाचैव परिग्रहम् । समाप्नोति शुभान् कामान् मोक्षार्थी च परं पदम् ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां
त्रिकोणबिम्बलक्षणो नाम
पञ्चदशोऽध्यायः

# अथ षोडशोऽध्यायः

**श्रीभगवानुवाच—**

शृणु ब्रह्मन् प्रवक्ष्यामि यागं कूर्मोदरं तु यत् । सप्तम नवनाभस्य विष्णोस्संपूजनाय च ॥ १
ऐशान्या [2]दिशि वा कुर्याच्चक्रं कूर्मस्य सर्वदा । रजसा चोल्लिखेत्तस्माद्विभागोद्योतिनेन च ॥ २
विभज्य दशधा क्षेत्रं सूत्राण्यास्फालयेत् ततः । [3]साध्यते शतमेकं तु कोष्ठकानां द्विजोत्तम ॥ ३
वायव्यांशं समारभ्य यावदीशानगोचरम् । पङ्क्त्येका कोष्ठकानां तु ऐन्द्रीदिक्स्थां तु मार्जयेत् ॥
कृत्वा ब्रह्मावधौ सूत्रं संप्रसार्य क्रमेण तत् । [4]उदग्याम्यतृतीयस्य यावत्सूत्रस्य सन्निधिम् ॥ ५
स्थानं तस्मा[5]न्नयेच्चोदग्लाञ्छ्यमानं तु सङ्गमम् । अस्य मध्याच्चतुर्थस्य यद्येतत् पञ्चमस्य च ॥ ६
अनेन विधिना कुर्यात् .... पृष्ठलाञ्छनम् । याम्योदक् सप्तमस्याथ मध्यसूत्रस्य सङ्गमे ॥ ७
निधाय सूत्रं[6]मप्रग्वत्तया ? स्तृतीयेपगं न्यसेत् । तत् सूत्रं लाञ्छयेद्याम्ये यावन्मध्यस्य पञ्चमे ॥
भुजात् षष्ठे तु साध्यांशे कूर्मपृष्ठं तदा भवेत् । अथ षष्ठस्य वै [7]मध्यादंशाख्यात् सप्तमस्य तु ॥ ९
निधाय सङ्गमे सूत्रं मीलयेद्ब्रह्मलाञ्छने । समास्फाल्य तु लाङ्गूलं संसिद्ध्यर्थं तु पौष्कर ॥ १०
लाङ्गूलस्य ततश्चार्धे सूत्रं कुर्यात्तु सङ्गमे । आधारात् पञ्चसंख्यस्य [8]भुजादष्टमकस्सुकैः ? ॥ ११
प्रसार्य ऋग्यजुस्सामबाहुस्सप्तक्रमस्पृशेत् ? । लाञ्छ्यमानं नयेत्तस्मान्मध्यात् तुर्यस्य मीलयेत् ॥ १२
अथ पुच्छाग्रकं सूत्रं कृत्वा [9]सिद्धिं समानयेत् । चतुर्थस्य तु वै मध्याद्भुजादष्टमकस्य च ॥ १३
तस्मान्नये[10]ल्लाञ्छितेन मयं बद्धस्य पञ्चकम् । कृत्वैवं च ततः कुर्याल्लाञ्छनं [11]कर्णदेशतः ॥

१. ग-घ—सौम्याप्यदक्षिण २. ग-घ—दिशि वै कुर्या ३. ग-घ—सिध्यते
४. क-ख—उतयाम्य ग-व—उदयाम्य ५. क-ख-ग-घ—नयेच्छोदह्यां च
६. ग—सूत्रं प्रग्वत्त यास्तृतीयोपकं घ—सूतं प्रागुक्तया
७. क-ख—मध्यद्दशा ··· सप्त ··· ८. क-ख—सजास्तमकस्सुकैः
९. ग-घ—सिद्ध्यशमानयेत् १०. ग-घ—लाञ्छनेदं यममध्यस्य
११. ग-घ—कण्ठदेशतः अनयोः कोशयोः कर्णकण्ठशब्दयोरक्षररेखायां विवेको न भवति

मध्यने सौ ? तृतीयस्य पञ्चमस्य भुजाभिधात् । सूत्रमन्तस्थितं कृत्वा सम्मुखं संप्रसार्य च ॥१५
मध्यमापञ्चकं यावल्लाञ्छ्यमानं नयेत्ततः । अतो भागे तु कर्णस्य नोर्ध्वे तु कमलासन ॥ १६
यावन्मध्यचतुर्थस्य लाञ्छनं लयमेति तत् । आधाराधारदष्टस्य ? प्रद्योतत् सप्तमस्य च ॥ १७
सूत्रमन्तर्गतं कृत्वा तन्मानेन प्रसार्य च । यावन्मध्याच्चतुर्थं तु [1]तस्मात् संचाल्य मीलयेत् ॥ १८
[2]ब्रह्माभिधात् पञ्चमस्य [3]सूत्रस्याधान ? चोद्धृतम् । कर्णसिद्धिर्भवत्येषा पातसिद्धिमतश्शृणु ॥
द्वयं पादार्धयेनैव ? ग्रस्तं जानुद्वयं द्वयम् । [4]पार्श्वस्य साधनार्थं च विधि वक्ष्याम्यतः परम् ॥२०
मध्यसूत्रत्रयं यस्य याम्योदग्दशमस्य च । कुर्यात् सन्ध्यंशगं सूत्रं [5]तेने ध्वानं च मस्पृशेत् ? ॥२१
प्रेरयेल्लाञ्छ्यमानं तु मम यत्तन्निबोधतु । ध्रुवाभिधाच्चतुर्थस्य स्कन्धाख्याद्दशमस्य च ॥ २२
अग्रवत् पश्चिमं जानुं तत्संस्थेषु च तन्तुषु । एतच्चित्तद्वये सिद्धे [6]क्रोडजान्वेकता भवेत् ॥ २३
जानोरधस्स्थिते कोष्ठे चरणं तत्र कल्पयेत् । संसूत्र्य तच्चतुर्धा वै भक्त्या पूर्वं द्विजोत्तम ॥ २४
[7]अर्धेषु प....कास्त्राणि तत्र पञ्च तु साधयेत् । भागपङ्क्तौ [8]ह्यधस्थायां मध्यभागद्वयेन तु ॥
अर्धेन्दुं प्रथमं कुर्यादधो वक्त्रं च पौष्कर । बाह्यैकादशसूत्रस्य शृङ्गे द्वे तस्य मीलयेत् ॥ २६
तत्समौ द्वावर्धचन्द्रौ विधिनाऽनेन लाञ्छयेत । ताभ्यां वै लाञ्छ्यमानाभ्यां विशेषोऽयं प्रदर्श्यते ॥
सूत्रदात् पाद[9]कोष्ठात्तु सद्यमध्यबहिर्भवेत् ? । पादपार्श्वस्थसूत्राभ्यां [10]मध्ये ताभ्यां द्विजान्तरे ॥
नखद्वयत्र [11]येणैव ग्रस्तमग्नान्न दृश्यते । पादादूर्ध्व[12]स्थिते मह्ये ? विलेख्यं नखसंमितम् ॥ २९
अर्धेन्दुजानुसिद्ध्यर्थं ध्रुवासूत्रं तु पञ्चमे । साधनं पादजानुभ्यामुक्तं शृणु मुखस्य च ॥ ३०
षोढा कर्णोर्ध्वगं भागं कृतं सर्वत्र सूत्रयेत् । भागपङ्क्तया च ते ध्वस्ते ह्यर्धचन्द्रद्वयं लिखेत् ॥३१
भागद्वयद्वयस्यान्ते ह्यधो वक्त्रसमं द्विज । ताभ्यां भागद्वयं मध्ये चन्द्राभ्यां संपरित्यजेत् ॥ ३२
अधस्स्थिते भागपङ्क्तयामंशाभ्यां तु द्वयेन तु । अर्धेन्दुमूर्ध्ववक्त्रं च पूर्ववल्लाञ्छयेत समम् ॥
अर्धेन्दुचिह्नशेषेषु भागेषु मुखमध्यतः । दर्शयेत् मुसमां रम्यां सता श्रोणिद्विजाभिधाम् ? ॥ ३४
वक्त्रमध्यगतेनैव सूत्रेण [13]रसनां लिखेत् । दन्तान्तर्वर्तिनीं चैव नातिदीर्घां न वामनाम् ॥ ३५
वक्त्रादन्तस्थभागस्य [14]वर्तिमुल्लिख्य मानतः । तद्भागात् तुर्यभागेषु तन्तुना नेत्र सिद्धयेत् ' ॥
लोचनांशस्य [15]यो भागस्समीपे चैव वर्तते । श्रवणस्य तु तत् स्थानं यथा सिध्यति तच्छृणु ॥३७

---

१. ग-घ—तस्मात् संलाञ्छ्य २. क-ख—आत्माभिधात् ३. क-ख—सूत्रस्यायान
४. ग-घ—पश्यस्य ५. सर्वत्र अशुद्धं ६. क-ख—कोसजान्वेक
७. ग—अन्धेषुपतखास्त्राणि घ—अंतेपुपतखास्त्राणि
८. क-ख—....तस्थाय ९. ग-घ—क्रोष्ठात्तु ह्यद्यमध्य
१०. क-ख—मध्यतस्य ११. ग-घ—येनैव ग्रस्तमश्नान्न दृश्यते १२. ग-घ—स्थिते मह्रे
१३. क-ख—रचनं १४. ग-घ—वृत्तिमुल्लिख्य
१५. क-ख—ये भागाः ग-घ—यो भागाः

तुर्यसूत्रस्य वै मध्यान्मध्ये सूत्रं निबोधयेत् । संमुखं लोचनस्थास्थ? तद्वदे त्रि[1]तयस्य च ॥ ३८
सूत्रं कृत्वाऽर्धभागेन .... .... । विविधान्विज ? मित्येतच्छ्रोत्रमास्फालनाद्भवेत् ॥ ३९
बदरीपत्रवत् तूर्णीं विधिनाऽनेन जायते । कह्लारं षोडशांशैस्तु मध्येऽस्य परिकल्पयेत् ॥ ४०
कृत्वैवं मार्जयेत् [2]पश्चादङ्गावयववर्जितम् । अधस्ताल्लोचनस्याथ त्विषै काले? तु निर्मिते ॥ ४१
क्षेत्रान्तं विततं पश्चाद्रागजालेन रञ्जयेत् । पाण्डुरक्तेन रागेण सूत्रयुक्तं तु लाञ्छनात् ॥ ४२
पूरणीया च रेखाभिर्व्यक्तयेऽभ्येति तत् तथा । तत्तद्रागकरूपेण रागेणात्युज्ज्वलेन च ॥ ४३
पूरयेदर्धचन्द्राणामन्तरं परितः क्रमात् । सितासितेन सूत्रं तु सुसितेन द्विजालिखेत् ॥ ४४
सन्ध्याभ्यां तुल्यरागेण जिह्वामास्यं च रञ्जयेत् । द्विजान्तराणि रक्तेन रागेण व्यक्तमानयेत् ॥
सन्दर्शयेच्चासितेन तस्य नासापुटद्वयम् । वैडूर्यतुल्यरागेण कुड्यबाह्यं तु छादयेत् ॥ ४६
शकि? नीलोपमेनाथ वीथ्योघं? तु प्रदर्शयेत् । [3]सर्वं तुर्याश्रपर्यन्तं प्राग्वत् संपूर्य पङ्कजम् ॥ ४७
एवं संपाद्य संपूज्य मध्ये तु गरुडासनम् । भोगमोक्षप्रसिध्यर्थं विभवेन विपश्चितः ॥ ४८

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां
कूर्मबिम्बलक्षणो नाम
षोडशोऽध्यायः

## अथ सप्तदशोऽध्यायः

**श्रीभगवानुवाच—**

शृणु ब्रह्मन् प्रवक्ष्यामि तवानह....चाष्टकम् । शङ्खोदरमहायागं यजनार्थं नृकेसरेः ॥ १
क्षेत्रं [4]द्वात्रिंशधाल्पान्यं? [5]सर्वदिग्गह्य? तत्समम् । [6]पत्रयेदर्धसूत्राणि [7]त्रिंशद् ध्येकाधिकानि च ॥
सूत्रसंख्या[8]कृतान्येषां त्वंशसंख्यां निबोधतु । सहस्रे तत् तथा विंशत्यपरं च चतुष्टयम् ॥ ३
[9]तन्मध्ये पाञ्चजन्याख्यं बिम्बं कुर्यात् [10]सुलक्षणम् । सूत्राणि कुर्यात् प्रागादौ भक्त्या पूर्वं द्विजोत्तरम् ।
अर्धेन्दुवन्नखस्त्रीणि ? तत्र पश्चात्तु साधयेत् । भागपङ्क्त्या ह्यधस्थाया मध्मभागपथेन तु ॥ ५
अर्धेन्दुं प्रथमं कुर्यादधोवक्त्रं च पौष्कर । मध्यसूत्राच्च सङ्गस्यान्याति? प्राक्पश्चिमानि च ॥ ६
उक्तानुक्तेषु बिम्बेषु ह्येष एवमिति स्मृतः । प्रसंख्यानेव? सूत्राभ्यां सर्वेषां [11]सत्यविक्रमम् ॥ ७

---

१. क-ख—....दय स्य च २. क-ख—पश्चात् ··· येववर्जितम्
३. क-ख—सर्वं तु यस्य ४. द्वात्रिंशधास्फाल्य. इति स्यात् ५. ग-घ—सर्वदिग्गुह्यतः
६. पातयेत् - इति स्यात् ७. ग-घ—त्रिंशद्वे त्र्यधिकानि च
८. ग-घ—कृता ह्येषा ९. ग-घ—तन्मध्यात्
१०. ग-घ—सलक्षणं ११. सत्यविक्रम - इति पौष्करसंबोधनं स्यात्

उत्तराद्दक्षिणा यैस्तु स्पृष्टसूत्रैस्तु सेतुवत् । तान्युदग्दक्षिणामध्यप्राक्प्रत्यक्स्थानि तद्बहिः ॥ ८
उदग्याम्यमृतं? यस्य मध्यसूत्रस्य सङ्गमे । निधाय सूत्रमध्येऽरं पूर्वदिश्यां च वै द्विज ॥ ९
व्यङ्गमानेन सूत्रेण चाच? शृङ्गद्वयं तु तत् । लयं नयेत् तृतीयस्य सूत्रस्यात्? [1]सापिधस्य च ॥
सिध्यमुखम .... स्यैवं येन चासौ लयं व्रजेत् । भवेच्छन्दोदयं येन सम्यग्रस्ते? समीरणे ॥ ११
पश्चात् संसाधनीयं च सुशुभं भुवनत्रयम् । मध्यसूत्राच्चतुर्थस्य याम्योदक्पश्चिमस्य च ॥ १२
[2]मध्येंशे प्रेरयेत् सूत्रं मध्याक्षा पो? दकं नयेत् । लाञ्छयित्वाऽर्धचन्द्रं तु दिग्भागे चोत्तरोत्तरम् ॥
मध्यसूत्राच्च षष्ठस्य याम्योदङ्नवमस्य च । सङ्गमे स्थापयेत् सूत्रं [3]नयेन्मध्याष्टदष्टगम् ॥ १४
[4]सञ्चं? तदर्धे द्वितयं .... सौम्य दिग्द्विज । याम्योत्तरेषु सूत्रेषु यच्चतुर्दशमं तथा ॥ १५
मध्यमान्नवसंख्या स्यात् सूत्रं संस्थाप्य सङ्गमे । तत् स्थानादानयेत्तद्वै यद्वा दशममध्यमात् ॥ १६
ततोऽर्धशशिनं दद्यात् तृतीयं सोमदिग्गता? । [5]सूत्रवापमतः कुर्याद् द्विविधं येन तच्छृणु ॥
[6]यत् स्मृतं पञ्चदशमं सूत्रं याम्योत्तरं तथा । [7]मध्याद् द्वादशमं यच्च ताभ्यां संरोध्य सङ्गमे ॥
सूत्रं नयेद्वारुणाशामध्यमास्फालयेत् ततः । भूयस्त्वनेन विधिना दक्षिणस्यां दिशि द्विज ॥ १९
अर्धचन्द्रत्रयं कुर्यात् सूत्रं संपातयेत् तथा । [8]अतश्चाभ्यन्तरे भागे सानम? शृणु सत्तम ॥ २०
[9]यागदक्षिणदिग्भागे शङ्खाकृतिक्रमात् भवेत् । शुभाय पञ्चदशमं सूत्रं [10]याम्येऽन्तगं तथा ॥
[11]मध्यमान्नवमं नाभ्यां सूत्रं कृत्वा तु सङ्गमे । तस्मात् प्रसार्य तत् सूत्रं यावन्मध्या च [12]सत्तम?॥
[13]मत्स्यवल्लाञ्छना कार्या वादीका? तत्र तेन च । प्राक् सिद्धं चन्द्रशृङ्गाभमस्य शृङ्गं तु मीलयेत् ॥
बाहुपञ्चदशाख्येन मध्यसूत्रस्य चाष्टमे । सन्धानो? स्थापयेत् सूत्रं क्रमात् तेन चतुर्दशी ॥ २४
[14]संस्पृशेद्बाहुसूत्रं च तस्मात् स्थानात्तु लाञ्चयेत् । अर्धचन्द्रमधोवक्त्रं मध्ये सूत्रद्वयस्य च ॥ २५
तदीयमुत्तरं शृङ्गं मत्स्यशृङ्गस्य मीलयेत् । अनेन विधिना सम्यङ्नाभ्यावर्तं भवेत् स्फुटम् ॥२६
नाभेरधोगतं कुर्यात् करग्रहं सुलक्षणम् । तत् साधनं समासेन शृणु वक्ष्याम्यतः परम् ॥ २७
सप्तमस्य तु वै मध्याद्बाहुपञ्चदशस्य च । कृत्वा मध्यगतं सूत्रं तत्क्रमेण प्रसार्य च ॥ २८
यावन्मध्यमसूत्रस्य [15]निपादाः? पश्चिमे दिशि । [16]आस्फलयेच्च तत् सूत्रं पाणिग्राहप्रसिद्धये ॥

१. क-ख—साविधस्य च
२. ग-घ—मध्यांशे रोधयेत् सूत्रं मध्यात् पश्चोदक
३. ग-घ—नयेन्मध्यान्नदष्टकं
४. ग-घ—सच तदर्धे ··· द्वितीयं
५. ग-घ—सूत्रपात
६. क-ख—यस्स्मृतं पञ्चदश ···
७. क-ख— ··· द्वादशमं
८. क-ख—अतश्चाभ्यन्त ···
९. क-ख—.... दिग्भागे
१०. ग-घ—याम्योरगं
११. मध्यमानमं ताभ्यां
१२. 'सप्तमम्' इति स्यात्
१३. क-ख—यस्य वल्या
१४. क-ख—संस्पर्शे ··· त्रं च
१५. ग-घ—निष्टादां पश्चिमे
१६. ग-घ—आस्फालयन्ति

भुजात् सप्तदशस्याथ स्तम्भादष्टकमस्य च । [1]सन्धौ संरोध्य वै सूत्रं प्राग्वन्नीत्वा तु पातयेत् ॥३०
मध्ये सूत्रद्वयं स्यात्तु कुर्यादर्धेन्दुसञ्चयम् । प्रमाणं भासते तेषां तस्मात् क्षेत्रक्रमेण तु ॥ ३१
[2]नाभावधस्तु शशिना लाञ्छनेन द्विजोत्तम । यवभागेऽर्धचन्द्रेन्दु ? भ्रामयेद्भागसन्निधिम् ॥ ३२
येनातिक्रूणं न भवेत् पतकं ? [3]वृद्धिबिम्बकम् । संस्त्रं लाञ्छनस्याथ शृणु संख्यस्य कल्पनम् ॥
पञ्चकं चोल्लिखेन्मध्ये कोष्ठकानां शतानि तु । भुवनत्रयसंलग्नदक्षिणोत्तरगं तु यत् ॥ ३४
[4]यत् सूत्रत्रितयं यत्नात्सुखमर्धेन्दुवद्भवेत् । भुवनद्वितयं चास्य क्रमस्स्याद्वर्तुलायतम् ॥ ३५
स बाह्याभ्यन्तरस्यातो मार्जनीयं तु कोष्ठकम् । अव्यक्तं व्यज्यते येन चतुरश्रस्य मध्यमम् ॥ ३६
[5]व्यूहं यदा विना कुर्यात् तदाऽस्य परिकल्पयेत् । द्वारशोभोपशोभानि द्विद्विकेनांशपङ्क्तिता ॥३७
द्वे चतुष्पद् तथा चाष्टौ [6]द्वारसर्वाङ्गलादिका ? । सप्तपञ्चत्रिरेखं च लुम्पेच्छोभोपशोभयोः ॥
त्र्यंशात्यष्टाधिकां चैव कोणात् कोणं तु वै ततः । ग्रस्तौ पूर्वापरौ द्वारौ किञ्चिच्छोभासमन्वितौ ॥
अखण्डितं भवेच्छेषं प्रागुक्तं विधिना तव । कुर्याद्वीथ्यादिकं सर्वं लुप्तचक्रचये सति ॥ ४०
रागेण रञ्जयेत् पश्चाद्यथा तदिह कथ्यते । पाण्डरारुणकेनैव लाञ्छनात् सूत्रमिश्रिताः ॥ ४१
क्रमेण पूरणीयाश्च [7]संरेखासु च सर्वदिक् । पाण्डरेण तु रागेण गोक्षीरसदृशेन तु ॥ ४२
दर्पणोदरवन्मध्यात् पूर्यं पद्मं यथा पुरा । वक्त्रमध्येऽस्य वेधं तु कृष्णेन रजसा समम् ॥ ४३
[8]स्वेच्छया विधिवत् कुर्यात् सुवृत्तं सुन्दराकृति । वैडूर्यसदृशेनाथ कृष्णेन परिरञ्जयेत् ॥ ४४
[9]बिम्बमद्य द्विजश्रेष्ठ एवं कृत्वा तु पूजयेत् । शङ्खोदरमध्ये तु ध्यानसक्तो नृकेसरिम् ॥ ४५
सर्वकामप्रसिद्ध्यर्थं कैवल्यप्राप्तये तथा ॥ ४५॥

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां

शङ्खबिम्बलक्षणो नाम

सप्तदशोऽध्यायः

१. क-ख—सन्ध्या संरोध्य
२. ग-घ—नाभावतेस्तु
३. ग-घ—वृद्धिबिबकम्
४. ग—घ-वज्रसूत्रत्रयं
५. क-ख—व्यूहं यभा विना
६. ग—घ-द्वारसंसा गळादिका
७. ग-घ—सरेखासु
८. क-ख—स्वेवश्वा
९. ग-घ—बिंबाद्या द्विज

# अथ अष्टादशोऽध्यायः

श्रीभगवानुवाच—

अथ ते संप्रवक्ष्यामि यागे तु कलशोदरम् । यत्र [1]यज्ञाङ्गभृद्देवं पूजयन्तीह साधकाः ॥ १
[2]आचत्वारिंशधा क्षेत्रं भङ्क्त्वा सूत्राणि पातयेत् । अंशकानां सहस्रं तु [3]विद्धि तत्र शतानि च॥
[4]षडंशमानं कथितं सूत्रपातं निबोधतु । प्राक्प्रत्यक्संस्थिता सूत्रा ? चत्वारिंशत् तथा परम् ॥ ३
सूत्रमेकमुदग्याम्ये तद्वदेव प्रकीर्तितम् । सौम्ययाम्यैक[5]विंशत्या मध्यसूत्रस्य पञ्चकम् ॥ ४
निधाय संभ्रमेत् सूत्रं मध्यात् सप्तदशं नयेत् । तस्मात् स्थानादर्धचन्द्रं लाञ्छयेत् सौम्यदिग्गतम् ॥
मध्यमात् पञ्चमाख्यस्य [6]याम्योदङ्नवमस्य च । [7]शृङ्गैकमर्धचन्द्रस्य तस्मिन् बन्धो ? निरोधयेत् ॥
दोस्त्रयस्त्रिंशसंख्यस्य [8]पञ्च . .. मध्यमस्य च । [9]सन्ध्यंशे चापरं शृङ्गं निरोध्यं दक्षिणे तथा ॥७
निधाय सङ्गमे सूत्रं तस्मात् ततत् प्रसार्य च । [10]यावन्मध्याद् द्विसप्तस्य सन्धितो दशमस्य च॥८
इत्युक्तं लाञ्छनं पूर्वमपरं कथयामि ते । मध्याद्यागन्तसूत्रस्य ? अंशौ तच्चाष्टमस्य च ॥ ९
कृत्वा सन्धिगतं सूत्रं तस्मात् स्थानात् प्रसार्य च । शरवद्दा ? द्वितीयस्य समीपं चैव पौष्कर ॥ १०
तस्मात्तु लाञ्छ्यमानं तु नीलत्वाम्भस्य ? मीलयेत् । लाञ्छनद्वितये सिद्धे विधिनाऽनेन सत्तम ॥
वक्त्रं करिकराकारं सिध्यते जलनिर्गतम् । वृत्तं तस्याग्रतः कुर्या[11]द्भागेनास्ती स्ति ? तेन च॥१२
रुचिमन्त्रेण वस्त्रेण सर्वमन्त्रगणेन वा । सर्वध्वो ध्वानयेत् ? तस्मान्मध्यसप्तदशां नयेत् ॥ १३
तस्मात् तदर्धचन्द्रं तु लाञ्छयेत् सौम्यदिग्गतम् । मध्यात् पञ्चमसंख्यस्य याम्योदङ्नवमस्य च ॥
शृङ्गेद ? मर्धचन्द्रस्य तस्मिन् सन्धौ निरोधयेत् । दोस्त्रयस्त्रिंशसंख्यस्य पञ्चमे मध्यमस्य च॥
सन्ध्यंशे परिशृङ्गानि निरोध्यं दक्षिणे तथा । सा लाञ्छ्यमर्धचन्द्रं तु कुम्भस्स्यात कलशस्य वै॥
कल्पनीयास्तथा[12]वारः पश्चादस्याप्यनिर्गतः ? । मध्यान्नवमसूत्रस्य सप्तविंशस्य दोर्द्विज ॥ १७
सन्धौ कृत्वा प्रसार्येदं मध्याद्वै पञ्चमं स्पृशेत् । मत्स्यवल्लाञ्छ्यमानं तु नीत्वा तस्यास्तु सङ्गमम् ॥
दोरेकचत्वारिंशस्य मध्याद्वै नवमस्य यत् । वायुवारुणदिङ्मध्ये लाञ्छनं संप्रकीर्तितम् ॥ १९

---

१. ग-घ—यज्ञाङ्गहृद्देवं २. क—अचत्वारिंशते क्षेत्रे भक्ते ग-घ-अचत्वारिंशधा क्षेत्रे भक्ते
३. क—विधि ४. क—षडङ्गमानं ५. क—विंशस्य ६. ग-घ—याद्योतं नवम
७. क—शृङ्गे ... मध्य ८. ग-घ—पञ्चमे मध्य ९. क—सद्ल्गशेचावरं
१०. घ—'यावन्मध्य' 'इत्युक्तं' 'मध्याद्याग' इत्याद्यर्धत्रयं गलितम्
११. ग-घ—भागेनोस्तिसितन च १२. ग-घ—पारः

तत्तद्वारुणनैर्ऋत्यां मध्ये कुर्याच्च लाञ्छनम् । आधारस्सिध्यते [1]चास्य कण्ठमानेन चोच्छ्रितः ॥
साधनीयं ततः कण्ठं भारयुक्तं मनोहरम् । मध्याद्दशमसूत्रस्य प्रत्योदक्प्रथमस्य च ॥ २१
निधाय सङ्गमे सूत्रं मध्यादेकादशं स्पृशेत् । लाञ्छ्यमानं नयेत् सिद्धिं द्वितीयस्य [2]भुजाविधा ॥
[3]मध्याद ........ तत्सूत्रं कमलेक्षण । अथ यूपान्नवाख्यस्य याम्योदग्द्वितयस्य च ॥ २३
कृत्वा वै सङ्गमं तेन मध्याद्वै दशमं स्पृशेत् । गत्स्यवत्तन्नयेत् सूत्रं सन्ध्यांशात्तन्निबोध मे ॥ २४
मध्या[4]न्नवमसंज्ञस्य सत्वस स्त्रियस्य च तत्[4] । अनेन विधिना तेन सुव्नमस्य तु सिध्यति ॥
नवमस्य च वै स्तम्भाद्वाहुतस्तैकमस्य च[5] । निधाय सङ्गमे सूत्रं स्पर्शं मध्यात्तु पञ्चमम् ॥ २६
[5]मत्स्यवल्लाञ्छ्यमानं यन्मत्स्यवत् सङ्गमं नयेत् । यद्वे? भुजतृतीयं स्यान्नवमस्य तु वै ध्रुवम् ॥
एवमुत्तरदिक्कुर्याल्लाञ्छनं दक्षिणे तु वा । [6]सुव्यक्तं सिध्यते कण्ठं कुम्भस्य [7]साललोचनम् ॥
अस्याम्बुवाहमस्यैव[8] कार्यमाग्नेयदिग्गतम् । दोस्त्रयोदशसंख्यस्य मध्यात् सप्तदशस्य च ॥ २९
निधाय सङ्गमे सूत्रं तस्मात् तत् संप्रसार्य च । यवमध्याद् द्विसप्तस्य सन्धितो दशमस्य च ॥
पातयित्वा तु तत् सूत्रं ततो लाञ्छनमारभेत् । मंवोत्[8] सप्तदशाख्यस्य सप्तमस्य भुजाविधात् ॥
कृत्वा सूत्रं सन्धिदेशे सङ्गमं तत् समानयेत् । यत्र बाहुत्रये यत्र ध्रुवात् सप्तदशस्य च ॥ ३२
[8]स्थानं तत् स्याल्लाञ्छ्यमानं संमीलयास्फालितस्य च । इत्युक्तं लाञ्छनं पूर्वमपरं कथयामि ते ॥
मध्यात् प्रागुक्तसूत्रस्य अंशतश्चाष्टमस्य च । कृत्वा सन्धिगतं सूत्रं तस्मात् स्थानात् प्रसार्य च ॥
[9]शरद्वौघ[9] द्वितीयस्य समीपं चैव पौष्कर । तस्मात्तु लाञ्छ्यमानं तु तिलत्वाभस्य[9] मीलयेत् ॥
लाञ्छनद्वितये सिद्धे विधिनाऽनेन सत्तम । वक्त्रं करिकराकारं सिध्यते जलनिर्गमम् ॥ ३६
वृत्तं तस्य ततः कुर्याद्भागेनोर्ध्वस्थितेन च । रुचिमन्त्रेण वाऽस्त्रेण सर्वमन्त्रगणेन वा ॥ ३७
[10]सर्वध्वेध्वात्तये स्मानं[10] ज्ञातुमिच्छति योऽर्थिषु । समस्तविन्धुतप्रात[11] [11]सशीयां लब्धयेऽस्य च ॥
संमार्ज्य मध्ये मन्त्रे तु सर्ववस्तुषु सर्वदा । हिंसका ध्वंसने सप्त पातालगतिसिद्धये ॥ ३९
समयानां तु दोषाणामखिलानां तु शान्तये । साम्बुवाहमदं विप्र [12]कुर्यान्न ह्यत्र पूजयेत् ॥ ४०
स्थितं सूत्रद्वयं वक्त्रे याम्योत्तरगतं तु यत् । प्रथमामपि भुवं च स्थापनीयेन मार्जयेत् ॥ ४१

१. क-ख-ग-घ—चस्य कर्ण
२. ख-ग-घ—भुजाभिधा
३. क—'मध्याद' इत्यार्धं गलितं
४. ग-घ—न्नवमसंज्ञस्त्वसंस्त्रृतीयस्य ... वत्
५. ग-घ—समास्याल्लाञ्छ्यमानं
६. सर्वत्र 'स्वत्तं' इत्यस्ति 'सुव्यक्तं' इति स्यात्
७. ख-ग-घ—स्याललोचनम्
८. क—स्थानात्
९. क—शरद्वो .... द्वितीयस्य
१०. क-ख— ... ध्वोध्वात्तये ... स्मानं
११. ख-ग—वशिधा घ—वशिथालब्धये ह्यथ
१२. ग-घ—कुर्यान्यन्यत्र

पूर्वाद्यारभ्य भागस्य....पङ्क्तिं द्विजाधिप । तथा वृत्तद्वयं कुर्यात् [1]कण्ठसूत्रं यथा भवेत् ॥ ४२
कुर्याच्छतचतुष्केण कोष्ठकानां तु मध्यतः । दलाष्टकयुतं पद्मं नवशिष्टं तु शोधयेत् ॥ ४३
भागपङ्क्तित्रये बाह्याद्द्वारदिक्कल्प्य शङ्खवत् । द्वे चतुष्षट् क्रमादंशौ द्वाराच्छोभोपशोभयोः ॥
एकांशस्त्रीण्यतः पश्चात् सप्तविंशत्यथ शृणु । चतुष्कमुपशोभान्या विदिक् [2]शोभगणं तथा ॥
जायतेऽनेन विधिना द्वारैः पूर्वापरं विना । संपूर्य रजसा पश्चादथ तत् कथयाम्यहम् ॥ ४६
लाञ्छनानि सवृत्तानि पत्राण्यत्युज्ज्वलेन च । रजसा रक्तवर्णेन हेमाभेन तदन्तरम् ॥ ४७
नृपोपलनिभेनैव त्वरुणेन सितेन च । प्रपूरणीयं [3]कण्ठस्थं क्रमाद्वृत्तगणं ततः ॥ ४८
ऊर्ध्वस्थं जलजातस्य वृत्तविद्रुमरूपिणा । रागेण रञ्जयेत् सर्वं कृत्वैवं लक्षणान्वितम् ॥ ४९
चतुरश्रस्य मध्ये तु वराहं संयजेत् ततः । सप्तद्वीपाधिपत्यार्थी निष्कामो ह्यथ शक्तिमान् ॥ ५०
वृत्तादीनां च बिम्बानां या मध्ये परिकल्पना । भागैरम्बुजसिद्ध्यर्थं नवपीठं [4]विना तु सा ॥ ५१
यद्येकस्मिन् द्विज क्षेत्रे वृत्तादीन् परिकल्पयेत् । तेषामन्तर्गतं कुर्यात् कुर्यात् कमलसञ्चयम् ॥ ५२
प्राक् परि[5]ज्ञाय चात्यल्पं बिम्बं निर्वृतिपङ्कजम् । [6]पश्चाद्वै तेन मानेन शेषं पद्मगणं लिखेत् ॥
इत्युक्तमरविन्दाक्ष यत् त्वया [7]चोदितो ह्यहम् । नवमण्डलगर्भं च नवद्वारपुरोपमम् ॥ ५४
भक्तानामारुरुक्षूणां प्रायश्श्रेयस्करो नृणाम् । नैतस्मादपरं चान्यदस्माचाहं तु मन्यते ॥ ५५
यागानां चैव सर्वेषां प्राधान्यत्वेन वर्तते । तदवाच्यमभक्तानां शठानां चात्मवैरिणाम् ॥ ५६
नास्तिकानां तु पापानामन्यदर्शनसेविनाम् । [8]क्रमक्रियोज्झितानां च द्विजानेद्रिपतामपि ॥ ५७
एषामन्यतमानोपि[?] वक्तव्यं वै प्रजापते । नवगर्भस्य यागस्य विधानं शास्त्रचोदितम् ॥ ५८
यस्त्विमं पूजयेत् पश्चात् स्वशक्त्या विभवेन वा । सोऽनन्तं फलमाप्नोति ऐहिकामुष्मिकं शुभम् ॥
पठ्यमानस्य वै यस्य याति [9]वाग्वि भवक्षयम्[?] । येनापि च सकृद्दृष्टो महायागश्च पूजितः ॥ ६०
तस्य जन्मसहस्रोत्थ [10]मेनमं विलयं व्रजेत् । क्रमाद्यास्यसि देहान्ते [11]तेनेत्थं स्थागगस्य च[?] ॥
तस्मात् पूज्यमिदं शक्त्या द्रष्टव्यं पूजनं विना[?] । यागसंज्ञं शुभं ब्रह्मन् ब्रह्मप्राप्तिफलपदम् ॥ ६२

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां
नवनाभलक्षणो नाम
अष्टादशोऽध्यायः

१. क—कर्णसूत्रं    २. ग-घ—शोभा .... गण तथा    ३. क—कर्णस्य
४. क—विना ...    ५. क—ज्ञाय चा .... बिम्बानिवृत्त    ग-घ—बिम्बा निर्वृत्ति
६. ख—पश्चाद्वैतानि    ७. ख—चोदितोस्म्यहम्
८. क—कि ... क्रियो    ९. अत्र 'वाग्मित्वमक्षयं' इति चेत् साधु
१०. क-ख—मेनसा    ११. ग-घ—तेन त्वं

# अथ एकोनविंशोऽध्यायः

**पौष्कर उवाच—**

लक्ष्मीनाथ ममाचक्ष्व हेतुना केन हीयते। येनातिसुदृढो [1]भावस्त्वयि चात्र सदैव हि॥ १

**श्रीभगवानुवाच—**

[2]धामया? श्रित्य शाठ्येन [3]महार्हमपि लीलया। [4]द्रष्टव्यं वा पूजितं वै दूरादपि [5]नमस्कृतम्॥
प्राप्यते चक्रवर्तीनामाधिपत्यं तु पौष्कर। सकामैर्भगवानत्र ब्रह्म नारायणात्मकम्॥ ३
विना? सद्भक्तिभावेन त्विष्टं? विप्राचिरात्ततः। हेरा ततस्तु? मूलानां वन्दनीयामरेषु च॥ ४
[6]सिद्धितश्श्रद्धया यैस्तु तर्पितश्चानलान्तरे। [7]संस्कृता परया [8]भक्त्या ते पूज्यत्वं गतादिह?॥
ब्रह्मादित्येन्दुरुद्राणामयोनां? सिद्धसन्ततेः। सद्यागयाजी मनुजो यावद्देहे [9]ऽवतिष्ठति॥ ६
तावदस्य फलं भूयो जीवमुक्तस्य? मे शृणु। संपूर्णायुश्च भवति [10]ह्यपमृत्युविवर्जितः॥ ७
नीरुजो हृष्टतुष्टश्च बलवानप्यकण्टकः। प्राप्नोत्यनुपमैश्वर्यं वल्लभस्सार्वकालिकम्॥ ८
पुत्रदारांस्तथा बन्धून् [11]सभृत्यबलवाहनः। विवेकधर्मसंयुक्तो वृद्धिं याति क्षणात् क्षणम्॥ ९
करोत्यत्र महायागं संकल्पादेव केवलात्। लभते विपुलां कीर्तिं सद्धर्मेणाभिवर्धते॥ १०
कर्मणा मनसा वाचा यत् प्रागशुभमार्जितम्। आबाल्यात् तस्य तत् सर्वं नाशमायाति तत्क्षणात्॥
किं पुनर्योऽत्र निष्णातस्सर्वभावेन सर्वदा। चतुर्वर्गफलार्थी वै साधुमार्गे व्यवस्थितः॥ १२
अतीताद्वर्तमानाच.... [12]ह्येष्यादखिलात् कुलात्। तदीया ब्रह्मलोकं च नरकस्थाश्च यान्त्यपि॥
यानैश्चन्द्रप्रतीकाशैर्द्योतयद्भिर्दिशो दश। [13]स्तूयमानश्च गन्धर्वैर्गीयमानश्च किन्नरैः॥ १४
वीज्मयानश्च चमरैरप्सरोभिस्समन्ततः। अयमेव महात्माऽसौ [14]देहपातादनन्तरम्॥ १५
सकाया कामचारी स्यात् सर्वत्र भगवानिव। प्राग्भुक्त्वा चाणिमादीनि स्वेच्छयाऽवतरेत् पुनः॥
जात्युत्कर्षं समाश्रित्य प्रभावात्तस्य कर्मणः। कुले सतां च सिद्धानां देशे धर्मपरे शुभे॥ १७
[15]जातस्तस्माच्छ्रिया युक्तो धीमान् सत्यपराक्रमः। प्रवर्तनार्थमन्येषां भविनां करुणापरः॥ १८

---

१. ग-घ—भावस्त्वथ चात्र  २. क-ख—यामयाश्रित्य  ३. ग-घ—महार्थमपि
४. ख—दृष्टं वा ....  घ—दृष्टं वै वा  ५. क—तमस्तुतम्  ग-घ—तमस्कृतं
६. क—सिद्धितच्छुद्धया  ख—सिद्धितच्छ्रद्धया
७. क—वस्तुता  ग—संस्तुता  ८. क—भक्त्या ··· पूज्यत्व
९. क—देहे पतिव्रते  १०. क—ह्यपमृत्युं विवर्जयेत्
११. क-ख—स्वभूत्याबलवाहना  १२. ख-घ—माना च ददेष्या
१३. क-ख-ग-घ—स्तूयमानैश्च - गीयमानैश्च
१४. ग-घ—देव पादादनन्तरम्  १५. ग-घ—जाततस्याश्रया

भुञ्जमानस्तु विषयानविरुद्धान् सदैव हि। ज्ञानकर्मरतस्सम्यग्व्यतिमान् सुप्रसन्नधीः ॥ १९ ॥
तिष्ठेद्यथेष्टं संसारे रागनिर्मुक्तमानसः। अन्ते भूतमयं [1]देहं त्यक्त्वाऽऽप्नोति वासुदेववत्॥ २० ॥
सकृदप्यर्चितो देवो नवाब्जे मण्डलोत्तमे। [2]विद्याबीजे समुद्भूतो विश्वमात्रे विनिर्मिते ॥२१॥
विश्वात्मा मूर्तिभेदस्य सत्यानन्दस्वरूपधृक्। विरजस्कैरमुक्तैस्तु मन्त्रैर्ब्रह्मप्रकाशकैः ॥ २२ ॥
न भूयस्संभवस्तस्य भवेऽस्मिन् भयसंकुले। आरम्भावधि[3] कामस्य नैष्ठिकस्यापवर्गिणः ॥ २३ ॥

## पौष्कर उवाच—

मूर्तयस्तु मया सम्यक् परिज्ञाताः पुराऽत्र वै। ज्ञातुमिच्छामि विद्याख्यं मन्त्राणां लक्षणं प्रभो॥
यैः पद्मकल्पना कार्या पद्मैर्निर्वर्तितैः प्रभो। ब्रह्मप्रकाशकानां तु मन्त्राणामथ लक्षणम् ॥२५॥
यैरुद्दिष्टं महायागे नवाब्जे पूजनं तथा ॥

## श्रीभगवानुवाच—

सर्वकामप्रदातव्य[?] इच्छावागनिभं नव। महागमहद्विभव क्षेत्रभूतास्पदेति च ॥ २६ ॥
[4]मध्यपद्मे पदानां च नवकं परिकीर्तितम्। तत्त्वगर्भ जगद्बीजं क्षारते क महात्मने[?]॥ २७ ॥
[5]विश्वात् स्वरूपं निखिलमव्यक्त [6]त्रिगुणेन वै। शब्दब्रह्मप्रसंवेद्यं [7]भगवाभारमहामय[?] ॥
प्रकृतेर्बहुमूर्तेऽथ प्रधानाल्पधने नमः। पादं वै ब्रह्मलोभाने तृतीये कमलेऽब्जज ॥ २९ ॥
[8]सङ्कल्पसिद्धिविषयानथ वस्तुप्रकाशक। अविनाश महाबुद्धे व्यूहादष्टगुणा[?] यत ॥ ३० ॥
मायामयेऽन्ते कमले चतुर्थे तु पदं स्मृतम्। गुह्य प्रत्यक्ष नीरूप सर्वाधार सुखास्पद ॥ ३१ ॥
प्रजापते जीवकोश लिङ्ग[9]पुर्यष्टके... ति। दिग्देशकालप्रकटान् [10]चिद्बुद्धेर्बुद्धिगोचर ॥३२॥
[11]धर्मोदये तु ...रिति [12]सर्वेच्छापरिपूरक। [13]अपरिमाणा विश्वरूपं [14]वा स्पष्टे सम्भुजेत्यमी॥
सदातनोऽप्यपूर्वश्च[?] [15]भद्रसर्वाभिगास्पता[?]। नानास्वरूप [16]शब्दादे बहुभेदा[?] ततोऽब्जज ॥
[17]प्रभवच्छिद्य[?] ब्रह्मेति सप्तमेति [18]कपा. कर्म.। व्यक्ताव्यक्त[?] ततो माये विश्वे [19]व्यक्तविकासके॥
[20]पुरो... च्छिन्नसन्तान[?] अष्टमे कमले पदात्। भूतभव्य भविष्याथ परिमाणविजृम्भिता[?]॥३६॥

१. क—अन्ते तु पातयेत् २. क-ख—विद्यादिके ३. क-ख—पुरात्रये ४ ग-घ—मध्यपद्मपदानां च ५ क—विश्वात्स्वरूप ६. ग-घ—त्रिगुणं तु वै ७ क—भगवाभावमहाप्रथम् ८. क—सङ्कल्पसिद्धविषयान् ९ ख-ग-घ—पुर्यष्टके दिवे १०. क-ख—चिद्बुद्धे प्रतिगोचरा.? ११. क—दर्मोदयेतु रिति १२ ग-घ—परिपूजक १३. ग-घ—परिमाणे १४. ग—पास्पष्टे. घ—वास्पष्टेबुजे त्यमी १५ ख—सर्वाभिगाम्पद ग-घ—भद्रसर्वाभिगस्मदा· १६ ग-घ—शब्दादे बहुभेदे १७ ग-घ—पभवच्छाय १८. ग-घ—कम. कर्म. १९. क-ग—व्यक्तिविकासकः २०. ग-घ—परो ...च्छिन्नसन्ताने

महाचक्रमहावर्ता सिद्धे सिद्धफलप्रदा। इति विद्यापदानां च स्वरूपेण प्रकाशितम् ॥ ३७ ॥
अथ ब्रह्मपदानां च लक्षणं चावधारय। सकृद्विभागता सद्ब्रह्म सुप्रतिष्ठित अनाहतः ॥ ३८ ॥
महाविभूपतानन्द[2] ध्रुव नित्योऽमि(दि)ताक्षर[2]। अज सम्पूर्णषाड्गुण्य अचिन्त्याद्भुत केवल ॥
सर्वशक्ते असङ्कीर्ण सुशान्त पुरुषोत्तम। शाश्वताचल सर्वेश निर्विकार निरञ्जन ॥ ४० ॥
[1]स्वभाव वासुदेवस्य [2]निस्तरङ्गे स्त्रिपौष्कर। उपादेयमनौपम्य [3]सुप्रकाशस्थिरामृत ॥ ४१ ॥
[4]अग्राह्यानन्त चिद्रूप हंमेति तदनन्तरम्। [5]अव्ययातर्क कूटस्थ निर्मलापार सद्बृहत् ॥ ४२ ॥
सर्वातिशायिनी यत्र इत्यब्जे पञ्चमेऽब्जज। पुण्डरीकाक्ष संबुद्ध परिपूर्णगुणोज्झित ॥ ४३ ॥
अकलङ्क असङ्कल्प [6]ज्ञेयापरिमित श्रिया। [7]सदानन्दापतीहीनि[2] बीजं हन्यपलायन[2] ॥ ४४ ॥
अनन्त संमितस्सर्व ज्ञानज्ञेय सनातन। विकासितवैश्वसैयेक्ष[2] परमानन्द भास्वर ॥ ४५ ॥
स्वच्छन्दगमनालोक नित्यतृप्त निरब्जज[2]। लोकनाथ अनिर्देश्य प्रशान्त परमेश्वर ॥ ४६ ॥
निष्कम्प निर्विकल्पे कं[2] महाधर्म [8]महामतम्। इति ब्रह्मपदानां च लक्षणं संप्रकाशितम् ॥
यैस्स्मृतैः पूजितैर्वा तैर्ब्रह्म संपद्यते पुमान् ॥

### पौष्कर उवाच –

नष्टसिद्धिप्रदाः पूर्वं कथिता मूर्तयस्तथा। मन्त्रराशिद्वयस्यास्य किमत्रार्थप्रयोजनम् ॥ ४८ ॥

### श्रीभगवानुवाच –

कर्षणादिप्रकृष्टस्य [9]विज्ञानेनान्वितस्य च। केवलाब्जाब्जसंभूतं तथा रूपफलात्मह[2] ॥ ४९ ॥
[10]तत्त्वैर्ज्ञानानुसिद्धिश्च फलभावनया विना। उत्थितो देहविन्यासो विदधादच्युतं पदम् ॥ ५० ॥
प्रवृत्तिश्च निवृत्तिश्च कर्मचैतद् द्विधाऽब्जज। जयन्ति भोगिकरता प्रवृत्तेन तु कर्मणा ॥ ५१ ॥
परितृप्तास्तुसम्भोगैः [11]निवृत्तेनाचरन्ति च। सर्वदा षड्गुणैश्वर्यं फलेन हि स सिध्यति ॥५२॥
तानि संशुद्धभावानां भावसंसिद्धभाविनाम्। विद्याब्रह्मसयाख्यैस्तु नित्यमेव तथाऽब्जज ॥ ५३ ॥
प्रवृत्तिफलदा मन्त्रा [12]यैर्विद्या तपचर्यते[2]। कर्मणा केवलेनैव फलमिच्छति योऽचिरात् ॥५४॥
शृणु तेन यथा कुर्यात् त्वाधाराधेयकल्पनं[2]। सर्वकामप्रदाद्यैस्तु पादैः कल्प्य कजावलीम् ॥५५॥

---

१. क-ख—पासुदेवस्य २. "निस्तरङ्ग" इति साधु ३. क-ख—सप्रकाश ४. ग-घ—अग्राह्यानन्द ५. 'अतर्क्य' इति साधु ६. क-ख—ज्ञेयापरिमिति ७. ग-घ—पतिहिनि ८. ग-घ—महात्मन ९. क-ख—विज्ञानेनोज्झितस्य च १०. क-ख—तत्त्वज्ञानानुसिद्धिश्च ११. क-ख—निवृत्तो नाशयन्ति च १२. ग-घ—विद्या तत्र चर्यते

कर्णिकादौ यथासिद्धिं [1]प्रवृत्तिदशगोचर[1]। पादानां नवकेनैव [2]मधिष्ठायां[2] तु मध्यमम् ॥
[3]ततस्त्विन्द्रपदं स्याच्च पद्मादीशपदावधि। मध्यपद्मक्रमेणैव नवकं नवकं न्यसेत् ॥ ५७ ॥
पादानां कर्णिकादौ तु व्यधिष्ठातृव्यपेक्षया। एवं विद्यामयं पद्मं व्यूहं निष्पाद्य सर्वदा ॥ ५८ ॥
आराधनार्थं मूर्तीनां भोगमोक्षफलप्रदे। सांप्रतं [4]भोगयागार्थं पादपूजाक्रमेण तु ॥ ५९ ॥
[5]सकृद्विभागपूर्वैस्तु पदैस्सद्ब्रह्मवाचकैः। प्रणवादिनमोन्तैस्तु अर्घ्यपुष्पादिनाऽर्च्यते ॥ ६० ॥
क्रमेण प्रभवेनैव तल्लक्षणमथोच्यते। मध्ये [6]मध्यगते पद्मे [7]प्राप्तपदं विनिवेश्य च ॥ ६१ ॥
प्रभातयप्रभान्याद्या [7]पादादाग्नेयदिग्दलम्। यत्क्रमं विधिना येन प्रागुक्तं [8]न तु तादृशम् ॥६२॥
अत्रापि नित्यसंसिद्धं प्राग्भागं च समाश्रयेत्। पद्मानां पद्मपत्राणां पादपूजाविधौ सदा ॥ ६३ ॥
ततोऽवतारं संपूज्य स्वेच्छया तत्र मूर्तयः। [9]एकमूर्तिर्द्विमूर्तिश्च त्रिमूर्तेरन्तमयावति[9] ॥ ६४ ॥
मध्ये पद्मे समारभ्य यावदीशानपङ्कजम्। विद्यातत्त्वप्रदानं तु पूजनं प्राहरेत् ततः ॥ ६५ ॥
स्वाहान्तं प्रणवाद्यानां मध्यपद्मादितः क्रमात्। कर्णिकादौ समारभ्य पूर्वस्यच्छदात्तु वै ॥६६॥
तत्प्रागपेक्षया यावत् प्रादक्षिण्येन मध्यगम्। अनेनैवाब्जसंभूत न्यासेन कमलाष्टकम् ॥ ६७ ॥
मध्यपद्मस्य यागाभ्यां बाह्यस्थं पूरणीय च। सर्वगा मध्यमा मूर्तिस्सर्वतोऽक्षिशिरोमुखम् ॥६८॥
भावयित्वाऽथ विन्यस्य यावता यत्र कुत्रचित्। आवाह्यान्यत्र विन्यस्य मूर्तयस्तस्य संमुखाः ॥
अथार्चावसरे प्राप्ते मूर्तेर्मूर्तेः क्रमेण तु। संमुखीकरणं कुर्यादात्मना सह पौष्कर ॥ ७० ॥
एवमुक्तं [10]सकामानां वैकल्यासं तु चार्चनम्। [11]कैवल्यं यः क्रियात् पूर्वमभ्यर्थयति साधकः॥
[12]पद्ममन्त्रैस्तु विद्याख्यैः प्राग्वत् पद्मजकल्पना। निष्पाद्याप्ययमुक्ता वै ततो मोक्षापि ततैः ॥
क्रमेण पूजनं कुर्याद्यजेन्मूर्तिगणं ततः। भूयो मध्यस्थपद्माच्च कुर्याद्ब्रह्मवदर्चनम् ॥ ७२ ॥
भ्रमणेनाभ्यचारव्येन तस्यापि शृणु लक्षणम्। आविद्याख्य [13]स्वदादद्यात् प्रागुक्तमखिलं च यत् ॥
व्यत्ययं विद्धि तत् सर्वं सविधानं तु ... ॥

**पौष्कर उवाच** —

वासुदेवादिमूर्तीनां नवानां कथितं पुरा। पूजार्थं नवपद्मं तु सबिम्बं मण्डलोत्तमम् ॥ ७५ ॥

१ **क-ख**—प्राक्प्रन्त्रिदशगोचरा २. **क-ख**—मनिष्पाया तु ३. **क-ख**—ततस्त्वीन्द्रपदम् ४ **ग-घ**—भोगयोगार्थम ५ **ग-घ**—सकृद्विभात ६. **क-ख**—मध्ये मध्ये गते ७. **क-ख**—प्राप्तदम् ८. **ग-घ**—न तु तामृतम ९. **ग-घ**—एव मूर्तिर्द्विमूर्ताश्च त्रिमूर्तेन्तवद्यावति १०. **क-ख**—एवमुक्त समानानाम ११. **ग-घ**—वैकल्यम १२. **क-घ**—पदमध्ये १३ अविद्याख्यपदा-दाद्यात्. इति स्यात्

इदानीं नयतस्तस्मान्मध्ये चाग्निं यथास्थितम् । एकद्वित्रिचतुष्पञ्चमूर्तयस्तु [1]तथेच्छया ॥ ७६ ॥
कथं नवानामब्जानां पूजनार्थं ममादिश ॥

### श्रीभगवानुवाच

विम्बपीठादिसंयुक्तं नवाब्जं मण्डलं हि यत् । पुरा प्रोक्तं तु वै तस्मिन् स्थाप्यास्ता[2] नवमूर्तयः ॥
साङ्गास्सपरिवाराश्च स्वमन्त्राश्च सकृत्सकृत् । विम्बं विधानपीठादिस्थानेष्वेवं विभिद्य तम् ॥७८॥
वृत्तं स्वागमेनाथ सर्वैर्मन्त्रैरधिष्ठितं तु वा । [3]नवाब्जं मण्डलं कृत्वा यथाशक्ति विस्तृतम् ॥७९॥
विद्यात्रयमयैर्मन्त्रैर्निर्मितं पूजितं तथा । साधारमेकमूर्त्यादौ सर्वांशा विद्धि तद्द्विज ॥ ८० ॥
सव्यासो सन्निधानं च नवमूर्तेर्विशेषत ॥

### पौष्कर उवाच

नवमूर्तेर्मया ज्ञातं पुरा चात्र निवेशनम् । एकमूर्तेस्समारभ्य अष्टमूर्त्यवसानकम् ॥ ८१ ॥
अथ मन्त्रं जगन्नाथ विन्यासं तु विधीयते ॥

### श्रीभगवानुवाच

षडङ्गमेकमूर्तिं च प्रत्येकं नवकं न्यसेत् । नवानां कर्णिकाना तु तदङ्गानि दलेषु च ॥ ८२ ॥
द्विमूर्ते प्रथमा मध्ये द्वितीयाप्यग्रतो वै क्रमात् । त्रिमूर्तेर्दिक्चतुष्केऽन्य द्वितीया विनिवेश्य च ॥
विदिक्चतुष्केषु तृतीयायां विसर्जयेत्[4] । प्राक्प्रत्यगाभ्यां प्रथमा या चतुर्मूर्तेर्विन्यसेत् ॥८४॥
[5]तृतीयायाम्यसौम्याभ्यां चतुर्थी कोणकेषु च । पञ्चमूर्ते [6]द्वितीयाथ प्रागाग्नेयाम्बुजद्वये ॥८५॥
तृतीया याम्यया त्वब्जे चतुर्थी वरुणानिले । उदगीशगताभ्यां तु पद्माभ्यां पञ्च विन्यसेत् ॥
[7]षण्मूर्तेरीशदिक्पद्मे द्वितीया विनिवेश्य च । तृतीयां पूर्वसौम्याभ्यां वह्निवारुणगेतु ना ॥ ८७ ॥
पञ्चमं पश्चिमे याम्ये षष्ठी निर्ऋतिनिर्गते । ईशपूर्वस्थपद्मानां सप्तमूर्तेस्तु या परा ॥ ८८ ॥
तृतीयाग्निपद्मस्थे च चतुर्थी दक्षिणे कजे । रक्षोवारुणपद्माभ्यां पञ्चमा कमलोद्भव ॥ ८९ ॥
वायव्येऽथ उदक्पद्मे शेषमूर्तीश्च विन्यसेत् । ईशप्रागग्निपद्मेषु यात्वाप्यानिलकेषु च ॥ ९० ॥
द्वयेऽनिले सौम्ययाम्ये अष्टमूर्तेस्सदाऽब्जज । अङ्गीकृत्य पदन्यासविहीनं द्विविधं तु वै ॥९१॥

१ **ग-घ**—यथेच्छया २ **ग-घ**—नवाब्जमण्डलम् ३ **क-ख**—द्विकचतुर्थान्प्राक्
४ अत्र **क-ख**—कोशयोर्ग्रन्थो गलित अर्धचतुष्टयात्मक प्रत्युत गलितस्य तृतीयार्धस्य द्वितीय पाद प्रमादादत्र संयोजित —यथा "त्रिमूर्तेर्दिक चतुर्थात् प्राक् आग्नेयमवुजद्वय" इति ५ **घ**—तृतीयायाम्यया—इत्याद्यर्धस्य गलितम् ६ **ग-घ** पञ्चमूर्तेर्द्वितीयायाम् ७. **क-ख**—द्विशिदिक्पद्मे

महाहैम्सुशुभैर्हारैरङ्गुलीयकनूपुरैः। संपूज्य परया भक्त्या नवाब्जोदरगं विभुम् ॥ ११६ ॥
व्यजनैश्चामरैश्छत्रैर्दर्पणैश्शयनैर्ध्वजैः। घण्टाभिः किङ्किणीयुक्तैस्थि (स्सि) तैश्छत्रैर्वितानकैः॥११७॥
नानावर्णपताकाभिरर्धचन्द्रैस्सुबुद्बुदैः। गोभिरश्वैर्गजैर्यानैर्बहुभिर्बहुभूषणैः ॥ ११८ ॥
[1]प्रतिग्रहैः पादपीठैः पादुकाभिरुपानहैः। घृतादिकैर्महार्दैरच्छिन्नैरर्चयेद्धरिम् ॥ ११९ ॥
कुसुमप्रग्रहैश्शुभ्रैर्मधुपर्केण वै तत। [2]षड्तुप्रभवैर्दिव्यैर्नैवेद्यै पावनैः फलैः ॥ १२० ॥
पवित्रैर्शीतलैस्स्वादुयुग्मग[न्धै]श्च [3]पानकैः। गुळखण्डाचितैर्भक्ष्यैर्बहुभिर्घृतपायसैः ॥ १२१ ॥
सरसाभिस्सालभिः पयसा सुशृतेन च। श्रद्धापूतेन मनसा [4]यष्टव्यमजमव्ययम ॥ १२२ ॥
हेमराजतताम्रोत्थपात्राणि विततानि च। हिरण्यतिलसच्छालिरसा बीजान्वितानि च ॥ १२३ ॥
सफलानि सुपूर्णानि मन्त्रार्थे विनिवेश्य च। लवङ्गतक्कोलैलात्वक्कर्पूरपरिभावितम ॥ १२४ ॥
जातिपूगफलोपेतं [5]सुसुगन्धान्वितं बहु। प्रदद्यात् प्रणतश्चान्ते [6]ताम्बूलं जगतः पते ॥१२५॥
नानावाद्यविशेषैश्च नृत्तगीतस्तवादिकैः। परितोषं नयेत् सम्यक् पुण्डरीकाक्षमव्ययम ॥१२६॥
यद्यदिष्टतमं किञ्चिन्मनसः प्रीतिदं महत्। [7]वाप्य[7] मविरुद्धं च तत्तत् सर्वं प्रकल्पयेत् ॥
कुम्भमण्डलमध्यस्थमन्त्रमूर्तं जनार्दनं। अथ त्वर्पीतये दानैः [8]हेमानानगरादिकैः[8] ॥ १२८ ॥
तन्मयाजर्चयेत् तद्वद्द्विशुद्धेनान्तरात्मना। नवाब्जे मण्डले ह्यस्मिन्ब्राह्मे [9]भुवनादिकम ॥ १२९ ॥
पिबन्तिष्ठत्यनाहूतं[?] मन्त्राब्ध्यावरणाद्बहिः। मन्त्राभिमन्त्रितजलैस्सा[?] दकाक्षय ॥१३०॥
आत्मनश्चापराधाय[?] या यज्ञानां[?] तु सिद्धये। अस्यादूरतरे यावद्धलयो मन्त्रसंस्कृता ॥१३१॥
कीर्तिनाथस्य यागस्य [10]परदोपरि[10] तद्द्विज। यान्तिसिद्धास्तथा मन्त्रे मन्त्रेशैस्विलैर्युता ॥१३२॥
भुवना भुवनेशाश्च नत्वा स्तुत्वेश्वरैस्सह। देवता वसवस्साध्या अग्नयो वायवस्तथा ॥ १३३ ॥
[11]कुल्याद्यज्ञादयः कालो भूतभव्यभवात्मकः। [12]नक्षत्राश्चाखिलास्तारा राशयश्चाखिला ग्रहाः ॥
आदित्या मारुता रुद्रा [13]मर्त्यास्तु च तथाऽश्विनौ। विश्वे देवास्समर्पय पितरो मुनयस्तथा ॥
गन्धर्वाप्सरसाङ्गस्थाः किन्नराश्चारणोरगा। देवा विद्याश्च मनवः [14]स्वाहा सिद्धा स्वधा ध्रुवा ॥
धर्मस्सरस्वती सोमः खः प्रजापतयो युगाः। [15]ऋक्सामसूक्ताश्छन्दांसि लोकाश्चैव दिशो दश ॥

१. पतद्ग्रहैः, इति स्यात् २. ग–घ— सर्वसाग्रभवैः ३. क–ख–ग—वानगं –घ—पानहं ४. ग–घ—यष्टव्यजय ५. ग–घ—सुसुगन्धच्छदम् ६. ग–घ—ताम्रलीम् ७. ग–घ—वापिमपिविरुद्धत च, ख–वाप्यमविरुद्ध ८. ग–घ—हेमकानगरा ९ ग–घ—भुवनान्तिकम १० ग–घ—परदोषपरिद्विज ११. ग–घ—तुल्याद्यज्ञातय १२ ग–घ– नक्षात्राद्यानवस्तारा १३ ग–घ—मार्त्यास्तु तथा १४. क–ख—सा सिद्धस्वयध्रुवा. ग–घ—स्वाहासिद्धस्वयध्रुवा १५. ग–घ—मत्साम

[1]द्वीपा नद्य. तदस्थित्वा[1] ससमुद्रा च मेदिनी। पर्वतास्तरवो वल्यो रसाश्चौषधयोऽखिला ॥
क्षेत्राभ्यायतनास्सर्वे योगपीठस्य नेकशः। गावश्चामृतदोहास्तु जङ्गमाजङ्गमं च यत्॥ १३९ ॥
क्रमेण तस्मादेकैकं स्वनाम्ना तर्पयेद्गणम्। नतिप्रणवगर्भेण भोगकैवल्यमात्मयः ॥ १४० ॥

इति श्रीपञ्चरात्रे पौष्करसंहितायां नवनाभार्चनो नाम

एकोनविंशोऽध्यायः ॥

(समुदित श्लोकसंख्या १४३)



## अथ विंशोऽध्यायः

**श्रीभगवानुवाच**

पूजितेषु च मन्त्रेषु तर्पितेषु विशेषत। [2]विधाम्नि विनियुक्तेषु गणनाथं द्विजोत्तम ॥ १ ॥
विष्वक्सेनाभिधानं यद्विविदघ्नेन कर्मणा। तदर्चने च सम्मन्ते तर्पणे सविसर्जने ॥ २ ॥
प्राक्सेवनं तदा कुर्यात् तेषां वृत्तसमन्वितम्। तथाऽभिमतसिद्ध्यर्थमर्घ्यपात्रं तु पौष्कर ॥ ३ ॥

**पौष्कर उवाच**

किमर्थमाह भगवन् विघ्नच्छेदकरं प्रभुम्। समस्तविघ्ननाथानां परमं कारणं च यत् ॥ ४ ॥
विष्वक्सेनमनु यष्ठ्यां [3]भोगभूमौ गतेऽच्युते। कैर्द्रव्यैर्विधिना केन किं करोत्यभिपूजितः ॥

**श्रीभगवानुवाच**

भवितां बहवो विघ्नास्सद्धर्मविनिवारकाः। न यागयज्ञधर्माद्यैर्मन्ये संसारिणां शुभम् ॥ ६ ॥
तत्प्रवृत्तौ तु ये विघ्नाः प्रोत्साहविनिवारकाः। व्यपयान्ति च ते सर्वे चक्रज्वालाभयार्दिता ॥
मध्ये[4]नावसरे तेषां भूते वाप्यचये[1] सति। [5]तत्सन्निधानसामर्थ्यात् क्व दोषः क्व विनाशकः ॥८॥

१. क-ख-ग घ-धुपनस्थोद्यातदस्थित्वा सप्यमुद्राच २. ग-घ—स्वधाम्नि ३. ग-घ-भोगभूमिगते ४. ग-घ— मध्ये नावसरेत्तेषाम् ५. क-ख-ग-घ—सत्सन्निधान

देवस्वं च विरुद्धं यत सिद्धानामपि पापकृत । स्वदत्तं परदत्तं वा यत्नात् तत परिवर्जयेत् ॥८८॥
[1]दोषदं चापि मायस्मा[1] दक्षय्यनरकप्रदम् । प्राक् प्रवृत्तमतस्त्वस्मिन् नियन्धा[2] देवतागृहे ॥८९॥
प्रयत्नात् पोषणीय च याति[2] नूनमथा यथा[2] । प्रवृत्तकार्याकरणाद्वैष्णवायतनेषु च ॥ ९० ॥
प्राप्नोति सुमहद्दोषं राजा राजपदेषु च । [3]यथा तद्विपुला कीर्तिस्तथा चेहाक्षयं [3]सुखम ॥९१॥
देहान्ते शुभमाप्नोति प्राक्प्रवृत्तस्य पालनात् ॥

## पौष्कर उवाच—

दानं संप्रागतं प्रोक्तं [4]देवालस्य पुग त्वया । तस्याधुना जगन्नाथ निपथ कथ्यते कथम ॥९२॥

## श्रीभगवानुवाच –

पाकगाथिनं च यागार्थं देवताना प्रयत्नत । तत्सन्तर्पणपर्यन्त यावद्देवात्समुच्यते ॥ ९३ ॥
अन्यथा भक्षणं तस्य यदि मोहात कृतं द्विज । प्रायश्चित्तशतैश्चापि शुद्धिर्भवति मानव ॥९४॥
मन्त्रसन्तर्पणादन्ते याजिनां यजतां वर । गर्वबुद्धिविमुक्तानां भक्षणं सर्वशुद्धिकृत ॥ ९५ ॥
पावनं शुद्धिदं पुण्य [5]भूतिभूत्यभिवृद्धिदम । भक्षणं यद्यपि प्राक्त नैवेद्यस्य च सर्वदा ॥ ९६ ॥
गुर्वादीनां तथाऽन्येषा भक्तानां तत्त्वतोऽब्जज । तत्रापि साधकाना च निषिद्ध वन्दन विना ॥
अथ वामादनेऽन्यत्र नित्यनैमित्तिकार्चने ॥

## पौष्कर उवाच

हेतुना केन भगवन् निषिद्ध साधकस्य च । मन्त्रपन तु नेत्रश्मत्र म मगया मतान ॥ ९८ ॥

## श्रीभगवानुवाच

नाप्राथिनं गृहीतव्यं पुष्पमात्र कदाचन । स वै [7] मन्त्रेण [6]विमता प्राप्ते केनिद्विशा[illegible] [7] ॥
नैवेद्याद्यखिलाना च भोगानां भाविताऽऽत्मनाम् । गुरुणा [8]प्रार्थिना कार्या मन्त्रेशस्य पुनःपुन ॥
स सर्वतस्वतन्त्रत्वात् तत्सिद्धत्वान्न दोषभाक् । लब्धान्तरे यथा मन्त्री नृपेन्द्रात सर्वसम्पदः ॥
स न रुष्यति वै तस्य एवं मन्त्रेश्वरो गुरो । फलपर्यवसान च सेवार्थं यत्समुद्यत ॥ १०२ ॥
न तेन प्रार्थना कार्या स्वल्पेऽप्यर्थे नृपस्य च । सम्प्रयच्छेत प्रसन्नश्चेन स्वयं तुष्टमना[7] यदि ॥

1 क-ख—दोषा. चापि मायस्मात् ग-घ—कामस्मात 2. ग-घ—यद्यन. विपुला 3 घ—शुभम् 4. ग-घ—देवतास्य 5. ग-घ—भूमिभृत्याभि 6 ग-घ—विमर्वोदयान् 7. क-ख—प्रार्थनां कुर्यात् 8. ग-घ—मन्यते

# अथ एकविंशोऽध्यायः

**पौष्कर उवाच**—

देव त्वया [1]शक्तिचयः पुरा तु समुदीरितः । तस्याहं श्रोतुमिच्छामि सविन्यासं च लक्षणम् ॥

**श्रीभगवानुवाच** —

सर्वसंपत्प्रदा लक्ष्मीः पुष्टिः परमसिद्धिदा । कान्तिः [2]प्रभा मतिश्शक्तिः क्रियेच्छा महिमोन्नतिः ॥
स्वधा[3] विद्याणिमा माया मूर्तिर्ह्री[4]श्श्रीः कला द्युतिः । निष्ठा ऊर्ज्जा रतिश्चेष्टा शोभा शुद्धिर्विभूत्यत ॥
वृत्तिर्व्याप्तिर्गतिस्तुष्टिर्भोगा वागीश्वरी रतिः । [5]सिद्धिर्नीतिः स्तुतिः क्रीडा संपत् कीर्तिश्शिखा मतिः ॥
गायत्री चापि मर्यादा [6]सृष्टिश्चेत्यब्जसंभव । पूर्णमात्मगुणत्वेन मन्त्रदेहं [7]समेद्धिया ॥ ५ ॥
आभिरापूरितं कृत्स्नममूर्ताभिस्सदैव हि । एतत् सामान्य[8]संयोगं शक्तिश्चक्रस्य पौष्कर ॥ ६ ॥
सह मन्त्रगणेनैव विशेषमधुनोच्यते । आदि[9]मूर्तिक्रम तुष्टे [?] दक्षिणोत्तरविन्यसेत् ॥ ७ ॥
लक्ष्मी[10]पुष्टिद्वयाख्यं [11]यद्यत्नेनावकराश्रयम् । अष्टदिक्ष्वष्टकं न्यस्येत् केसराग्रात् श्रुतक्रमात् ॥
दलमध्ये ह्युदारानां बहिर्वा सिद्ध्यपेक्षया । आसां [12]मुख्यांशमध्ये तु [13] परं पदम् ॥ ९ ॥
यथेष्टं लभते योगमङ्गाङ्गाद्यदि स्थितम् । शेषयो[14]र्मावृताद्र्ध्वं तद्वपद्मासनात्तु वै ॥ १० ॥
पर्येया परियोगेन वीक्षमाणा परं प्रभुम् । पृथग्यागावतीर्णानां मन्त्राणामेवमेव हि ॥ ११ ॥
शतयष्टकं च न्यस्तव्यं लक्ष्मीपुष्टिद्वयं विना । तच्छिष्टदेवता[15]व्यूहं सप्राप्तिपरिवृत्तकम् ॥ १२ ॥
अष्टपत्रं विनाऽन्यस्मिन् [16]पद्मे केसरसन्ततेः । मूलदेशे यथा याति कर्णिकोपममष्टकम् ॥ १३ ॥
एवं चाखिलयागानां न्यासमध्यादेवतासु च । सुतवैकं मिश्रचक्रं तु शारदं कमलोद्भव ॥ १४ ॥
तत्राष्टकं तु कह्लारे शेषाचक्रे बहिःस्थवत् । ध्यानमन्त्रं क्रमाद्ब्रह्मन् कथयामि यथास्थितम् ॥ १५ ॥
[17]रक्तपङ्कजवर्णाभा लक्ष्मीर्नीलाम्बुजेक्षणा । दुग्धौघधवला पुष्टिरानन्दकलितानना ॥ १६ ॥

---

१. **क–ख**—शक्तिता **ग**–शक्तितया **घ**–शक्तितयोपरागक्रम २ **ग–घ**—प्रभाभिति-श्शक्ति ३. **क–ख**—विद्यार्णामया ४. **क–ख**—र्मनिर्ही. श्रीस्तुलाद्युता ५. **क–ख**—सिद्धि .. क्रीडा ६ **ग–घ**—सृष्टिश्चेत्यब्ज ७ **क–ख**—स्मरेत्क्रिया ८. **क–ख**—सयोग . पौष्कर ९. **ग–घ**—मूर्तिक्रमसृष्ट १०. **क–ख**—दाच्छयाख्यम ११. **क–ख**—यत्नेनावत्तरा **घ**–यत्नेनावत् कराश्रियम् १२. **क–ख**—आसा मुख्यंशमध्ये १३. **ग–घ**—विनाम स्यात् १४. **क–ख**—र्व्योमा-हृताद्र्ध्वं शुद्धपद्मा १५. **ग–घ**—व्यूह प्राग्वदम् १६. **क–ख**—पत्रे केसर १७. **क–ख**—रक्त-पद्मनिभा लक्ष्मी. लक्ष्मीर्नीला

[1]कान्त्या युत्नतिपर्यन्तमष्टकं स्फटिकामलम् । यच्चतुस्त्रिंशकं विप्र शक्तीनां शुभलक्षणम् ॥१७॥
अन्तरान्तरयोगेन ध्यायेत् कनकसन्निभम् । [2]पद्मरागोद्भूतं किञ्चिद्गौरम्यगुणान्वितम् ॥ १८ ॥
प्रसन्ननयनास्सर्वाः प्रसन्नवदनाम्बुजाः । रूपलावण्यसौभाग्यैरन्योन्येन समन्विताः ॥ १९ ॥
[3]सर्वा माल्याम्बरधरास्सर्वालङ्कारमण्डिताः । चन्द्ररश्मिप्रतीकाशवालव्यजनचिह्निताः ॥ २० ॥
[4]वामहस्तेन चान्येन ध्यायेदभिमतार्थदाः । [5]मन्त्रपत् क्रमचारिण्यस्तद्वत् सर्वफलप्रदाः ॥ २१ ॥
समाराधनकाले तु भक्तानामनुकम्पया । वैश्वरूप्यं समाश्रित्य [6]दिक्षु द्रुत्पातयन्ति च ॥ २२ ॥
एवं परिवारमूर्तयो [7]ऽहमन्त्रार्चनाऽब्जज । विज्ञापनार्थनं ध्यानं देवीपीठमन्त्रिणम् ॥ २३ ॥

इति श्रीपाञ्चरात्रे पौष्करसंहितायां परिवारलक्षणो नाम
एकविंशोऽध्यायः ॥



## अथ द्वाविंशोऽध्यायः

**पौष्कर उवाच** –

सम्यग्वेदितुमिच्छामि त्वत्तः कमलसम्भव । विनाथ साधकेन्द्राणां [8]तदध्याराहितामनम् ॥ १ ॥
सरहस्यमसङ्कीर्णं [9]साधिनैव[9] यथास्थितम् ॥

**श्रीभगवानुवाच** –

आधेयमब्जसंभूत [10]मेदविकारे स्वरूपिणि । [11]मध्यनायन्तयोरूर्ध्वं सूत्रे [12]मणिगणा यथा ॥२॥
प्राणाधारात्मना चैव विश्वाकारतया ततः । नानापन्त्रात्मना ह्यर्थे निस्तरङ्गो हि तत्त्वतः ॥३॥
अभ्यन्तवापनानां च कर्मिणां कर्मशान्तये । तदिच्छाविष्कृतानां च भोगकैवल्यसिद्धये ॥ ४ ॥

---

१ कान्तादयुर्ज्जाति २ **ग-घ**—पद्मरागोर्धनम ३. **ग-घ**—सर्वमाल्या ४ **ग-घ**—वामहस्ते च सर्वांगा ध्यायेदभिमतान्वितम् ५ **क-ख**—मन्त्रवत्क्रमचारिण्य ६. **क-ख**—दिक्षु द्रवन्यन्ति ७. **क-ख**—पद्मनत्राब्जराब्जज ८ **ग-घ**—यदध्याराहितामनम ९. 'साधितम्' इति साधु १० **ग-घ**—मे विकारोर्ध्वरूपिणि ११ **क-ख**—मध्यमायन्तयोरूर्ध्वम १२ **ग-घ**—मणिगणो यथा

अनाद्यविद्याविद्धानामियत् तेषां हि वस्तुनि। नाथोर्ध्वे न त्वदृष्टीनां तत्त्वतो वाऽथ पौष्कर ॥
[1]न निर्यग्ब्रह्मपूर्वं च न हेयादिविकल्पना। या विशेषविकल्पैस्तु प्रत्यस्तमितलक्षणा ॥ ६ ॥
शक्तिर्भगवतो विष्णोस्साधाराख्याऽभिधीयते। प्राग्वदासनसामर्थ्यं बीजमादाय चेच्छया ॥ ७ ॥
अव्यक्तव्यक्तरूपा च यथाऽऽदित्यकदम्बकम्। भाविप्रसरधर्मत्वाद्विश्वबीजचयस्य च ॥ ८ ॥
[2]साम्प्रतं संभृताङ्गस्य कूर्मसंज्ञाऽभिधीयते। यो विश्वं निर्दहत्यन्ते कालवैश्वानरात्मना ॥ ९ ॥
दैवतं यस्य भगवान् कूर्मात्मा लोकपूजितः। अजहद्भगवच्छक्तिस्सामर्थ्यं पुनरेव तत् ॥ १० ॥
अनन्तं सविलयानां यद्विश्वाङ्कुरमव्ययम्। नयन्पूर्वं यथा कूर्मो ग्रीवां स्वात्मनि संहृतम् ॥ ११ ॥
शेषाख्यं [3]फणिदैवत्यं तदनन्तं हि गीयते। आश्रयं बीजभूतानां चतुर्णां च महामते ॥ १२ ॥
तद्ग्रन्थविटपस्तस्माद्व्यक्तिमभ्येति पूर्ववत्। भूरात्मा भगवान् यस्मिन्नभिमानाख्यदेवता ॥ १३ ॥
फलं रसात्मकं तस्माद्व्यज्यत्यमृतलक्षणम्। यस्याभिमानिकं रूपं क्षीरार्णवसनश्वरम् ॥ १४ ॥
तस्मादनन्तरत्नोत्थं कान्ति कमलमब्जज। व्यक्तं यस्य च वै शक्तिर्नित्या दहनलक्षणा ॥१५॥
तदनन्तदलं विद्धि दिव्यं विकसितं सितम्। परपूर्वेण भेदेन [4]चैकद्वित्रिगुणात्मना ॥ १६ ॥
स्थित्वा [5]वृद्धिर्विकारैस्तु सह चाष्टाभिरब्जज। [6]यत्राथ देवतात्वेन वाग्विकारा मृगादयः ॥१७॥
तथा कालविकारा ये चत्वारः कृतपूर्वकाः। तत्र रूपं हि सर्वेषां सत्तामात्रपरं स्मृतम् ॥ १८ ॥
[7]व्यक्तिकारणध्यानाभि[?] स्साङ्गाभिरपरं तु तत्। तृतीयमभिमानाख्यं देवनादेहलक्षणम् ॥१९॥
तस्माद्वै वायुदैवत्यं स्पर्शतन्मात्रमेव च। जाता यस्य स्फुटा व्यक्तिर्नानाचक्राङ्गलक्षणम् ॥ २० ॥
तस्मादाकाशदैवत्यं शब्दमुत्पन्नमब्जज। सर्वाङ्गसंहृता चक्र[8]व्यक्तिर्यस्यामलं वपुः ॥ २१ ॥
गीयते व्योमवृत्तं तत् प्रधानकमलालयम्। यस्यान्तस्थानि भूतानि यस्मिन् सर्वं प्रतिष्ठितम् ॥२२॥
तस्मादुन्मेषपूर्वं हि महत्प्रलयपश्चिमम्। प्रवर्तते कालतानं भेदकृत् सर्ववस्तुषु ॥ २३ ॥
वाङ्मात्रेणैव भिन्नस्य ह्यभिन्नस्यैव तत्त्वतः। ज्ञानादिगुणवृन्दस्य ब्रह्मणश्चतुरात्मनः ॥ २४ ॥
नित्योदितत्वान्नित्यत्वाद्व्यापकत्वात् परं पदम्। पूर्णत्वात् षड्गुणत्वाच्च न कालो लब्धगोचरः ॥२५॥
शब्दादादित्यदैवत्यमहङ्कारं महामते। [9]मनश्चादित्यदैवत्यमहङ्कारमभूत् ततः ॥ २६ ॥
बुद्धिप्रकाशदैवत्या व्यक्तानन्दात्मनो विभोः। दलादिकर्णिकान्ता या सूर्यपूर्वादिकल्पना ॥ २७ ॥
प्रधानकमलस्यैषा मूर्तिर्गुणमयी स्मृता। बुद्ध्यादीनां च तत्त्वानां कारणं यदनश्वरम् ॥ २८ ॥
अव्यक्ताख्यं महाबुद्धे ह्यभिन्नगुणमूर्तिभृत्। स्वगुणानधरीकृत्य स्वप्रतिष्ठं प्रवर्तते ॥ २९ ॥

---

१. **ग**—नतिर्यक् वृष्टपूर्वं च २. **क–ख**—साम्पत प्रहृताङ्गस्य ३ पणिदैवत्यम ४. **ग–घ**—वैकद्वित्रि ५. **ग–घ**—स्थित्वावृद्धिर्विकारैस्तै. ६. **ग–घ**—यत्राहिदेवतात्वेन वाग्विकारान्मृगादयः. ७. **क**—व्यक्तिकरण नश्रि. **ख**—व्यक्तिकरणथानाभि. ८. **क–ख**—चक्रवृत्तिर्यस्य ९. अनन्त

अध्यात्मलक्षणा वृत्तिस्सर्वास्संहृत्य वै हृदि। उत्पद्यन्ते हि चैतस्माद्भावास्सर्वे द्विजोत्तम ॥३०॥
विपद्यन्तेऽत्र वै भूतास्तस्मात् पद्मं परं त्विदम्। चिदादित्यकलाजालं ग्राह्यग्राहकलक्षणम् ॥३१॥
संक्रान्तं यत्र स्वं धाम स्वसामर्थ्यं च[1] चेत्यपि। विमलाख्या विमलता [2]ज्ञानशक्तिर्ज्ञताऽब्जज ॥
प्रभवाख्या प्रभवता सत्यसंज्ञा च सत्यता। नित्याख्या नित्यता चैव प्रकाशाख्या प्रकाशता ॥
अनन्तता ह्यनन्ताख्या कला कमलसंभव। सहानुग्रहशतया वै ज्ञेयाऽनुग्रहता परा ॥ ३४ ॥
द्विचतुष्कं कलानां यत् स्वप्रतिष्ठं हि वर्तते। [3]संवर्तते परं चैव पुनरेव निवर्तते ॥ ३५ ॥
परापरविभागेन [4]कलास्त्वेतार्चितात्मनः[4]। प्रोक्ताः कमलसंभूत यागामानन्त्यमुत्तमम् ॥ ३६ ॥
स्वशक्त्याधिष्ठितं कृत्वा स्वस्वभावस्वभावया। ग्राह्यग्राहकरूपाय[?] एवमव्यक्तपुष्करम् ॥ ३७ ॥
समास्ते केवलं शुद्धमीषत्कालल्वं द्विज। सामान्येनैव यो भूत्वा सांप्रतं शक्तयः कलाः ॥३८॥
[5]असितालक्षणं धर्मं स्विकं सम्यङ्गिरस्य च। प्रवर्तते तन्निरासादानन्दमतुलं द्विज ॥ ३९ ॥
स्वप्रकाशमनौपम्यं तन्निच्छेदमनन्तमव्ययम्। [6]परिच्छेद्या दिगाद्यैस्तु प्रकाशाकाशवर्तिनी ॥ ४० ॥
कृत्वाऽऽश्रित्य कलामूर्तिं समनन्तरमब्जज। विहाय मध्यदेशं च प्रकाशगगनात् ततः ॥ ४१ ॥
धृतिशक्त्यासने स्वेऽथ उपविश्य यथापुरम्। विद्यादेहेन सूक्ष्मेण भूतदेहानुकारिणा ॥ ४२ ॥
अथानन्दकदम्बं तद्यत् स्वरूपं पृथक्कृतम्। स्वेच्छाग्रहणेन व्यवहारं गतेन च ॥ ४३ ॥
स्वकेनालम्बनेनैव देवतालक्षणेन च। [7]ज्ञानानात्[7] सुस्थितान् पश्येदुदितान् [8]सुहृदादिषु ॥
लाञ्छनाभरणादीनि यथा न्यस्यानि विग्रहे। [9]स्वस्थानेष्वथ वै तस्मादवदाता हृदादयः ॥४५॥
यथाशास्त्रक्रमेणैव यजेत विधिना ततः। एवमामनदाने तु परस्मात्तत्त्वसन्ततिम् ॥ ४६ ॥
उदितां प्रलयं कुर्यात् करणे तदधिष्ठिते। निवृत्ते पुरुषार्थे तु चान्तर्वा बहिरब्जज ॥ ४७ ॥
क्रमान्मन्त्रगणं स्मृत्वा यातं मन्त्रेश्वरे लयम्। मन्त्रशक्तिं स्वसङ्कल्पशक्त्या वाऽथ शमं नयेत् ॥
सह सङ्कल्पशक्त्या वै विद्यामूर्तिं स्वकां ततः। स्वकलासु लयीकुर्यात् कलाजालं तथाऽऽत्मनि ॥
प्राग्वदानन्दसन्दोहपरिपुष्टस्तु जायते। सृष्टिक्रमेण संहृत्य त्वाधारं यत् पुरोदितम् ॥ ५० ॥
ज्ञानिनां विगलन्त्येषां स्वभावात् तत्त्ववेदिनाम्। निष्कलानां महाबुद्धे निष्पन्नानां सुकर्मणि ॥
विकासमेति चान्येषां नित्याकाररतात्मनाम्। मन्त्रक्रियारतानां च नानात्वेन समात्मनाम् ॥५२॥
धृतमच्युतशक्त्या वै ह्यपरि[10]च्युतसत्तया। सद्विकल्पस्वरूपं च विश्वासनमिदं द्विज ॥ ५३ ॥

१. ग-घ—चैवहि २. क-ख—ज्ञानशक्त्यब्जता ३. ग-घ—सर्वतनेपरम् ४. क-ख—कल्यास्त्वेतार्चिता ५. क-ख—अस्मिन विलक्षमन्धर्मात्मकम् ६. ग-घ—परिच्छेद्यदिगाद्यैः ७. (घ) ज्ञानानान् ८. ग-घ—स्वहृदादिषु ९. ख—स्वस्थानेष्वधिवै १०. क-ख—च्युतशक्त्या

विधृतं विभुना व्याप्तं स्वसामर्थ्येन यद्यपि। तत्रापि तच्छरीराणां जीवानां तन्निवासिनाम्॥
स्वशक्त्याऽनुगृहीतानां तमाक्रम्य महामते। नानामन्त्रात्मना त्वास्ते तस्मिन् नानाविधात्मनि॥
संपूर्यमवि(पि)तानां ? वै व्रजत्यर्चार्थसिद्धये। कर्मणा स्वल्पबुद्धीनां [1]स्वरूपं न जहाति वै॥
व्रह[2]यज्ञोत्पलाद्यस्तु [3]दनावृन्दन्तु पौष्कर। प्रभवज्ञोपलाद्यद्वि .... .... .... ॥५७॥
अनुग्रहपरो मन्त्रस्त्वेवमब्जज चाच्युत?। निजयत्स्वमहत्सत्तां? ज्ञानादिगुणलक्षणाम्॥ ५८॥
निश्रेयसपदप्राप्तिपर्यन्तं कालवर्तिनाम्। विनियोगावसाने तु तेऽपि चायान्ति वै सह॥ ५९॥
विलयं वासुवे.... तेषाम् क्रीडार्थमेव च। समारोप्य स्वविज्ञानमन्येषां भवशान्तये॥ ६०॥
एवं परा मन्त्रिविभो? स तु सर्वेश्वरस्य च। स्थिता कमलसंभूत भूतयोनिविमुक्तये॥ ६१॥

**पौष्कर उवाच—**

निष्क्रियस्य विभोर्नाथ त्वच्युत[4]स्याव्ययात्मनः। कथं मन्त्रात्मभावेन विविक्तमुपपद्यते॥ ६२॥

**श्रीभगवानुवाच —**

तृणानां हि यथाऽऽदाने [5]नारीश्वासं? प्रवर्तते। स्वशक्तिः पुष्यरागस्य [6]मणेर्विकसनेऽपि च॥
तद्वद्भगवतो विष्णोः परस्य परमात्मनः। प्रवर्तते शक्तिचयो यस्य मन्त्रस्य गं वपुः॥ ६४॥
कर्मात्मकत्वाद्यादाय पुनरेव निवर्तते। साऽच्युनाख्या महाशक्तिश्शान्तसंविन्मया पुरा॥ ६५॥
एवं कर्मात्मतत्त्वस्य विद्यासम्पालितस्य च। स्थितिस्संप्रतिबुद्धस्य [7]इन्द्रियार्थासु शक्तिषु॥६६॥
यथा ह्यनिल[8]पूर्णानां द्रुतौ स्थित्वा सुशिक्षितः। प्रतरत्यतिसंक्षिस्था? नष्टमव्याकुलेन्द्रियः॥
सत्त्वशिक्षितबुद्धेर्वै व्यक्षुब्धे हसि? पौष्कर। वर्तते त्वधरीकृत्य व्यूर्ध्वे त्वाकुलचेतसः॥ ६८॥
[9]एवं संप्रतिबुद्धस्तु? शक्तयश्चेन्द्रि[10]यान्तराः। भावमन्त्रक्रियाणां च समर्था न्यक्करोति च॥
शुद्धसंविन्मयश्चास्ते निस्तरङ्गसमुद्रवत्। आमूढत्वाद्विजानन्दपरिस्पन्दं स्वकं पुनः॥ ७०॥
शक्तिभिस्तु समारोप्य वेद्यवेदकृतां भजेत्। इत्येवमुक्तसाधारस्वरूपं हि धरास्थितिः॥ ७१॥
[11]जायते तत्परिज्ञानात् कर्मणां कर्मसंक्षयः। उदयाव्ययसंस्थानमन्तर्यागत्वमेव च॥ ७२॥

---

१. **ग-घ**—स्वरूप त जहाति २. **ग-घ**—ग्रहयज्ञोपलायस्तु ३. **ग**—तनाबृन्द तु **घ**—दन्विबृन्द तु ४. **क-ख**—स्याप्ययात्मनः ५. **घ**—नारीश्वसप्र ६. **ग-घ**—मणेर्विकर्षणेपि च ७. **क-ख**—इन्द्रियासु च ८. अनिलपूर्णाया दृतौ इति साधु ९. **क-ख**—स एव प्रति १०. **ग-घ**—श्चेन्द्रियान्तरः ११. **क-ख**—ज्ञायमेतत्परिज्ञानात्

नित्यमेवं हि मन्त्राणां ....[1]वायुमूर्तिनाम्। मध्यदेशं समावृत्य मध्यमार्गेण संविशेत् ॥ ७३ ॥
सुव्यक्तो? रन्तरीभूतमात्मानं खे पुरोदितम्। ध्रियेऽघृतविधिः? यावदेतद्वै शासनं पुरा ॥ ७४ ॥
बहिस्तदनु सा वृत्तिर्भेदानां यजनाय च ॥

इति श्रीपाञ्चरात्रे पौष्करसंहितायां आधारासनलक्षणो नाम
द्वाविंशोऽध्यायः॥
(समुदितश्लोकसंख्या ७५)

## अथ त्रयोविंशोऽध्यायः

**श्रीभगवानुवाच —**

एवमाधारसंस्थानं कृत्वा तदनु विन्यसेत्। आकजक्षेत्रदेशाद्वै यावद्द्वारावनि क्रमात् ॥ १ ॥
[2]आधेयाधारकत्वेन तदधिष्ठातृदेवता। अपेक्षाप्राग्वशेनैव दिग्विदिक्षु यथाक्रमम् ॥ २ ॥
ऐश्वरं पौरुषं प्राच्यां प्राजापत्यं तृतीयकम्। तत्राद्यमपवर्गादिसाधने [3]कर्मिणां हितम् ॥ ३ ॥
तत्सिद्धिसाधनत्वेन सर्वेषां चाकरं स्मृतम्। प्रयाति चाङ्गभावं तु मन्त्रिणामप्यमन्त्रिणाम् ॥४॥
प्रसिद्धं सिद्धकामानां तृतीयममलेक्षण। स्वबुद्धिशक्त्या ह्यागसिद्धये उत्क्रमब्जज ॥ ५ ॥
स्वमन्त्रं व्यक्ततां नीतं यत्तत्वे नित्यसंमुखम्। भूतसामर्थ्यमूर्तेर्वै चित्तेस्सकरणस्य च ॥ ६ ॥
वस्तुत्वेन फलत्याशु त्वसमाम्मात्रवेदिन?। भक्तिश्रद्धावशेनैव सन्निरुद्धो [4]भवानि यत् ॥ ७ ॥
एवं मन्त्रार्क[5]द्यग्रश्मिजालेनाभासितं हि यत्। ततस्संकल्पमाद्यं हि नित्यनिश्चयचेतसाम् ॥८॥
मन्त्रैकशरणानां तु [6]बहिरप्यर्चने हितम्। अन्तर्वा बहिरब्जोत्थ आधाराद्दिगुदक् स्थितम् ॥९॥
निपतत्यंशुजालं च यत्र तत् पौरुषं स्मृतम्। भगवान् [7]भूतभावानानात्मदैवत्ययाजिनाम् ॥१०॥
गुणा [8]बहुभिदश्चासु बहिरन्तर्यथैश्वरम्। यन्निश्चयीकृतं पूर्वं तत्प्रसिद्धिवशात्त्वपि ॥ ११ ॥
सुप्रसिद्धं च तद्वृत्ति तृतीयं हि महामने। रुचिदिग्वीक्षमाणानामेकद्वारादिकात्मनाम् ॥ १२ ॥

१. **क-ख**—चश्चनोवायु **ग**—च ऋतेवायु—**घ**—चरुतोवायु २. **ग-घ**—आर्याचारकत्वेन
३. **ग-घ**—कर्मणाम् ४. **ग-घ**—भवादिवत् ५. **क-ख**—द्यवह्निज्वालेन ६. **ग-घ**—बहिर·व्यप्यते ७. **ग-घ**—भावभूतानां ८. **ग-घ**—गुणाबहि तिहाचाशु

देवतायतनानां च नमतानां महामते। शेषादिशयनानां च यूपादीनां निवेशने ॥ १३ ॥
धर्मादिलक्षणे कार्या तद्वशादासनी स्थितिः। इन्द्रादिलोकपालानां यज्ञादीनां तथैव च ॥ १४ ॥
प्रयोजनवशेनैव मन्दमध्यपरायणैः। कलशस्थं च कुण्डस्थं यन्त्रस्याराधनस्य च ॥ १५ ॥
एवमेवमनुष्ठेयं लोकेशानस्य पूजनम्। वनेऽत्र गहने विप्र सद्भूधरगुहान्तरे ॥ १६ ॥
भूगृहे बलिभूमौ वा लोकधर्मरतात्मनाम्। लोके शासन[१]शास्त्रार्थं मन्त्राणां संस्थिति सदा ॥
[२]सममन्त्रस्य दृष्ट्या वै कार्या कमलसंभव। अतत्व ..वद्[३]ऽज्ञोऽथ मन्त्रतत्त्वज्ञमाचरेत् ॥१८॥
नगरायतनादीनां सुस्थिराणां च सर्वदिक्। एवं ज्ञात्वा पुरा सम्यग्दिग्विदिङ्नियमं तथा ॥१९॥
सुयोग्यतावशेनैव [४]स्वस्यान्तःकरणाय च। समाचरेत् ततो न्यायं मण्डलानां यथा शृणु ॥ २० ॥
सदैव शक्तिभावेन सद्रूपात्मनि वर्तते। स्थूलसूक्ष्मद्वयं विप्र त्वेवं सत्वात्मना सह ॥ २१ ॥
व्यक्तिशक्तिसमूहं तु सूक्ष्मात्मन्यनुवर्तते। सत्तारूपेण [५]स्वरूपेण संयुक्ता सूक्ष्मदेहिनाम् ॥२२॥
[६]स्थूलात्मन्यब्जसम्भूत संस्थिता सर्वदैव हि। अथोऽत्र विहितो वाऽपि बहिरन्तर्व्यपेक्षया ॥२३॥
पद्मावनिसमीपे तु पक्षन्यासो विधीयते। द्विधा सत्तात्मकं रूपं रूपं सर्वस्य देवहि[?] ॥ २४ ॥
समीपे यागभूमौ तु विहिता न्यासकर्मणि। बृहद्रूपं तु सर्वेषामन्योन्याश्रयागता[?] द्विधा ॥ २५ ॥
मण्डलीयेषु पीठेषु यस्मादब्जसमुद्भव। वादगात्मकबिम्बानां द्विविधा वर्तते स्थितिः ॥ २६ ॥
स्वेनोपदान्वितस्पष्टा[?] सुस्पष्टाऽन्या च केवला। एवं ज्ञात्वा पुरा सम्यग् यथावदमलेक्षण ॥२७॥
पूर्ववन्मण्डलानां तु पर्यन्तन्यासमाचरेत्। सर्वदा सर्वयागानां दलाद्बाह्येऽम्बदलान्तरे ॥ २८ ॥
शब्दे प्रकाशमात्रं तु स्वदैवत्यं न्यसेद्ध्रुवम्। व्योमयाग त्वपीठानामग्निकोणादितो न्यसेत् ॥
[७]युगस्वभावमूर्तिं च धर्माद्यं हि चतुष्टयम्। तन्निविष्टं तथा भूतं [८]तद्व्यत्ययगुणं हि यत् ॥
[९]सह ऋक्पूर्वसामान्यं कालभेदेन चान्वितम्। ततो देशे सपीठानां [१०]तदुद्देशं तथैव च ॥३१॥
तदैव [११]शब्दाकाशं तु चतुर्थी त्वेक एव हि। शरदिन्दुकलासारकान्तिभूतं तु विन्यसेत् ॥
पीठानामष्टबिम्बानां प्रादक्षिण्येन योजयेत्। आग्नेयादौ [१२]चतुष्कार्थे ईशकोणावसानकम् ॥
धर्मज्ञानं च वैराग्यमैश्वर्यं कमलोद्भव। प्रागादावुत्तरान्तं तु त्वधर्ममलेक्षण ॥ ३४ ॥
[१३]अज्ञानं च त्ववैराग्यमनैश्वर्यमनन्तरम्। चतुःखण्डे तु वै पीठे केवले पूर्ववन्न्यसेत् ॥ ३५ ॥

१. **क-ख**—शास्त्राग्र्य  २. **ग-घ**—मद्यमन्त्रस्य  ३. **क-ख**—दज्ञार्य  ४. **क-ख**—स्वस्यान्त्यकरणाय च  ५. **क**—सरूपेण  ६. **क-ख**—"स्थूलात्मनि" इत्यादि "दैवत्य न्यसेद्ध्रुवम्" इत्यन्त सार्ध श्लोकषट्क गलितम्  ७. **ग-घ**—ज्ञानस्वभाव  ८. **ग-घ**—तद्व्यत्ययगणम्  ९. **ग-घ**—सहान्यत्पूर्वं  १०. **ग-घ**—तदुद्देशं  ११. **ग-घ**—शब्दकोशं तु  १२. **ग-घ**—चतुष्क तु  १३. **क-ख**—अज्ञान च अवैराग्य

[1]धर्माद्यैश्वर्यमूलं तु यथोद्दिष्टक्रमेण तु। बाह्यतश्चोपपीठे तु व्योमभावोपलक्षणैः ॥ ३६
चतुष्टयक्रमाद्यं तु [2]पादन्यासादनन्तरम्। पीठानामेकबिम्बोत्थं गात्राणां कमलोद्भव ॥ ३७ ॥
द्विबिम्बचरणानां तु तत्र चाभ्यन्तरे क्रमात्। व्यत्ययैस्सहधर्माद्यैः प्राग्वद्द्वेयास्ततो बहिः ॥३८॥
[3]गात्रकेषु कृताद्याश्च चत्वारश्च यथाक्रमम्। साङ्घ्रिप्रणा गात्रकाणां तु बिम्बमध्यात् तदात्मनाम् ॥
पूर्वापराभ्यां बिम्बाभ्यामाग्नेये तदनु न्यसेत्। परापरविभागेन धर्मस्तत्रैव तद्बहिः ॥ ४० ॥
दक्षिणोत्तरभागाभ्यामैश्वर्यं [4]द्विज शक्तिदम्। उदग्दक्षिणयोस्तत्र ह्यधर्माख्यं च रूपभृत् ॥४१॥
प्राचीपूर्वापराभ्यां तु [5]अधर्मं च द्विरात्मवत्। [6]युगं हि कृतनामाख्यमात्मना दक्षिणोत्तरे ॥
याम्ये प्राक्पश्चिमे त्रेता ह्यज्ञानं दक्षिणोत्तरे। वारुणे त्वप्यवैराग्यं द्विधा प्राक्पश्चिमे न्यसेत् ॥
सोत्तरे दक्षिणे भागे द्वापरं विनिवेश्य च। उत्तरे तु ह्यनैश्वर्यं [7]दिग्द्वये दक्षिणादितः ॥ ४४ ॥
बिम्बद्वये तु प्रागाद्यैर्वि[8]धान्यकलिकं ततः। त्रिबिम्बचरणे पीठे पञ्चबिम्बे तु गात्रके ॥ ४५ ॥
अभ्यन्तरेषु पादानां धर्मास्तद्बहिरस्य च। सूक्ष्म .. .. साधारास्तु कृतादयः ॥ ४६ ॥
गात्रकेषु त्वधर्माद्या न्यस्तव्या मूर्तिलक्षणाः। अथैकबिम्बपीठाग्रे पञ्चबिम्बे तु गात्रकम् ॥४७॥
यथा तदनु सार्धेन एकाग्रमवधारय। स्वक्षेत्रेषु च धर्माद्या न्यस्तव्या व्यक्तलक्षणाः ॥ ४८ ॥
मध्यतो गात्रबिम्बानामधर्माद्यास्तथाविधाः। तस्य सव्यापसव्याभ्यां बिम्बाभ्यां कमलोद्भव ॥४९॥
एक एव द्विधा चैव ऋग्वेदं सूक्ष्मलक्षणम्। ततस्सत्तास्वरूपं तु कृतं तदुपपक्षयोः ॥ ५० ॥
एवं दक्षिणदिग्भागे [9]यजुस्त्रेतायुगान्वितम्। प्रत्यक् प्राग्द्वापरं ह्युदक्[10]साथर्वयुगः कलिः ॥५१॥
द्विबिम्बचरणानां तु पीठानां कमलोद्भव। द्विबिम्बगात्रकाणां तु विन्यासमथ मे शृणु ॥ ५२ ॥
मन्त्रबिम्बेषु पादानामग्ने [11]रीशपादावधि। परस्वरूपा धर्माद्या [12]बहुस्थूला कृतादयः ॥ ५३ ॥
मध्ये बिम्बेषु गात्राणां धर्माद्या परमात्मका। तत्पक्षयोस्तु साकाराः श्रुतिसञ्ज्ञा द्विधाद्विधा ॥
द्विबिम्बचरणे पीठे तदन्यत् पञ्चबिम्बके। [13]परस्थलीविभेदेन धर्माद्यास्त्वायनेषु च ॥ ५५ ॥
ततोऽधर्मादयस्स्थूला मध्यतो गात्रभूमिषु। पञ्चावनिसमीपे तु मध्यबिम्बस्य पक्षयोः ॥ ५६ ॥
सत्तास्वरूपद्वित्वेन न्यसनीया ऋगादयः। [14]एवमाकृतिमन्येऽपि बहिः प्राग्वद्द्वयोरपि ॥ ५७ ॥
कृतादयस्तु साकारा[15]श्चात्मनाद्व्यात्मना न्यसेत्। चतुर्बिम्बेषु पादेषु पीठेष्वेव महामते ॥५८॥

१. ग-घ—धर्माद्यैश्वर्यानेक तु  २. क-ख—पादा दनन्तर  ३. क-ख—गात्रक्षेषु  ४. क-ख—त्विचशक्ति  ५. क-ख—भ्या तु ..  ६. . नामाख्य  ७. ग-घ—दिश्यये  ८. ग-घ—विधानकलिकम्  ९. क-ख-ग-घ—यदुस्त्रेता  १०. ख-घ—त्वथर्वायुगर्नाकलिः  ११. क-ख—मग्ने.श्रीश  १२. क-ख—बहु...ला  १३. ग-घ—परस्थूलीविभेदेन  १४. क-ख—एनमाकृतिमन्त्येपि  १५. क-ख—द्वामनाद्यात्मना

[१]अन्यत्रपञ्च बिम्बेपु ........न्यासक्रममथोच्यते। तत्र धर्मादयस्तावत् परसूक्ष्ममयाः क्रमात् ॥
सर्वान्तरस्थतद्बाह्ये प्रत्यग्रे तु पदेपदे। ताभ्यां तदनु बाह्यस्थां बिम्बाभ्यां विनिवेश्य च ॥६०॥
[२]स्थूलत्वेन ततो भूयस्तथारूपा युगास्तथा। न्यस्तव्या युग्मयोगेन स्याच्चतुर्णो यथाऽष्टधा॥ ६१ ॥
साकारस्तु ह्यधर्मात्मा गात्रकाणां हि मध्यतः। [३]समं व्यूह्य क....सम्यक् पक्षबिम्बमपि स्थितम् ॥
[४]वासाभावद्विधैकैकं पुनरप्यत्र पूर्ववत्। [५]त्रि प्रकारा द्विधावस्था ऋग्वेदाद्यास्ततो न्यसेत् ॥६५॥
गात्रकेष्वष्टबिम्बेपु चतुर्बिम्बेपु चाश्रिपु। [६]विन्यासं . चाब्जोत्थ यथा तदवधारय ॥ ६४ ॥
आरभ्यान्तरबिम्बाद्यैर्बाह्यबिम्बान्तसङ्घिपु। परसूक्ष्मविभक्तेन ततो धर्मादयः क्रमात् ॥ ६५ ॥
तत्रैव पक्षदेशाभ्यां कृता युग्मयुतो गतः ? । मुखसेनावहा मूर्तिलक्षणा विनिवेश्य च ॥ ६६ ॥
स्थूलभूतस्वधर्माद्या गात्रकाणां तु मध्यतः। पत्रसूक्ष्मात्मना तेषां बिम्बमध्यबहिस्स्थिते॥ ६७ ॥
स्थूलात्मा सर्वऋग्वेदमेकं [७]तत्पक्षयोर्द्विधा। पुनस्सूक्ष्मात्मना चैव न्यसेत्तदुपपक्षयोः ॥ ६८ ॥
भूतस्तद्बाह्यसंस्थाभ्यां ? [८]पादाभ्यां तत्पदात्मनाम्। एष एव हि तद्विप्र न्यसनीयं प्रयत्नतः ॥
एवं दक्षिणदिग्भागादुदङ्दिनष्टं द्विजोत्तम। अथर्ववेदपर्यन्तं यजुर्वेदादिकं न्यसेत् ॥ ७० ॥
[९]दृक्श्रोत्रपाणिपादानां करणानां यथैव हि। [१०]सत्वैवाकातुश्च ? वै विश्व तथैतेषां द्विते ? ततः॥

इति श्रीपाञ्चरात्रे पौष्करसंहितायां आसनदेवतान्यासो नाम
त्रयोविंशोऽध्यायः ॥

## अथ चतुर्विंशोऽध्यायः

**श्रीभगवानुवाच**—

पूर्वापराभ्यां द्वाराभ्यां [११]सुपर्णं सत्यविक्रमम्। न्यसेद्वै [१२]सर्व थानां तत्र [१३]पृष्ठगते विभोः॥
ईषत् तदद्वारमाश्रित्य [१४]हेमदण्डं . . मन्दिरे। संमुखं सम्मुखे द्वारि भूगतं विधृताञ्जलिम् ॥

---

१. क-ख—अन्यपत्रच २. क-ख— .. लस्सोततो ३. ग-घ— .. समं व्यूहका-सम्यक् पक्षबिंबमधिस्थितः ४. ग-ग—द्वाहवभाव ५. क-ख--त्रि काराद्विधाप्यवस्था. वेद्यास्ततो ६. क-ख—विन्यास. चाब्ज. यथा ७. क-ख—तच्चक्रयो. ८ क-ख—पाद्याभ्याम् ९. क-ख—दिक्श्रोत्र १०. सर्वत्र विकृतान्यक्षराणि ११. ग-घ—सुपत्यस्सत्य १२. ग-घ—सर्वथाधानाम् १३. ग-घ— तत्रपृष्ठगतम् १४. क-ख—हेमदण्डं ममाथिरे ग-घ—हेमदण्डममन्दिरे

दक्षिणोत्तरभागाभ्यां द्वाराभ्यां कमलोद्भव। गदाचक्रे ज्वलद्रूपे विन्यसेत् तत्परायणे ॥ ३ ॥
चण्डादीनां पुराष्टानां चतु[1]र्द्वारगतौ स्थितः। प्रकाशितायगस्थानां[?] मेवयागेषु भूगताः[?] ॥४॥
क्रमेण तु गतं तेषां [2]शोभाष्टगणमष्टकम्। शोभाष्टकयुते यागे वज्रनाभादिकं हि यत् ॥ ५ ॥
उपशोभाष्टकार्थानां यागानामथ तद्गतम्। न्यस्तव्यमष्टकमिदं तृतीयं क्रमशो द्विज ॥ ६ ॥
लोहिताक्षो महावीर्यस्त्वप्रमेयस्सुशोभनः। वीरहा विक्रमो भीमश्शतावर्तस्तु चाष्टमः ॥ ७ ॥
त्रयोऽपि शोभानुगत[3]मन्यशोभाष्टकं द्विज। तत्राष्टकमिदं चान्यच्चतुर्थं क्रमशो न्यसेत् ॥ ८ ॥
अनिवर्ती महावर्तो [4]नागहा सर्वजित् स्थिरः। जयन्तो [5]भयकूर्मादि त्वष्टमं कमलोद्भव ॥ ९ ॥
उपद्वारेषु यागानामिदं षोडशकं क्रमात्। प्रदक्षिणेन प्राग्भागाद् द्वौ द्वौ चण्डप्रचण्डवत् ॥१०॥
दृढव्रतो बहुशिरा महाकायो महाबलः। जितक्रोधो दुराधर्षो महोत्साहस्त्रिविक्रमः ॥ ११ ॥
अनिलो दुष्टहाऽर्चिष्मान् [6]सर्वदुरतिक्रमः। विषमो गहनो मेघष्षोडशैते मयोदिताः ॥ १२ ॥
चतुरश्रेषु यागानां वह्नेरीशपदावधि। चतुष्टयमिदं विप्र न्यसनीयं यथाक्रमम् ॥ १३ ॥
[7]ऊर्जितश्चामृताङ्गस्तु सर्वाङ्गस्सर्वतोमुखः। कोणानामेकबिम्बानामित्युक्तं कमलेक्षण ॥ १४ ॥
[8]द्विबिम्बानां सदुद्देशात् तत्पादान्तं बहिः पुनः। चतुष्टयं योजनीयं न्यासकाले द्विजं[?] महत् ॥
शुभाङ्गो वरदश्चैव वागीशश्शब्दविक्रमः। विद्धि शङ्कुविशेषास्ते सूक्ष्मस्थूला यथाक्रमम् ॥१६॥
इदमुक्तं यदुद्दिष्टं मण्डलानां पुरा मया। आधारदेवताव्यूहं पीठामरगणान्वितम् ॥ १७ ॥
द्वारेशानुगते मार्धं[?] श्रीणानाथ[?] गणं हि यत्। सर्वेषामर्चनं [9]विप्रा[?] दाराध्या हृदयान्विताः ॥
स्वसंज्ञाप्रणवोपेता नमस्कारपदानुगाः। या [10]पुनस्स्थूलसूक्ष्माख्या युक्ताऽन्येषां पदेन तु ॥१९॥
आत्मनेतिपदोपेतास्स्वाहान्ता होमकर्मणि। चित्तसम्प्रतिपत्त्यर्थ[11]माराधारादथाब्जज ॥ २० ॥
यथाक्रमेण सर्वेषां [12]ध्यानमार्गक्रियानलम्। [13]शान्त मुज्झिततच्छेषं स्थितमन्तर्मुखं स्थितम् ॥
आग्नेयोल्लिखिताकारमाधाराख्यं स्मरेत् प्रभुम्। कूर्ममुद्रान्वितं कूर्मवक्त्रं निष्टप्तरुक्मभम् ॥ २२ ॥
शङ्खपद्मधरं कूर्मं स्वस्तिकेन स्थितं स्मरेत्। मुञ्चन्तमनिशं तेजो देहाद्भीषणमुत्कटम् ॥ २३ ॥
तिर्यगूर्ध्वं तदाधारं [14]ज्वालामालमिवोज्ज्वलम्। अनन्तशशिसङ्काशमनन्तमथ संस्मरेत् ॥२४॥

१. क-ख—द्वारगतो २. ग-घ—शोभाष्टगतमष्टकम् ३. क-ख—मन्यथोक्ताष्टकम्
४. क-ख—दर्पहा सर्पहा इति स्यात् ५. ग-घ—भयकुम्मानि (भयकृन्मानि?) ६. क-ख—सर्पेदि-द्दुर ७. क-ख—ऊर्जितश्च भृगाङ्गस्तु ८. क-ख—इदमर्धं लक्षम् ९. ग-घ—विप्रदाराध्या
१०. क-ख—या पुर.स्थूल ११. घ—माधारा दथाब्जज १२. ग-घ—ध्यानकणियामलम्
१३. क-ख— मुज्झितत ग-घ—शान्तमुज्झिततच्छिष्टम् १४. ग-घ—ज्वालामालामिव

सहस्रफणमालाढ्यं सहस्रफणभूषितम्। स्वपाणिसंपुटेनैव शोभवत्[१] स्वाङ्ग[१]भूतलम्॥ २५ ॥
सितारविन्दशङ्खाक्षसूत्र[२]चक्रकरान्वितम्। [३]पतनाशङ्कबुद्धेर्वै वित्रस्तमनसस्तु च ॥ २६ ॥
मा भैरित्य[४]भयं यच्छत्वाब्रह्मभुवनस्य च। [५]निश्शेषरक्तहेमाभां [६]प्रावृट्श्रियमिवोज्ज्वलाम्॥
पद्मासनेनोपविष्टां ध्यायेद्बद्धाञ्जलि धराम्। फुल्लकुन्दावदातं च सितस्निग्धजटाधरम् ॥ २८ ॥
ध्यायमानं सितं शङ्खं मुक्तादामैरलंकृतम्। विस्तीर्णसर्वावयवं विक्षिप्तोरुद्वयस्थितम् ॥ २९ ॥
विक्षिप्तजानुपादं च संस्मर्तव्यं पयोनिधिम्। [७]पुपीताम्रफलश्यामपाणिपादतलोज्ज्वलम् ॥
रक्ताक्षं च तदा विप्र कीर्णकेशं सितानमम्। पद्मासनेनोपविष्टमक्षमालासमाकुलम् ॥ ३१ ॥
पद्ममुद्रान्वितं पद्मं सुदीर्घचरणं स्मरेत्। तुहिनाच्छोरलस्वच्छमुक्ताफलशशिप्रभाः ॥ ३२ ॥
मृगेन्द्रस्कन्धवदना धर्म[८]ज्ञानादयश्चतुः। पद्मरागप्र[९]वालादिसद्दाडिमफलोज्ज्वलाः ॥ ३३ ॥
अन्तर्दयोपरक्ताश्च राजराजेश्वरोपमाः। द्विरष्टवर्षवद्विद्धि चत्वारो धर्मपूर्वकाः ॥ ३४ ॥
हेमचम्पकखद्योतहरितालदलोज्ज्वलाः। वाजिवक्त्रा स्मृताः वेदास्संपूर्णनरलक्षणाः ॥ ३५ ॥
[१०]एवं वृषेन्द्रवदना युगा ब्रह्मन् कृतादयः। सुपक्वाम्रातसीपुष्पनीलाब्जशुकसन्निभाः ॥ ३६ ॥
सर्वे सद्वस्त्रसत्पुष्पसदलङ्करणान्विताः। शङ्खपद्मवरास्सर्वे वराभयकरास्तु वै ॥ ३७ ॥
आधेयचक्रविन्यस्तमस्तकास्स्वात्मसिद्धये। समर्पितान्तःकरणा परस्मिन् मन्त्रकारणे ॥ ३८ ॥
युगान्तार्काग्निसङ्काशखगोमण्डलमध्यगम्। स्वमुद्राव्यग्रपाणिं च वल्गन्तं हेतिराट् स्मरेत् ॥३९॥
[११]चिन्त्यमव्यक्तपद्मं तं हिमहेमाग्निभास्वरम्। शान्तमष्टभुजं सौम्यं संस्थितं स्वस्तिकेन तु ॥
स्फटिकोपलकान्तिं च चिद्घनानन्द मव्ययम्। सर्वशक्तिनिधिं ध्यायेदमूर्तिं चित्प्रभाकरम्॥४१॥
[१२]सर्वेष्वपि भवान्तस्थं तत्राधारात्मना विभोः। स्वसत्ताभासितं सत्त्वं गुणसत्त्वाद्विलक्षणम् ॥
विभवं विद्धि विप्रेन्द्र [१३]ज्वालौघं कच्छपानन। स्वभोगं नाग[१४]नाथस्य क्षितकाञ्चनित्यया?॥
आसारमामृतं दिव्यं वीच्योघैस्तु समन्वितम् । क्षीरोदकीयं विभवं परिज्ञेयमनश्वरम् ॥ ४४ ॥
[१५]बीजकोशं सकिरासं? कमलस्य दलान्वितम्। [१६]स्वशक्तिनी? प्रवृत्तानां मया विभवमप्रकृत्?॥
विमलादिकलाजालं पौरुषं विभवं स्मृतम्। [१७]विभोर्मन्त्रात्मनश्चेदमशेषममरार्चितम् ॥ ४६ ॥

१. घ—स्वाङ्गभूषितम् २. क-ख—सूत्रचक्रान्वितम . ३. क-ख—पातानागक-युद्धेर्वै ४. क-ख—त्वभय य . दा ब्रह्म ५. ग-घ—निश्शेषरत्नहेमाभाम् ६. ग-घ—प्रावृट्... करिपोज्वलाम् ७. क-ख—सुखित्वाम्र ८. ग-घ—ज्ञानादयश्छदा ९. क—प्रवालादि . लोज्वला ग-घ—प्रवालानिस्धान्यमवलोज्वला १०. क-ख—एव . वदना ११. ग-घ—चित्तमव्यक्त १२. ग-घ—सर्वेऽपि च भावान्तस्तत्राधारा १३. क-ख—ज्वालोपङ्कश्चात्मन १४. ग-घ—नाथस्य भूक्षित. काञ्चनीयया १५. ग-घ—बीजकोश सकेराम कमस्यायाभ्रम हि यत् १६. क-ख—...मयाविभव १७. क-ख—.. मम.. त्मनश्चेद अशेषपुरार्चितम्

[1]आमहन्मन्त्रनाथेभ्यो नानामन्त्रगणं हि यत्। स्वशक्तिनिचयोपेतं तद्रिप्णोः परमात्मनः॥ ४७॥
विभवं कमलोद्भूतं ज्ञात्वैवं स्वं यजेत्तदा। पीठवेदिबहिष्ठानां प्रागुक्तानां द्विजोत्तम ॥ ४८ ॥
लोहिताक्षादिकानां तु [2]ध्यानस्यातः परं शृणु। लोहिताक्षादयश्चाष्टौ वर्णतस्वपतोज्वलाः ? ॥
ज्वलत्परशुहस्ताश्चा[3]प्यस्तं ? मुदितमानसाः। चतुर्थमष्टकं यद्वै ह्यनुवर्तिपुरस्सरम् ॥ ५० ॥
तदाऽनन्तकरं विद्धि [4]स्वस्य नद्युदया ? करम्। दृढव्रतादयस्सर्वे [5]षोडशोपप्रवेशकाः॥ ५१ ॥
महामुद्गरहस्ताश्च स्वाश्रयद्युतिलक्षणाः। ऊर्जितायास्तथैश्रीरा ? गृहीतमुसलास्तुते ॥ ५२ ॥
कान्तितः कोणभूभागा ? लक्षणात् कमलोद्भव। सर्वे चार्वम्बराश्चैव द्विभुजाश्चारुकुण्डलाः ॥५३॥
प्रसन्नवदनास्सौम्यास्त्रैलोक्योद्धरणक्षमाः। हारनूपुरकेयूरपूर्वैर्द्वा[6] ....शविद्युताः ॥ ५४ ॥
तदाज्ञाप्रेक्षकाश्चैव दुष्टदोषोपशान्तिदाः। बलेन महता क्षिप्तदेवासुरमहोरगाः॥ ५५ ॥
एकवीरासहायाश्च त्वप्रयत्नेन लीलया। आब्रह्मभुवनं शश्वत् परिवर्तनकृत्क्षमाः ॥ ५६ ॥
गदागरुडचक्राणां चण्डादीनां महामते। यथावदुक्तं हि पुरा भूयः किं कथनेन हि ॥ ५७ ॥

इति श्रीपाञ्चरात्रे पौष्करसंहितायां आधारासनदेवतालक्षणो नाम
चतुर्विंशोऽध्यायः ॥



## अथ पञ्चविंशोऽध्यायः



**पौष्कर उवाच**—

वृत्तिस्थानानि भगवन् त्वच्छासनरतात्मनाम्। हितार्थं ज्ञातुमिच्छामि त्वत्सकाशाच्च सांप्रतम् ॥

**श्रीभगवानुवाच**—

[7]सत्यव्यूहं च तद्भेदैस्सहमूर्त्यन्तरैस्तथा। प्रादुर्भावैर्द्विजश्रेष्ठ प्रादुर्भावान्तरैर्विना ॥ २ ॥
[8]यदन्यदेवताकारं तदा सारसलाञ्छनम्। निषिद्धं वैष्णवानां च सामान्यानां सदाऽर्चने ॥३॥

१. **क–ख**— ...महन्मन्त्र २. **क–ख**—ध्यानं सात.परम् ३. **ग–घ**—श्चाप्यास्तम् ?
४. **क–ख**—स्वस्य .. ..करम् ५. **क–ख**—षोडशो .. काः ६. **ग–घ**—द्वारर्थेशविद्युताः
७. **क–ख**— ...भेदैः ८. **क–ख**—यदद्यदेवताकार तदा...लाञ्चनम्

किं पुनर्मन्त्रतत्त्वज्ञ तत्पारम्यरतात्मनाम्। [१]तदाराधनसिध्यर्थे दीक्षितानां महात्मनाम् ॥ ४ ॥
नमस्कुर्याद्विभूत्यंशं दृष्टं वा [२]संश्रुतं स्मृतम्। पूजनीयमनुज्ञानमाराध्यानां बहिः क्वचित् ॥ ५ ॥
कदाचिद्दृष्टसिद्ध्यर्थं [३]स्वाङ्गमौभि? रचर्चितम्। स्वातन्त्र्येणोपचारैस्तु शुद्धस्येषां? न दोषकृत् ॥

**पौष्कर उवाच—**

त्वत्तोऽहं ज्ञातुमिच्छामि विशेषेण जगत्प्रभो। उपादेयादिकं भेदमाश्रयाणां यथार्चितम् ॥ ७ ॥

**श्रीभगवानुवाच—**

उपादेयानि विप्रेन्द्र वृत्तिस्थानानि मे शृणु। सवाचकानां वाच्यानां सदाराधनसिद्धये ॥ ८ ॥
भूतेभ्य[४]स्त्रितयं पूर्वं तत्प्राक् सामान्यलक्षणम्। चलाचलविभागेन पीठवत् पृथिवी पुनः ॥ ९ ॥
हेमादिनानापत्राणां मृत्काष्ठोपलजन्मनाम्। खड्गास्थिघटितानां च कलशानां तथैव हि ॥ १० ॥
[५]शुभपर्णपुटानां च गालितं संस्थितं जलम्। स्थलमल्लककुण्डानां स्थिरसञ्चाररूपिणाम् ॥ ११ ॥
प्रदीप्तो [६]धूमनिर्मुक्तो सेन्धनश्शम्यनेऽनलः। पूर्वोक्तद्रव्यभेदोत्थे चतुरश्रादिलक्षणे ॥ १२ ॥
केवले भद्रपीठे वा [७]पद्माद्यैर्मध्यतो? दिते। एवंरूपेषु पीठेषु प्रमाणोनेषु चाब्जज ॥ १३ ॥
विविधेष्व[८]प्रणाळेषु काश्रयेषूज्झितेषु च। बृहत्प्रवालसद्रत्नमहामुक्ताफलोपरि ॥ १४ ॥
सूक्ष्मे तन्निकरे वाऽथ संभवे सति पद्मज। क्षौमकार्पासिकौशेयवस्त्रजाले सितेऽहते ॥ १५ ॥
[९]मार्गे चर्मणि भूमिष्ठे कम्बले कुतपेऽब्जज। पृथग्भूतेऽथवा चाभि  स्तलक्ष्मप्रसारिते ॥१६॥
[१०]ग्राम्यैर्वृद्धगणैः कृत्स्नैस्त्वारण्यैस्तण्डुलैस्तथा। [११]क्षोदितैर्गन्धसंमिश्रैर्विधिवत् संप्रसारितैः ॥१७॥
गन्धक्षोदैस्तु विविधैस्स्थूलैर्धूपाधिवासितैः। [१२]गर्भैर्वा [१३]स्थगितै[१४]स्थाना? पुष्पैः पत्रैश्च शाड्वलैः॥
स्वतन्त्रैस्सितरक्ताद्यै रागै रेखाविवर्जितैः। मधुक्षीराज्यदध्यन्नभक्षैः पात्रस्थले स्थितैः ॥ १९ ॥
फलमूलैस्तथा सिद्धैश्शाकैः [१५]खण्डैश्च तानितैः। [१६]निवृत्तौ चैत्यसंज्ञे तु मण्डले सप्तमेखले॥
चतुरश्शृङ्गे[१७]न मे वीरव्ये न लिङ्गे कुलिशोदरे। न शूल[१८]शृङ्गकोटीनां दिनव्यक्षाफलेषु ? च ॥

---

१. **क-ख**—महात्मनाम् २. **क-ख**—सधुतम् **ग-घ**—सश्रुतम् ३. **क-ख**—स्वाङ्गमौ तम् ४. **क-ख**—स्त्रितय.. तत्प्राक् ५. **क-ख**—शुभवर्णपट्टनाच . सम्थिताञ्जलिम् ६. **क-ख**—यूपनिर्मुक्तो ७. **क-ख**—पद्माद्यै...दिते ८. **क-ख**—ष्वप्रमाणेषु ९ मार्गे चर्मणि= कृष्णाजिने १०. **ग**—ग्राम्यैर्वृद्धागणैः **घ**—ग्राम्यैर्वृद्धान् गणै ११ **ग-घ**—क्षौमितै. १२. दर्भैः इति स्यात् १३. **घ**-स्थगिते १४. **क-ख**—स्थानापुष्पै. १५ **क-ख**—कण्डैश्चतादितैः **ग-घ**—खण्डैश्चशाद्वले. इति लिखित्वा पश्चात्—खण्डैश्च तानितैः इति लिखितमस्ति १६. **क-ख**—निवृत्तौचे...सज्ञे १७. **क-ख**—चतुरश्शृङ्गेन...मे कुलि १८. **क-ख**—न शूल ..दिन

करञ्जाद्येष्वपूज्येषु [1]त्वन्येष्वेव हि पद्मज। पुष्पेषून्मत्तकाद्येषु त्वज्ञातेषु विशेषतः ॥ २२ ॥
निन्दितेषु च पत्रेषु कमण्डलुगतेऽम्भसि। [2]तत्र श्रेयोनि[?] संस्थाप्य संस्थिते मण्डलादिके ॥२३॥
[3]विना शङ्खदलं विप्र तथा शुक्तिकवाटकम्। न कपालाकृतौ पत्रे करवे[?] भावदूषिते ॥ २४ ॥
[4]शब्ददुष्टो वसत्यस्मिन्[?] [5]रक्ते वै स्थण्डिलादिके। स्वाश्रयेषु यथा देवैश्चातुरात्म्यादयोऽर्चिताः॥
निराश्रयैर्नरैर्भक्तैर्नासाग्रास्नेऽर्चनाय च। विनोदितैर्विशेषा(ख्यै)र्हृच्चक्रकमलैस्सह ॥ २६ ॥
हितं हितानुज्ञानानामाधाराणां परिग्रहम्। कर्मिणां फलकामानां मन्त्रात्मा सम्प्रयच्छति ॥
सद्यो वृत्तवशाद् [6]ब्रह्मन्ननुरूपफलं हि यत्। सामान्यादप्यसामान्या[7]द्गामायाद्भूतलक्षणात्॥२८॥
[8]अचलप्राप्ति वा भूतिप्राप्ति[?] विप्राविनश्वरीम्[?]। परिवर्तन[9]रूपा च सा पुनश्चललक्षणा ॥२९॥
सप्रभूताज्जलाद्[?] वृष्टिलाभस्समुपजायते। [10]वृष्टिरल्पतरा चैव [11]यावज्जीवं तु पौष्कर ॥३०॥
[12]नित्यं निरामयत्वं च वह्नेर्वृत्तौ तु मन्त्रिणाम्। हेमाद्युत्थेषु पीठेषु मन्त्री कमलसंभव ॥
प्रतिपत्तिगणं श्रेष्ठं नृपेभ्यस्सरमाप्नुयात्[?]। प्रवालाद्यैरधिष्ठानै[13]स्तेजोवृत्तिमनुत्तमाम् ॥ ३२ ॥
[14]धृतिं समृद्धिं पूजां च साजिताद्वस्त्रसञ्चयात्[?]। प्राप्नोत्यारधनाच्छश्वदाराध्या कमलेक्षण ॥
ध्यानवृत्तौ सदा वृत्तिर्वर्धते कुलवर्धनी। अक्षय्या कमला नृणां जायान्नं तण्डुलाश्रयात्॥ ३४ ॥
गन्धाधाराच्च सौभाग्यं कुलाधारान्महत् सुखम्। संपूजनात् कुशादीनां पृष्ठे वै मन्त्रराट् सदा॥
ददाति मनसः प्रीतिमतुलाममलेक्षण। रागाधारगतो मन्त्रः कामभोगमनुत्तमम् ॥ ३६ ॥
संयच्छत्यविरुद्धं च द्रविणेन समन्वितम्। मधुक्षीराज्यपूर्वेषु त्वाश्रयेष्वखिलेषु च ॥ ३७ ॥
[15]पूजनं मन्त्रनाथस्य दीर्घायुष्यं प्रयच्छति। तथैव विपुलां [16]कीर्तिं ...धर्मनिश्चयक्षमाम्[?]॥३८॥
एतानि पुनरब्जोत्थ [17]संभवानां फलानि च। भजन्ति नूनं [18]नानार्थमुद्यमाद्यन्महामते ॥
देशं कालं तथा [19]द्रव्यं महत्त्वादिव्यपेक्षया। याति मोक्षाङ्गभावं नैष्ठिकानां महात्मनाम् ॥
सदैव जीवमुक्तानां [20]भक्तानां भावितात्मनाम् ॥

इति श्रीपाञ्चरात्रे पौष्करसंहितायां वृत्तिविचारो नाम पञ्चविंशोऽध्याय ॥

(समुदितश्लोकसंख्या ४०॥)

१ क-ख—त्वयेष्वेवहि २. क-ख—तत्रश्रोयोनि ३. क-ख—विनाशवदलम्
४. क-ख—शब्दपुष्टोवमन्यस्मिन् ५. क-ख—नृत्तेव ६ क-ख—वशात् ब्रह्मरूपफलम्
७. क-ख—न्यानामायात् ८ क—अर्धद्वय लक्षम् ९ ख—परिवर्तनपाश्च १० ग-घ—पुष्टिरल्पतरा ११. क-ख—यावज्जीव तु . १२. क-ख—.. वृत्तौ तु १३. ग-घ—तेजोनुत्ति
१४. ग-घ—धृतिस्समृद्धिपूजाम् १५ ग-घ—पूजानान्मन्त्र १६. ग-घ—विफलां कीर्तिमधमं निचय १७. क-ख- सपानाम् १८. ग-घ—नानार्थमुत्तमाद्य महा १९. क-ख—भाव्य महत्वादव्यपेक्षया २० क-ख -मुक्ताना भावि

# अथ षड्विंशोऽध्यायः

**श्रीभगवानुवाच**—

यद्वृत्तौ विहितं यद्वै देशकालवशाद्द्विज। अखण्डितं भोगजालं पावनं प्रीतिवर्धनम् ॥ १ ॥
मात्रान्तमर्घ्यपूर्वं तु वस्त्रालङ्कारसंज्ञकम्। सुसंपूर्णं च तद्भक्त्या श्रद्धया विनिवेद्य च ॥ २ ॥
पुरुषाशनमात्रं तु व्यञ्जनेन समन्वितम्। प्रापणं [1]परमान्नाद्यमन्नाद्यमतिभूतये ॥ ३ ॥
विहितं शुद्धशालिभ्यस्तद्वदेव हि पौष्कर। लक्षणं लेह्यपेयाख्यशोष्यधानाभिधायिनाम् ॥ ४ ॥
विधिवत् षड्रसोत्थानां पावनानामथाध्वतः। भक्तिश्रद्धावशाच्चैव प्रत्येकस्य [2]त्वनेकता ॥ ५ ॥
विशेषयागे विहिता नित्ये वा सति संभवे। यस्मात् प्रागात्मसात् कुर्याद्भोगशक्तिमनश्वरीम् ॥
व्यक्तां [3]गुर्वादिवक्त्रेण भुनक्ति तदनन्तरम्। [4]भोगत्वमुपचारस्य भोजनाद्विहितं त्वितः ॥ ७ ॥
तस्यां नित्ये यथाशक्ति निमित्ताराधने तु वा। श्रद्धापूतेन मनसा प्रीतयेऽतिजगत्प्रभोः ॥ ८ ॥
निवेदनीयमेकैकं भोगं भोगासयेऽब्जज। तत्रासनादिभिर्भोगैर्व्यक्तैर्व्यक्तिस्थमर्चयेत् ॥ ९ ॥
द्विरष्टाष्टकसंख्यैस्तु क्रमशो नरनाथवत्। मण्डलादौ तु वाऽन्यत्र स्मृत्वा मन्त्रमयं वपुः ॥१०॥
व्यक्तोपयोगभोगोपमूर्तं संयोज्य चेतसा। कृत्वा पाणितलस्थं च त्वर्घ्यस्रक्चन्दनादिभिः ॥ ११ ॥
विलेपनैरलङ्कारैर्नेत्रवस्त्रैर्विनाऽब्जज। एतानि कर्णिकोर्ध्वे तु योजनीयानि वै विभोः ॥ १२ ॥
विनिवेद्य निधायान्ये बलिभूमेर्बहिर्द्विज। योक्तव्यमग्निमध्ये तु समिद्भिस्सह सर्वदा ॥ १३ ॥
सर्वाण्यन्नविशेषाणि चन्दनादीनि [5]यान्यपि। सदन्तकाष्ठताम्बूल[6]मुत्कटक्षारवर्जितम् ॥ १४ ॥
दाप्यानि लक्षहोमे तु आसनादीनि यानि च। मधुलवणपानाम्बु [7]कटुतैलोज्झितानि च ॥
[8]कृत्वा यागं यथा शास्त्रमग्नौ मन्त्रार्चनं पुरा। आज्येन तर्पयेत् पश्चात् घृताक्तैस्सतिलैः फलैः ॥
वापीह्रदनदीदेवखातादिषु जलान्तरे। [9]फलस्रगर्घ्यं गन्धैस्तु [10]सतोयाञ्जलिभिर्द्विज ॥ १७ ॥
[11]अर्चनीयं यथा कामं मन्त्रनाथमतन्द्रितैः। [12]संग्रहे पात्रगं कृत्वा घटे वा गर्जितं जलम् ॥
तत्र मण्डलवत् पूज्य [13]श्रद्धया संभवे सति। वस्त्रालङ्कारनेत्रादि विनिवेद्य बहिर्न्यसेत् ॥१९॥

१. **क-ख**—परमन्नाद्यमन्यार्थमति २. **ग-घ**—त्वनेकधा ३ **ग-घ**—गुर्वादिवक्त्रैस्तु ४ **क-ख**—भोग . विहितम् ५ **क-ख**—चान्यपि ६ **क-ख**—मुत्कटाक्षर ७. **क-ख**—कटुतैलान्वितानि च ८ **क-ख**—कृत्व यागम् . ९. **ग-घ**—फलस्रगर्घ्यं 'स्रगर्घ्यं' इति स्यात् १० **क-ख**—सतो ञ्जलि ११ **क-ख**—इदमर्धं गलितम् १२. **क-ख**—पात्र कृत्वा...गर्जितम् १३- **क-ख**—सत्पूज्यश्र सभवे

कर्पूर[1]चन्दनक्षोदं कुङ्कुमागुरुभावितम्। [2]विविधं पुष्पजालं च [3]तत्र साध्यं तु निक्षिपेत्॥
धातुपाषाणमृत्काष्ठरत्नौषधिचितेषु च। सपद्मेषु च पीठेषु चक्रयुक्तेषु वाऽब्जज॥ २१॥
द्वितयेनोपरिष्टात्तु उषितेषु तथैव हि। द्वारार्धाश्रितया वीथीपीठैर्वान्वितेषु च॥ २२॥
चतुरश्रादिभेदोत्थनानाकृतिवरेषु च। एवं वा भद्रपीठेषु केवलेषु द्विजोत्तम॥ २३॥
ध्यात्वा मण्डलवद्देवमर्चनीयं यथाविधि। मानसैस्सूर्यबिम्बस्थं तद्वद्धृत्पुष्करान्तरे॥ २४॥
किंतु तत्र विशेषो यस्तन्मे निगदतश्शृणु। द्रव्याणां भूतजा[4]तानां ह्यसंपत्तिर्यदा बहिः॥
तदा सङ्कल्पसंभूत[5]मृद्र...रर्चनं कृतम्। विलक्षणचिदानन्दप्रकाशवपुषो विभोः॥ २६॥
मूर्तिमन्त्रात्मकं रूपं ध्यात्वा सङ्कल्पसिद्धिदम्। संभवे सति भोगानां चिदानन्दकदम्बवत्॥
स्मृत्वोच्चरेद्द्धिया मन्त्रं सुविशुद्धेन चेतसा। सद्दशैरर्चयेद्[6]भोगैरमूर्तैश्शब्दलक्षणैः॥ २८॥
वृद्धिं समुपयातं तैस्स्मरेत्तद्भावितैः क्रमात्। ध्यातृध्येयविभा[7]गेन त्विष्टे वै तदनन्तरम्॥ २९॥
विलाप्य स्वं मनोबुद्धौ तद्युक्ता सा परात्मनि। आत्मानं तन्मयीकुर्यान्निरस्तकरणैस्स्वयम्॥ ३०॥
केवलेनास्य रूपेण सर्वशक्तिमयेन च। चिद्विशिष्टेनरूपेणैव तताऽब्जज शनैश्शनैः॥ ३१॥
निस्तरङ्गस्थितेनैव स्वतन्त्रत्वं [8]मह . ये। स्वचैतन्यं [9]पृथक्कुर्यादिच्छया पुनरेव हि॥ ३२॥
बहिर्यागप्रसिद्ध्यर्थं शश्वद्भोगफलाप्तये। प्राप्त्यर्थं त्वणिमादीनां तथा मन्त्रात्मनाऽऽप्तये॥ ३३॥
प्राग्वदाकारवत् स्मृत्वा सप्तलोकसमुद्भवैः। महद्भिः [10]प्रभूतैस्तु चोत्कृष्टतरलक्षणैः॥ ३४॥
भोगैर्नृत्तैर्गीतवाद्यैर्जयशब्दाद्यलंकृतैः। समर्चयित्वा तदनु [11]संस्मृते संस्मृतेऽर्चिते॥ ३५॥
बहिस्स्वभिमताधारे विभाव्यः प्रतिरूपितः। मन्त्रनाथो महद्धाम दर्पणो वृत्तिरन्तगः॥ ३६॥
[12]इत्येतत् श्रद्धवे...विषयं नैष्ठिकस्य च। सुपदे पूर्ववद्ध्यानं विलाप्य चारुलक्षणम्॥ ३७॥
वाच्यवाचकयोगेन स्वमन्त्रं तेजसां निधिम्। अपसव्येन मार्गेण त्वाऽऽकृष्य [13]हृदयं न्यसेत्॥
सह स्ववायुना सम्यक् सद्धामाधिष्ठितासने। सुलक्षणेऽर्चादिशे वा द्रव्यार्थे सर्वतोऽब्जज॥ ३९॥
तद्विनाऽन्यत्र मन्त्रेशं [14]तस्मादभ्युदितं स्मरेत्। व्यक्ताकृतिधरं चैव साङ्गं सावरणं द्विज॥
आराधनक्रमेणैव प्रविलाप्य यथा पुरा। युगपत् सह सर्वेषां संप्रवेशक्रमेण च॥ ४१॥
कृत्वा चानुगतां बुद्धिं स्वदेहस्थेन वायुना। शश्वदाकृष्य बुद्धिस्थं मध्यमार्गेण पौष्कर॥ ४२॥

१. **क–ख**—चन्दन २. **ग–घ**—विधाय पुष्प ३. **क–ख**—तत्र . तु ४. **क–ख**—जातानां तुष्य सपति ५ **ग–घ**—मुद्रकैरर्चनम् ६ **क–ख**—भोगैरमुतैः ७. **क**— ... तदन्तरम् **ख**—श्विष्टे ते तदनन्तरम् ८ **ग–घ**—महत्वये ९ **क–ख**—प्रथक्कुर्या चयत्पुनरेव हि १०. **ग–घ**—प्रवृत्तैस्तु ११ **क–ख**—सस्मृते ते १२ **ग–घ**—इत्येव बुद्धेर्वै . विषमम् १३. **ग–घ**—हृदयात् न्यसेत् १४. **क–ख**—"तस्मादभ्युदितम्"

कुर्याच्चैतन्यविश्रान्तं हृदब्जगगनोदरे। एवं हि त्रिविधं यागं हार्दान्ते समुदाहृतम् ॥ ४३ ॥
द्रव्यैर्ज्ञलक्षणैः पूर्वं चिदचित्सदृशैः परम्। दुर्गतैस्मुशुभैस्स्वलपैरञ्जितैस्स्थापितैर्बहिः ॥ ४४ ॥
तृतीयमब्जसंभूत [1]क्रमात् तत्प्रातिभावनात्। [2]हृद्यागो यस्तु भोगेशो संयोगान्मोक्षमृच्छति ॥
संभोगमपवर्गं च तद्बहिर्व्यञ्जनं पुनः। कर्मसन्यासिनां विप्र कर्मिणां प्रददाति च ॥ ४६ ॥
[3]आहूतः प्रविशेद्यत्र [4]मन्त्रनाथो हि संमुखः। तत्प्रागपेक्ष[5]या कार्यं धर्मादीनां निवेशनम् ॥
सांमुख्यं भजते यस्मात् साध(स?)नः परमेश्वरः। तदासनं हि चिद्रूपं सिद्धमेतत् स्ववाहनात् ॥
तत्पीठवसुधोद्देशं मण्डलादिषु वृत्तिषु। आत्मनः प्राग्वशाद्वायुकोणादारभ्य पूजनम् ॥ ४९ ॥
कार्यं विघ्नेशपूर्वाणां [6]तत्पदाराग्रभूः पदम्। वीथौ? सविधिकानां तु यागानामेतदाचरेत् ॥
बहिर्वारणरेखा[7]नां मुक्तानां तु महामते। युक्तानां[8] न बहिर्दोषै निर्यज्ञे चार्चने सति ॥५१॥
एवं रक्षःपदे [9]कुर्यात् स दक्षिणवशात्तु वै। पूजनं कालनाथानामन्येषां भगवद्वशात् ॥ ५२ ॥
[10]आद्वारस्थेभ्यस्तु पूजानां पैठीयानां यथाक्रमम्। लाञ्छनाद? श्रियादीनां ...दिक्पती[11]न् हितान्॥
दिक्पालकत्वादासृष्टेर्यतस्तेषां स्थितिस्स्थिरा। भगवन्मन्त्रमूर्तीनामनन्तानां महामते ॥ ५४ ॥
स्वस्थानस्था नमस्यन्ति पूजयन्ति जपन्ति च। ध्वजाद्यैरुपचारैस्तु सम्यक् परिचरन्ति च ॥५५॥
कैवल्यसिद्धये शश्वद्बहुभिस्सानुगैस्सह। पालयन्ति च भक्तानां बलमोजो ददन्ति च ॥ ५६ ॥
ध्वंसयन्ति च विघ्नौघमनिशं मन्त्रयाजिनाम्। संरक्षन्ति फलं मान्त्रं वर्धनान[12] विलक्षणम् ॥
अधिकारमनादिं यच्छक्तिभूतं जगत्प्रभोः। दिक्सिद्धये दशात्मत्वं [13]तद्वल्लेषा दशात्मका ॥
कदाचिद्दिक्परिज्ञाने बहिर्भ्रष्टेऽथ हृद्गृहे। आराध्य पृष्ठतः प्राग्वत् तेषां कुर्यात् समर्चनम् ॥
एवं दिगन्तरे देशे योगज्ञे तु कृते सति। सविशेषेऽथ वै नित्ये विष्वक्सेनार्चनं हितम् ॥६०॥

इति श्रीपाञ्चरात्रे पौष्करसंहितायां भोगभेदो नाम
षड्विंशोऽध्यायः ॥

१. क-ख—क्रमा प्रान्तनिनावतान् २. क-ख—हृयशो ..सायागक्षमृच्छति
३. क-ख—आहूतो ग-घ—आहूय.प्रविशेत् ४. क-ख—मन्त्रनामासि सम्मुख. ५. क-ख—पेक्षया दधर्मा ६. ग-घ—तत्पदान्वाग्रभू. ७. ग-घ—रेखानामक्तानाम् ८. क-ख—नवभिर्दोषैःनीयन्तेचार्चने ९. क-ख—कुर्यात् स्य दक्षिण १०. क-ख—आद्वारस्थे. नां यथाक्रमम्
११. ग-घ—विष्टजित् १२ ग-घ—वर्धमान द्विलक्षणम् १३ क-ख—सर्वशेषे ..नित्ये

# अथ सप्तत्रिंशोऽध्यायः

**श्रीभगवानुवाच—**

एवं कृत्वा यथाशास्त्रं दिव्यमब्जज वै पुरा। पित्र्यं तदनु वै कुर्याद्विधिदृष्टेन कर्मणा॥ १ ॥

**पौष्कर उवाच—**

ज्ञातुमिच्छामि भगवन् कथं त्वच्छासनस्थितैः। समुद्दिश्य पितृश्राद्धं कार्यमाचार्यपूर्वकैः ॥ २ ॥
केषां केषां च तत् कार्यं कस्य कस्य च कीदृशम्। विदधाति पञ्च पञ्चैव[?] सम्यनिर्वर्तितं हि यत्॥

**श्रीभगवानुवाच—**

कर्तव्यत्वेन वै कुर्यात् कर्मसन्यासिनां सदा। निर्वाणदीक्षितानां च भक्तानामपि चाब्जज ॥४॥
अनिर्दिष्टक्रमाणां च चतुर्थाश्रमिणां तु वै। भगवत्पदलिप्सूनां [१] ज्ञानिनां च तथैव हि॥५॥
प्रीतये मन्त्रसिद्धानां साधकानां तु पौष्कर। शुभजन्माप्तये शश्वन्मन्त्रसांमुख्यसिद्धये ॥ ६ ॥
कार्यं तत्पुत्रकाणां तु कृपया देशिकादिकैः। कुर्याद्वै समयज्ञानां नित्यं सद्धर्मवृद्धये ॥ ७ ॥
भूयस्सुजन्मलाभाय सद्विद्याधिगमाय च। बान्धवानामतोऽन्येषां भक्तानामेवमेव हि ॥ ८ ॥
सद्यो दुष्कृतशान्त्यर्थं कृपया नित्यमाचरेत्। कर्तोना [१] कर्मसन्यासी परिवृद्धो व्रताश्रयी ॥ ९ ॥
[२]न निर्वाणपदं नीतो [३]दीक्षायां भोगलालसः। तीव्रभावं विना यस्तु न सिद्धो मन्त्रसेवनात्॥
निस्सन्तानोऽपि वै मन्त्री न याति सिद्धिगोचरम्। नूनमेतद्द्विजश्रेष्ठ सन्मार्गस्थैः क्रियापरैः॥
सत्कर्तव्यप्रकारेण त्वनुग्राह्यास्सदैव हि। समासाद्यात्र[?] संयाति यथा दिव्यं परं पदम्॥ १२ ॥
आतस्तु[?] दीक्षितानां च सर्वेषां सामयाजिनाम्। अवक्तव्यं च वक्तव्यमेतन्निर्वर्तनाय च॥ १३ ॥
श्राद्धकाले तु वै मुक्त्वा तैरप्यन्यत्र पद्मज। मन्त्रमुद्राक्रिया[४]ध्यानमज्ञानादिक्रियां विना॥
नाभ्यस्तव्या न योक्तव्या भक्तैस्सामयिकादिभिः। समाश्रित्य निमित्तं वै देशकालादिकं द्विज॥
क्रियते यत् पितॄणां च भवत्यनृणवान् नरः। [५]प्रयाति तृप्तिमतुलां नेन कर्पवशादपि ॥ १६ ॥
आगते गतिमायान्ति श्राद्धादाह्लादसंयुताम्। सकृद्वैकं तु बहुधा कालमादेहलक्षणम्॥ १७ ॥

१. ग-घ—यतीना   १. ग-घ—ननिर्वाणपद तीच   ३. ग-घ—दीक्षयाभोग
४. क-ख—ध्यान...   ५. क-ख—प्रया...श्राद्धादाह्लादसंयुताम्

[1]युक्तं तिथिगणेनैव वात्सरीयेण पौष्कर। [2]क्षेत्राप्तिपूर्वेणान्नेन सन्निमित्तगणेन तु ॥ १८ ॥
संसारदुःखशान्त्यर्थं दुष्कृतक्षपणाय च। [3]व्यक्ते चेन्द्रियचक्रस्य त्वौर्ध्वदेहिकमाचरेत् ॥ १९ ॥
वासनादेहमाश्रित्य[4] दुःखजं दुष्कृतं हि यत्। [5]सर्वेद्यनन्तकल्पं च कर्मात्मा ये[5] यतोऽब्जज ॥
अतो भूतमयं देहं समनन्तरमस्य वै। दुःखोपलम्भनं कल्पं यस्मात् कमलसंभव ॥ २१ ॥
दुःखेन शाम्यते दुःखं [6]सन्यस्कन्धगते[6] यथा। [7]स्कन्धाद्गुरुतरं भारं नृणां दुष्कृतकारिणाम्॥
निद्राक्रान्तस्वपिण्डाद्वै यथा निर्गत्य पौष्कर। वासनादेहमाश्रित्य नानाचेष्टां करोति च ॥ २३ ॥
भूतपिण्डं विना तासां न शान्तिमनुविन्दति। एवमन्नाश्रितं पूर्वं [8]प्राणमिन्द्रियसंग्रहम् ॥२४॥
व्यक्तीकृतं [9]न वै देव[9] देहभावेन देहिनाम्। तावत् कर्मक्षयं तेषां कथमेति महामते॥ २५ ॥
अन्तस्तदुपचारार्थं ज्ञानपूर्वेण कर्मणा। संपाद्य यद्वशाच्छीघ्रमनन्तं सुखमेधते ॥ २६ ॥
सामान्यं वैष्णवानां च गुर्वादीनां विशेषतः। साधारस्संप्रधानाख्यस्साम्प्रतं विधिरुच्यते ॥२७॥
निमन्त्रितं वा संप्राप्तं नित्यमङ्गीकृतं त्वथ। द्विजेन्द्रं पञ्चकालज्ञं षट्कर्मनिरतं तु वा ॥ २८ ॥
स्नानादिना पुरा कृत्वा प्रयतस्संविशेत् पुनः। स्वयमर्घ्याम्बुना विप्र पवित्रीकृत्य पाणिना ॥२९॥
सन्ताड्य कुसुमास्त्रेण मन्त्रास्त्राधिष्ठितेन च। समुद्धरन्नेत्रमन्त्रं मन्त्रार्थाधिष्ठितेन च ॥ ३० ॥
समुच्चरन्नेत्रमन्त्रमवलोक्याथ कद्विति[?]। [10]निवेद्य भगवत्यग्रे प्रणवाधिष्ठितासने ॥ ३१ ॥
पूजिते वितते पूते संमुखं [11]वोत्तराननम्। [12]उदक् दिग्वीक्षमाणं च विनिवेश्य तथा च तत् ॥
यथा मन्त्रेशदिग्रश्मिप्रसरेणाभिविध्यते। मन्त्रेणाराध्य तं ध्यात्वा ब्रूयात् संयतवाग्भव ॥ ३३ ॥
समाधाय जगन्नाथं हृत्पद्मगगनेऽर्कवत्। [13]सत्पात्रस्याथ पात्राणां पात्राभ्यां वाऽब्जसंभव ॥
एवं कृत्वा प्रतिष्ठानं [14]प्राग्यत्नेनात्र कर्मणि। समुद्दिश्य पितॄन् दद्याद्दानमन्तरवेदिकम् ॥३५॥
निवेशितं द्विजेन्द्रं यद् [15]वृत्तिस्थमपि मन्त्रराट्। अन्तर्वेदी तु सा ज्ञेया त्वाभ्यामभ्यन्तरं हि तत्॥
संप्रदानं पितॄणां यत् कुर्यात् सत्पात्रपिण्डकम्। तद्दिव्यममलं यस्माच्चैतन्य[16]मवलंब्यते ॥३७॥
तत्कालं संविभज्याश्च तिष्ठंति कमलोद्भव। प्रदातृसङ्कल्प[17]वशाद्दत्तं पुष्करसंभव ॥ ३८ ॥
एकस्य वा [18]बहूनां वा प्रदद्यादासनोपरि। पुनर्गवासनं दार्भमग्रन्थि बहुभिः कुशैः ॥ ३९ ॥

---

१. ग-घ—युक्तानिधिगणेनैव २. क-ख—"क्षेत्राप्ति" "संसार" इत्याद्यर्धद्वयं गलितम् ३. क-ख—व्यक्ते द्वे त्रियचक्रस्य ४. क-ख—माश्रित्य दुष्कृतम् ५. क-ख—सर्वेत्र ..ब्जज ६. क-ख—सन्यस्कन्धगतये यथा ७. क-ख—.. रङ्गारम ८. क-ख—प्रणवमिन्द्रिय ९. ग-घ—नवैदेयदेह १०. ग-घ—निवेश्य ११. क-ख—वोत्तरासनम् १२. क-ख—उदक् .. क्षमाणम् १३. ग-घ—सत्पात्रस्याशु पात्राभ्यां पात्राणाम् १४. क-ख—प्रयत्नेनात्र १५. क-ख—व्यक्तिस्थ १६. ग-ग—चैतन्यमवलम्ब्य वै १७. क-ख—वशाद्दत्तः १८. क-ख—बहूनां तु

विभोर्यज्ञाङ्गदेहस्य लोमानि तु कुशास्स्मृताः। ता एव नाडयस्स[1]र्वास्तस्य भूतशरीरगाः॥ ४०॥
[2]रश्मयो भूतदेहे तु चिन्मूर्तेश्शक्तयोऽखिलाः। अत एव हि विप्रेन्द्र पितॄणां तु कुशासनम्॥
श्राद्धकाले तु [3]विहित माहूतानां तदूर्ध्वतः। यत्किञ्चिद्दीयते [4]भक्त्या ब्रह्मभूतं तु तद्भवेत्॥
पुरा वै हेतुनाऽनेन [5]नृणामविदितात्मनाम्। कर्मण्यत्र कुशाजालं विहितं कमलोद्भव॥ ४३॥
येषां सर्वगतं ब्रह्मन् मन्त्ररूपीश्वरोऽच्युतः। भावस्थतत्वतस्ताभिस्तेषां[6] वै न [7]प्रयोजनम्॥
अथास्त्रपरिजप्तेन भूतिनावात्मशङ्कुना। मसृणेनाश्मचूर्णेन परिघाम्य यथाऽथवा॥ ४५॥
बहिस्तदासने कार्या त्वग्रे दैर्घ्याच्छमाधिका। वैपुल्याच्छममानं तु प्राग्वत् पावनतां नयेत्॥
न्यसेत्तत्राप्यभग्नाग्रानुदङ्मूलान् कुशान् द्विज। यस्माद्दिव्यमुदग्भागं पित्र्यं दक्षिणसंज्ञकम्॥४७॥
स्वकेनामृतवीर्येण नित्यं संवर्धयन्ति च। दर्भमार्गच्छलेनैव पितॄणां तेऽमरान द्विज॥ ४८॥
वसत्यन्तःपितृगणो भागमाश्रित्य दक्षिणम्। चित्कलांशस्वरूपेण [8]नृणामेवं हि चोत्तरे॥ ४९॥
कृतास्पदामला [9]नित्या त्वमृताख्याऽक्षया कला। अत एवं हि यत्किञ्चिदाब्रह्मविदितैर्द्विज॥
प्रदीयते पितॄणां च तत् सव्येन तु पाणिना। [10]येऽधिकृत्य जगद्योनि मन्त्रात्मानमजं हरिम्॥
प्रयच्छन्ति पितॄणां च तोयतर्पणपूर्वकम्। तेषां तदाश्रयत्वाच्च [11]यदुक्तं न न कारणम्॥५२॥
कर्तव्यस्य च पारम्यं प्रकृतस्य महामते। स्फुरत्यन्तर्गतं येषां मन्त्राराधनपूर्वकम्॥ ५३॥
तत् स्वोत्तरवशाद्येषां मन्त्रसांमुख्यदिग्वशात्। चेतसा निर्विकल्पेन कृतं भवति चाक्षयम्॥५४॥
किन्तु पुष्करसम्भूत दुर्लभा भुवि चेतनाः। इति चेतसि वै येषां निश्चयीकृत्य वर्तते॥ ५५॥
सत्यतामुपनीये तु ह्येव न्यस्ते कुशाचये। तिलांस्तथास्त्रजप्तांश्च तदूर्ध्वे विकिरेत् पुनः॥ ५६॥
[12]कुरुविन्दस्तु दर्भाग्रैर्यस्मादेतद्वयं द्विज। सर्वस्य भोगजालस्य जनकं [13]भुवनत्रये॥ ५७॥
विशेषात् पितृदेवस्य श्रद्धापूतस्य वस्तुनः। अग्नीषोमस्वरूपेण शान्त्यात्मा भगवान् स्वयम्॥
व्यक्तः कर्मात्मक(त)त्वानां मूर्तित्वेनात्मसिद्धये। स पित्र्यस्य[14] च दिव्यस्य व्यापारस्यातिवृद्धये॥
तत्तेजस्तिलभावेन ह्लादो [15]वर्तत्यपात्मना। अत एवाप्रबुद्धानां प्रबुद्धानामपि द्विज॥ ६०॥
[16]तिलोदकेन भावं तु गच्छतश्श्राद्धकर्मणि। श्राद्धस्य च परा रक्षा ते द्वे नित्यममन्त्रिणाम्॥
तत्स्वरूपविदां चैव विशेषो मन्त्रवेदिनाम्। [17]न्यस्तास्त्राण्यभिजप्तानि[18] तत्र पात्राणि विन्यसेत्॥

---

१ **क-ख**—सर्वास्तस्य २. **क-ख**—रश्मयो सोथ देह **ग-घ**—बोधदेह ३. **क-ख**—विहितमतानन्तमुम त. ४ **क-ख**—भक्त्या... ५ **क-ख**—नृणा ६ **क-ख**—स्तेषाञ्चै ७. क्वचित्—नैव प्रयोजन इति पाठः ८. **क-ख**—नृणामेव हि ९. **क-ख**— निला-स्त्वमृताद्याक्षया कला. १०. **क-ख**— . जगद्योनिम् ११. **ग-घ**—नानकारणम् १२. **ग-घ**—कुरुविन्दावस्तु १३ **ग-घ**—भुवनत्रयम् १४. **क-ख**—स्यच प्यस्य १५. "त्यबात्मना" इति साधु १६: **ग-घ**—तिलोदकोङ्गभाव तु १७. **क-ख**— भिजप्ता. तत्र १८. **ग-घ**—ताम्रपात्राणि

[1]तत्राद्यं चक्रवृत्तानि हेमाद्युत्थानि सम्भवे। [2]पालाशकदलीपत्रतमालच्छदनान्यथ॥ ६३॥
पुटान्यस्त्राम्बुशुद्धानि शुभपर्णमयानि च। पादयोरपि पाद्यार्थं कं क्षिपे[3]द्दक्षिणादितः॥ ६४॥
आमूर्धमर्चयेत् पश्चादर्घ्यपुष्पानुलेपनैः। वस्त्रस्रग्धूपदीपैस्तु दध्यन्नं फलवारिणा॥ ६५॥
सताम्बूलेन वित्तेन यथाशक्ति महामते। समुद्दिश्य पितॄन् सर्वान् [4]सनाभीयान् यथाक्रमम्॥
शब्दभावस्वरूपास्तु[5] ज्ञवृत्तिस्थानविग्रहान्। बहुत्वे सति विप्राणां पितॄणामेवमाचरेत्॥ ६७॥
यत्र द्विजद्वयं विप्र पित्रर्थं विनिवेशितम्। एकस्मिन् स्वपितॄणां तु तदा कार्यश्च सन्निधिः॥
द्वितीये जननीयानां तथाऽन्येषां तु संस्थितिम्। सर्वेषामेकमाप्तं तु [6]तृप्तये यदि योजितम्॥६९॥
ओमाद्यमस्मच्छब्दं तु पितृभ्यस्तदनन्तरम्। इदमर्घ्यमिदं पाद्यं तदन्ते[7] संस्मरेत् स्वधाम्॥७०॥
सर्वस्मिन्नुपचारान्ते ह्येवं वा [8]संस्मरन् नरम्। नमस्स्वधाऽथवा ब्रूयान्नमोन्तां त्वथवा स्वधाम्॥
एवमेव हि यः कुर्यात् कर्तव्यत्वेन पौष्कर। तुल्यानां च सकुल्यानां नमस्तत्र च केवलम्॥७२॥
सत्युक्ते व्यत्यये नित्यं विहितं च स्वधा द्विज। स्वयमेव हि सन्यासी ददाति च फलार्थिनाम्॥
कार्यस्तेन नमस्कारस्स्वधान्ते नित्यमेव हि। ददाति फलकामस्तु यो नित्यफलमर्थिनाम्॥ ७४॥
स्वधाकारावसाने तु हितं तस्य सदा नमः। एवमिच्छावशेनैव संविभज्य पितॄन् द्विज॥७५॥
पृष्ट्वा पात्रमुखेनैव सतृप्तिं च पुनः पुनः। ततोऽम्भश्चुलकं पाणौ ह्नन्मन्त्रेणामृतोपमम॥ ७६॥
दद्यात् पूर्णेन्दुतुल्यं तद्ध्यातव्यं तत्कलाः पठन्। सानुस्वारमकाराद्यैर्भिन्नं षोडशभिस्स्वरैः॥७७॥
त्वङ्कारनतिनिष्ठं च तत्र प्राक्स्थमसतारकम्। इत्युक्तं सकलस्येन्दोर्वाचकं मन्त्रमब्जज॥ ७८॥
पाणिप्रक्षाळनात्पूर्वं पातव्यं तेन पूर्ववत्। येनामृतपुटान्तस्थमन्तर्वीर्यमनश्वरम॥ ७९॥
भवत्याप्यायकृद्ब्रह्मन् पितृदेवगणस्य च। माषचूर्णादिना पाणिं प्रक्षाल्यामणिबन्धनात्॥ ८०॥
समाचम्योपसंहृत्य ह्युच्छिष्टं तु यथाविधि। पवित्रीकृत्य वसुधां पाणौ कृत्वा तिलोदकम्॥८१॥
प्रीणनं भगवत्यग्रेसमुत्थायाचरेत ततः। तवास्तु [9]भगवन् पूर्वः प्रीतः पितृगणस्तथा॥ ८२॥
शारीरो देवताव्यूह अ(आ)पादा(द्यो)द्या व्यवस्थितः। एवं सुवितते [10]कुर्यात् कर्मत्वाराधनालये॥
सङ्कटे पुनरन्यत्र यायादभ्यर्च्य मन्त्रराट्। स्थानं संस्कारसंशुद्धं कृत्वा प्राक्ताडनादिना॥८४॥
[11]व्याप्तिशक्त्याश्रितं भूयस्तोयाधारगतं स्मरेत्। [12]मन्त्रमर्चनपूर्वं तु तदग्रे सर्वमाचरेत्॥८५॥
[13]पात्राघ्राणपरेणैव तत्पात्रस्थेन भावयेत्। मधुयुक्तेन हविषा दर्भकाण्डैस्तिलैस्सह॥ ८६॥

---

१. क-ख—तत्राद्य. कवृत्तानि २. क-ख—पात्राणि कदलीपत्र ३. ग-घ—दक्षिणादिना ४. क-ख—सताभि...न्यथाक्रमम् ५. क-ख—आवृत्ति ६. ग-घ—त्रयोजयति ७. क-ख—तदन्ते स्व स्मरेत् ८. ग-घ—संस्मरेन्ममम् ? ९. क-ख—भगवन् पूर्वप्रीतः पितृ १०. क-ख—कुर्या...नालये ग-घ—राधनेलये ११. ग-घ—व्याप्तिशक्त्याश्रियम् १२. क-ख—"मन्त्रमर्चन" इत्याद्यर्धं लुप्तम् १३. क-ख—पात्राघ्राणपरेणैव...भावयेत् ग-घ—पात्राग्रेण परेणैव

निर्दोषं वह्निना कृत्वा हृदा दर्भाग्रकेण तु। ध्यात्वा धाम द्रुमाकारं ज्ञस्वभावं महत् प्रभम् ॥८८॥
द्रव्यदोषगणं कृत्स्नं निर्दहन्तं समन्ततः। देवतानां पितॄणां [१]यत् तृप्तयेऽन्नं महामते ॥ ८९ ॥
तत् साधनं च विहितं संस्कृतेन पुराऽग्निना। द्वाभ्यां देशिकपूर्वाभ्यामेतद्विषयमब्जज ॥ ९० ॥
प्रदापनमतोऽन्येषां तत्कालं तस्य वै हितम्। सदैव विधिनाऽनेन तदर्थं शुभसिद्धये ॥ ९१ ॥
एकस्याश्रयबीजस्य नानाकर्मवशात्तु वै। नानात्वं भावयेद्बुद्ध्या पितृकर्मण्यतः पुरा ॥ ९२ ॥
तेनैव [२]तर्पणीयं तत् स्वयम्भूता तदात्मना। [३]मत्प्रवाहवदन्तस्थो भावयेदन्नपात्रगौ ॥ ९३ ॥
अर्हणाग्राहगर्भौ तु द्वौ दर्भौ तालसम्मितौ। हृन्मन्त्रमन्त्रितौ कृत्वा ताभ्यां सह समुद्धरेत् ॥
रसरूपस्वभावं तत् स्थ(स्थू)लत्वेनान्नतां गतम्। चतुरङ्गुलमात्रं तु ग्रासं ग्रासं महामते ॥९५॥
अग्नीषोमाश्रयस्थस्य पूर्वं पितृगणस्य च। [४]पितॄणां बीजभूतस्य ज्ञस्वभावस्य तत्त्वतः[५] ॥ ९६ ॥
दद्यात् पिण्डद्वयं चैव त्वग्नीषोमसमुद्भवम्। नाडीस्वरूपो [६]तौ दर्भौ पिण्डेन सह तत्र वै ॥
लयं नीत्वा द्वितीयेन व्यवहारधियां ततः। [७]पितॄणां कल्पयेत् तेन पिण्डान्यन्येन साम्प्रतम् ॥
क्रमेण प्रागदृष्टानां हृदा संज्ञापदेन तु। एवं दृष्टस्वरूपं च ज्ञात्वा तेषां स्थितिं स्फुटम् ॥ ९९ ॥
प्राग्वत् स्वधावसानाद्यैर्मन्त्रैरोङ्कारपूर्वकैः। हृन्मन्त्रालङ्कृतैर्विप्र तदा संज्ञापदान्वितैः ॥ १०० ॥
पिण्डं प्रकल्पयामीति ततः पूर्ववदाचरेत्। अञ्जनाभ्यञ्जनाद्यैस्तु ह्युपचारैः प्रपूजनम् ॥ १०१ ॥
क्रमेण तर्पणं कुर्यात् सतिलैश्चाम्भसा ततः। [८]शिरसा वनते[८] कृत्वा [९]जानुपादौ क्षितौ गतौ ॥
पाणियुग्मे ललाटस्थे एकचित्तः पठेदिमम्। ओं नमो वः पितरो नमो वः पुरुषोत्तम ॥ १०३ ॥
नमो विष्णुपदस्थेभ्यस्स्वधा[१०] वः पितरो नमः। हरये पितृनाथाय ह्यग्नीषोमात्मने नमः ॥१०४॥
सत्सोमपात्मने विष्णो नमो बर्हिषदात्मने। आसंसाराभिजनका अग्निष्वात्ता अथाच्युत ॥१०५॥
पितामहास्सोमपास्त्वं त्वमन्ये प्रपितामहाः। तुभ्यं नमो भगवते पितृमूर्तेऽच्युताय च ॥ १०६ ॥
नारायणाय हंसाय विष्णो त्रिपुरुषात्मने। मुक्त्वा त्वामेव भगवन् न नमाम्यर्च[११]यामि च ॥
[१२]न तर्पयामि सर्वेश नान्यमावाहयाम्यहम्। स्तुत्वैवं हि पितृव्यूहं भक्त्या परमया पुनः ॥

१. क-ख—यत्तृप्त... २. ग-घ—तर्पणीयस्स्वयम् ३. क-ख—...प्रवाहदन्तस्थौ ४. क-ख—इदमर्धं लुप्तम् ५. ग—कोशे "तत्वतः" इत्यनन्तरं "दद्यात्" इत्यक्षराणि सन्ति पश्चात् "अन्यत् पिण्डद्वयम्" इत्याद्यर्धमस्ति, तेनेदमुल्लिख्यमानं नासमञ्जसं भवति—"अन्यत् पिण्डद्वयम्" इत्यत्र अन्यत् पदस्थाने दद्यात् इति पदस्य योजने कृते वाक्यं पूर्णं भवति. दद्यादिति पदेन विना न वाक्यार्थः पूर्यते किं च 'तत्वतः' इत्यनन्तरं प्रक्रान्तस्य अर्धस्यादौ अन्यत् पिण्डद्वयम्" इति अन्यत् इत्यस्य अन्यात् इति विकृतवर्णन्यासो दृश्यते तेन लेखकदोषात् दद्यात् इत्यस्य अन्यात् इत्यक्षरविकृतिः, इति सुधियः प्रमाणम्
६. ग-घ—स्वरूपौ द्वौ दर्भौ ७. क-ख-ग-घ—वीणां वा कल्पयेत् ८. क-ख—शिरसाप्रनतं
९. क-ख—जानुपादक्षितौ गतौ १०. क-ख—स्वधात्वापितरः ११. क-ख—र्चयाम्यहम्
१२. क-ख—इदमर्धं लुप्तम्

संभवे सति सन्धानं पिण्डमूर्तेस्समाचरेत्। तदग्रतोपविष्टस्य क्रमात् पितृगणस्य च ॥ १०९ ॥
अनुसन्धाय वै द्वाभ्यामेकस्मिन् वा द्विजोत्तम। ऊष्माग्रावस्थितं ध्यात्वा पित्र्यं पितृगणं क्रमात् ॥
प्रणवेन स्वरूपं तु समुत्थाय ततस्स्वयम्। मध्यतिर्यक्स्थितौ [१]स्थित्वा ह्यदूरं नान्यदक्स्थितैः ॥
उत्तराभिमुखैश्चैव दक्षिणस्याथवा द्विज तदुत्तगननवशाद् हृन्मन्त्रं हृदयान्न्यसेत् ॥ ११२ ॥
[२]नमोऽन्तं प्रणवाद्यं तु मरुदम्बरविग्रहम्। पिण्डाग्रे ह्युपविष्टस्य [३]प्राणशक्तिं[३] द्विजस्य वा ॥
बहूनां वा प्रयत्नेन स्वातन्त्र्यान्निर्गतां बहिः। ध्यात्वा तया सह क्षिप्रमेकीभूतत्वमागतम् ॥
[४]आत्मशक्तौ लयं नीत्वा [५]यदि ह्यूष्माख्यलक्षणा। कृत्वैवं प्राणसङ्घं च पितृणां विप्रविग्रहे ॥
प्राग्वदासनसंरुद्धे भोजयेत्[६] पूर्ववत् ततः। ओं नयत्वमृतायान्नमिदं विष्णुपुरस्सराः ॥ ११६ ॥
देवा नद्यस्तथा गावस्सूर्यस्सोमो वनस्पतिः। ओं माधवोऽथ भगवान् मन्त्रमूर्तिमयो महान् ॥
[७]मधुभावेन वोऽन्यस्मिन् स्थित्वा तृप्तिं करोतु वै। अनुज्झितासनं कुर्यात् पितृणां प्रीणनाय च ॥
तस्मिन्नेवास्मि[८] भूभागे [८]वस्त्वा तत्पिण्डविक्षितौ[८]। स्थितिस्सर्वे पितृणां च साम्प्रतं कमलासन ॥
यावत् प्राणविमुक्तानां पिण्डानां नोपसंहृतिः। सोच्छिष्टानां कृता सम्यक् तदन्ते संव्रजन्ति ते ॥
स्वस्थानामाशिषं दत्त्वा श्राद्धकर्तुर्धिया द्विज। सामृतं सोदकं स्थानं सतिलं मन्त्रतेजसा ॥
विविक्तं विवृतं मार्गं पुनरागमनाय च। नारायणाख्यसन्मन्त्रकर्म[९]ब्रह्मजवीकृते ॥ १२२ ॥
स्वे स्वेन्द्रियरथे कृत्वा तृप्ता याताच्युतास्पदम्। प्राजापत्यमिदं प्रोक्तं सम्प्रदायसमन्वितम् ॥
सम्प्रदानं पितृणां च पूर्वोक्तफलवर्धनम्। समाचरेत् सदा व्यूह्य मन्त्राणां मन्त्रकर्मणा ॥१२४॥
नित्यं बहुत्वे द्वित्वे वा प्रयोगं कमलोद्भव। यद्येतदप्यनङ्गं च तदा वै प्रतिकर्मणि ॥१२५॥
हृदाद्यङ्गाङ्गतो योज्यमङ्गि पूर्ववदब्जज। [१०]आराध्यानामनेत्राणामोङ्कारस्तत्क्रियान्तरे ॥ १२६ ॥
अस्मिन्नर्थे विकारस्तु[११] य उक्तो मन्त्रपूर्वकः। [१२]समयः पुत्रकादीनामन्येषां भावितात्मनाम् ॥
[१३]गुरोश्च साधकेन्द्रस्य मन्त्रो मम महामते। प्रदाने स विरुद्धश्च त्वत्तोऽ[१४]न्यस्त्वविरुद्धकृत् ॥
समयी पुत्रकादीनां वैष्णवानामपि द्विज। चतुर्णां मौद्गलान्तानां तथैवाश्रमिणां तु वै ॥१२९॥
दीक्षया संस्कृतानां च दीक्षितानां महामुने। [१५]सामान्यस्त्वथ सर्वत्र साङ्गस्सिद्धस्सुपूजितः ॥

---

१. **क–ख**—स्थित्वा नान्य २. **ग–घ**—नमोन्त. प्रणवाद्यन्त ३. **ग–घ**—प्राण-शक्तौ द्विजस्य ४. **क–ख**—कूर्मशक्तौ ५. **ग–घ**—यानिह्यूष्माख्य ६. क्वचित् पितृर्पिण इति ७. **ग–घ**—मधुभावेन वान्यस्मिन् ८. **ग–घ**—वस्वतत्पिण्डवीक्षितौ ९. **क–ख**—ब्रह्मजपी-कृते १० **ग–घ**—आराध्यानामनेणामोङ्कार ११. **क–ख–ग–घ**—स्तु यमुक्तोमन्त्र. १२. **ग–घ**—समयी पुत्रकादीनाम् १३ **क–ख**—गुरो...साधक **ग–घ**—गुरोर्वा १४. **क–ख**—न्यस्य...रुकृत् १५ **क–ख**—मामान्य त्वथ

तेषां यश्चोपदेष्टव्यो मन्त्रव्यूहो हि तं शृणु। सद्वादशाक्षरो मन्त्रः कवचं ब्रह्मणे नमः ॥१३१॥
एवं विश्वात्मने नेत्रमस्त्रं च परमात्मने। एते सप्रणवास्सर्वे शूद्राणां योग्यतावशात् ॥ १३२ ॥
सम्यग्वा दीक्षितानां च नेषां वै प्रणवोज्झिताः। [1]विहिता[1] च यथा स्त्रीणां सदाचारवशात्तु वै॥
असम्यक् प्रतिपन्नानां शूद्राणां तु महामते। न खण्डयेत्तु मन्त्राणां नमस्कारो भवेत् पुनः॥
[2]सजाते द्वादशार्णस्य तद्वदष्टाक्षरस्य च। [3]षडक्षरस्य वै पूर्वं प्रयोज्यं पूरणार्थतः॥ १३५ ॥
[4]यदा त्वभिहितोऽष्टार्णे त्वष्टार्णेनावतारितः। [5]मुख्यता द्वादशार्णस्य मन्त्रस्य विहिता तदा॥
षडक्षरस्य [6]मुख्यत्वं भवेद्भाववशादपि। योज्यस्त्वष्टाक्षरो मन्त्रो नित्यमेव शिखावधौ॥ १३७ ॥
[7]प्रणवस्य च मुख्यत्वं द्विषडष्टषडक्षराः। मन्त्रा हृदयपूर्वास्तु परिज्ञेयास्ततः क्रमात् ॥ १३८ ॥
मन्त्राणां वर्मपूर्वाणां वाच्यत्वं यदि कल्प्यते। तदात्मता च विहिता तत्स्थाने प्रणवस्य च॥
[8]देवो जितंतामन्त्रेण चित्तस्थस्सन्निधीकृतः। योक्तव्यं तत्र चाङ्गानां मन्त्रषट्कं यथा स्थितम्॥
द्वादशाक्षरपूर्वं तु तृतीयं यत् प्रकीर्तितम्। तृतीयं ब्रह्मपूर्वं तु [9]धर्मादीनां हि वाचकम्॥
प्रणवस्सर्वमन्त्राणामितश्वासनकर्मणि। द्वादशाक्षरपूर्वाणां मन्त्रसामान्यकर्मणाम् ॥ १४२ ॥
दर्भातिलोदकादीनां द्रव्याणां प्रतिकर्मणि। [10]जायते च विसृष्टानामुपशान्तिश्च तैजसी॥
अत एवोपयुक्तानां भोगानां कमलोद्भव। विरुद्धसंग्रहो [11]भूयस्त्वन्यस्मिन् हि क्रियान्तरे॥
गौणी व्यक्तिर्यतस्तेषामामूलाच्चिदधिष्ठिता। वर्तते परमाश्रित्य तत् कर्तुः फलसिद्धये ॥ १४५ ॥
चित्सामान्यविनिर्मुक्ता ह्ययोग्यास्ते शरीरवत्। मन्त्राणां स्थायिनो भागा यान्ति वै योग्यतां पुनः॥
कदाचिन्मन्त्रसामर्थ्यात् ज्ञानभावनया द्विज। (इति नित्यश्राद्धविधि.)

—अथ नैमित्तिकश्राद्धविधि —

नैमित्तकमतश्श्राद्धविधानमवधारय। गतिप्रदं पितॄणां यत् कर्मणां [12]सिद्धिभूरिदम् ॥१४७॥
सद्यस्सत्पात्रसंप्राप्तिं विना नैव समाचरेत्। [13]एवमाद्यैर्विनिर्मुक्तं श्राद्धमब्जसमुद्भव ॥ १४८ ॥
तिष्ठत्यनुग्रहार्थं च यदि संप्रार्थितं हि यत्। तदा नियममातिष्ठे[14] .काष्ठादनादिकम् ॥१४९॥
मानमात्सर्यकार्पण्यक्रोधलोभादयोऽखिलाः। [15]दोषा दूरतरे त्याज्या ह्यानिष्पत्तिदिनावधि॥
शुद्धिपूर्वेण विधिना सुप्रयत्नेन चेतसा। प्रदत्तं फलमूलाद्यं भवेत् तदमृताधिकम् ॥ १५१ ॥

१. **क-ख**—ताचतथा २ **ग-घ**—स छान्ते ३ **क-ख**—षडक्षरस्यैव पूर्वम् ४. **क-ख**— . वतारित. ५. **ग-घ**--मूर्ध्वताद्वादश ६. **क-ख**—मुख्यत्वा. वशादपि ७. **क-ख**— रा. ८. **क-ख**—देवांजि कृता. ९. **ग-घ**—सर्वादीनाम् १०. **क-ख**—जायते च...मुप ११. **क-ख**—भूयस्त्वन्यस्त्वहिंनिक्रियान्तरे १२ **क-ख**—सिद्धिद.. १३. **क-ख**—एवमादिर्विनि १४ **ग-घ**—निष्ठमरकाष्ठा १५ **क-ख**—दोषा. प . रे त्याज्या

देशपात्र[1]वशेनैव संपत्तौ सति पद्मज। एकाहात् सप्तरात्रं तु श्रद्धया तत् समाचरेत्॥ १५२ ॥
समाश्रित्य शुभं कालमेकाहं कमलोद्भव। निर्वर्त्य परया प्रीत्या नैति कालं यथाऽन्यथा ॥१५३॥
त्रयमाश्रित्य ते श्राद्ध सानुकम्पेन चेतसा। सत्त्वस्थेन कृतं शक्त्या शुद्धेन द्रविणेन च ॥१५४॥
नयत्यवश्यमचिरात् सत्यलोकं तदर्थितम्। देशकालकृतं त्वेतत् तपोलोकं ददाति च ॥ १५५ ॥
देशपात्राश्रितं श्राद्धं जन (नो) लोकं ददाति च। फलं महर्लोकगतिं कालपात्रवशात् कृतम्॥
केवलं देशमासाद्य दत्तं स्वर्गं प्रयच्छति। कृतं यत् कालमाश्रित्य [2]भुवर्लोकं द्विजायते? ॥
सौम्यपात्राश्रितं श्राद्धं तद्भूर्लोकगतिप्रदम्। सामान्यस्य च देशादेस्त्रितयस्य[3] फलं त्विदम्॥
तत्र पुष्कर पुष्टिं हि प्रसिद्धं[4] देहमब्जज। कालं ग्राह्योपरागाद्यं[5] पात्रं तन्मयमब्जज॥१५९॥
तथा नियमवान् सम्यक् श्राद्धहेतोर्न चान्यथा। यदुक्तं त्रितयं श्राद्धे सविशेषं हि तत् पुनः॥
भवत्युत्तारकं नृणां सविज्ञानेन जन्मना। प्रसिद्धया वैष्णवं देशं पात्रस्तद्भगवन्मया ? ॥ १६१ ॥
द्वादश्याख्यो बृहत्कालस्सङ्क्रान्त्याद्यैः परिष्कृतम्। त्रयमेतन्महाबुद्धे सविशेषतरं यदि ॥१६२॥
भवत्युत्तारकं नूनं देहान्तरनिवासिनाम्। स्वयंव्यक्तेन विभुना त्वेकमूर्त्यादिनाऽब्जज॥ १६३ ॥
अधिष्ठितं हि सर्गादावेकदेशात् सहाम्बुना ?। तद्विशेषान्तरं देशं सिद्धिकृत् सर्वकर्मणाम्॥
तस्मिन् द्विजोचिते काले द्वादश्याख्ये भवेद्यदि। समुहूर्तं सनक्षत्रं वैष्णवं तेन तद्भवेत्॥
[6]प्रोत्तारकं पितृणां च सव्य' बाहुसमन्वितम्। सम्यक्सिद्धित्रयोपेतं पञ्चकालपरायणम्॥
[7]लब्धलक्षं परे तत्त्वे पात्रमेकायनं द्विज। [8]संयमाद्यैरुपेतं च तन्महार्थायनात्तु वै॥ १६९ ॥
पितृणां सुगतिप्राप्तिरशश्वदेव हि जायते। वेतं च तं महावेगात्तु? .. जायते॥ १६८ ॥
देशे शुभे शुभं जन्म ज्ञानसत्कर्मणा सह। फलं शुभतरान् भिन्नान् पितृणां त्रितयात् क्रमात्॥
[9]ज्ञात्वैवं श्राद्धदाने तु [10]देशकालादयो गुणाः। [11]चित्तशुद्धि समेताश्च समासन्नाः प्रसन्नतः॥
एतदस्त्रादिना सर्वमुपकारं हि कर्मणाम्। केवलं भक्तिपूतानां लोकधर्मरतात्मनाम्॥ १७१ ॥
ज्ञानकर्मरतानां च द्विजानामधिकारिणाम्। पञ्चकालरतानां च स्वकर्मण्यब्जसंभव॥ १७२ ॥
[12]यान्ति ? व्याघारमन्त्रेण परिक्राम्यन वै ततः?। प्रबन्धब्रह्मत्रर्णत्वं ? तेषां तद्भगवान् हरिः॥
षाड्गुण्यविग्रहो देवः प्रभवाप्ययकृत् स्वयम्। [13]गुणमुक्तसमूहेन स्वरूपादच्युतेन च॥ १७४ ॥

१ क-ख—वशेनैव . . . सतो पति पद्विज २. ग-घ—भुवलोकाद्विजायते ३. क-ख—यस्य फल .. ४. ग-घ—देशमब्जज ५. क-ख—पात्र तम. . मब्जज ६. क-ख—प्रोत्तारक ..न्वितम् ७. ग-घ—लब्धलक्ष्म परे ८. क-ख—अर्धद्वय गलितम् ९. क-ख—ज्ञात्वे-वाश्रद्दधानेतु १०. क-ख—समासान्याः प्रसन्नत. ११. क-ख—इदमर्धं लुप्तम् १२. क-ख—यान्ती व्याघारमत्रेण पराकम्यन १३. ग-घ—गुणमूर्तसमूहेन

कालादीनां समुत्थानं षाड्गुण्यादत एव हि। न विन्दन्ति परत्वेन ते [1]चान्यस्याच्युतं विना॥
कालादेस्सूक्ष्मभूतस्य त्वाश्रयस्यामलस्य च। अतोऽन्यद्भगवद्भक्तास्तन्मन्त्रज्ञानतत्पराः॥ १७६॥
तेषां कमलसंभूत कालाद्यमखिलं हि यत्। सर्वमन्तस्थितं भाति तत्प्रभाववशात् स्फुटम्॥
बहिरन्तरवच्चापि [2]यस्मादेतदधीश्व....। [3]विश्वस्य चापि देहत्वं पुरा ते संप्रकाशितम्॥१७८॥
[4]अध्वोपदेशद्वारेण विस्तरेण त एव हि। देहज्ञं सत्क्रियानिष्ठं ज्ञानिनं वैष्णवं स्थिरम्॥१७९॥
इच्छन्त्युत्तारकं शुद्धं पितरस्स्वकुले पुमान्। [5]देशकालादयस्त्वेवमाश्रित्य प्रयतस्स्वयम्॥१८०॥
निस्तुषैरुज्ज्वलैश्शुद्धैस्सक्षीरैरब्जसंभव। सद्व्यञ्जनसमोपेतं संसाद्य श्रद्धया पुरा॥ १८१॥
हृदा वा द्वादशार्णेन भाण्डेष्वभिनवेषु वै। विनिर्गतेषु वा पाकाद् भूयस्स्नेहोक्षितेष्वथ॥१८२॥
एवं वा साधनीयं च [6]पुत्रशिष्यात्मना द्विज। [7]भगिन्या धर्मसा? पत्न्या सुहृत्सम्बन्धवर्त्मना॥
[8]शुक्लांबरधरेणैव दक्षेण शुचिनाऽऽत्मना। [9]शारीरव्याधिहीनेन क्षुत्तृष्णाविगतेन च॥ १८४॥
[10]श्वासश्वास .स्वभावाथ दृक्श्रुतिहीनखर्वटैः। एवं [11]विमुक्तदोषेण भावभक्तिपरेण च॥
संसाधनीयं श्राद्धार्थं स्वजातीयेन वै चरुः। अनुलोमेन विहितं वर्णानां [12]चरुसाधनम्॥१८६॥
दिव्ये पित्र्येऽब्जसंभूत प्रतिलोमश्च दोषकृत्। [13]तदलाभात् क्रयक्रीतमदुष्टं कारुका शुचिम्?॥
पूर्वोक्तदोषनिर्मुक्तं तेनापि कमलोद्भव। अपिक्षयविधूनां वा' लौल्यैकनिरतात्मनाम्॥ १८८॥
रजस्वलानां षण्डानां [14]ऋत्वार्दीनां विशेषतः। श्वानसूकरमार्जारमर्कटानां तथैव हि॥ १८९॥
विड्वराहशिवागृध्रपूर्वाणां तु स्वचारिणाम्। तस्मात् [15]सर्वप्रयत्नेन निवातस्थगिताम्बरे॥ १९०॥
निश्शल्ये कुट्टिमे भूयस्सुलिप्ते [16]धवलीकृते। स्थाने मन्त्रार्चनं देवपितृदेवस्य साधनम्॥ १९१॥
विहितं चैव सर्वेषां संभवे सति सर्वदा। [17]अन्नव्यञ्जनभाण्डानां सर्वेषां क्रमशो द्विज॥१९२॥
अन्तश्चराम्भकाले? तु मध्वाज्यै[18]स्सकुशास्तिलाः। क्षेप्तव्या द्वादशार्णेन भूयस्सिद्धेन संग्रहे॥
अष्टार्णेनाथ वस्त्रेण स्थगयेत् तान् प्रयत्नतः। यथा न बहिरन्योत्थं [19]बाष्पं निर्याति पद्मज॥

१. ग-घ—ते चान्यस्ता. २. ग—यस्मादे . विधीश्वका घ—यस्मादेशविधीश्वकाः ३. क-ख— ...स्यचापि ४. क-ख—अर्धोपदेशचारेण ५. क-ख—कालादय. . माश्रित्य ६. क-ख—पुत्रशिष्या .. ज ७. क-ख—भटिन्यधर्म.. पत्न्यासुहृत्सद्भवात्मना ८. क—इदमर्धं गलितम् घ—शुक्लाबरधरेणैव भावभक्तिपरेण च। ससाधनीय श्राद्धार्थं स्वजातीयेन वै चरु. ख—इदमर्धत्रय लक्षम् ९. क-ख—शरीरव्याधिहीनेषु १०. क-ख—कास ..वातदृक् ..श्रु...वकैः ११. क-ख—दोषो...परेण च १२. क-ख—वर्णाना चारुसाधनम् १३. क-ख—तदलाभात्... कारुकां शुचम् १४. ग-घ—मत्वादीनाम् १५. क-ख—यत्नेन पातिस्थगितांबरे १६. ग-घ—यमलीकृते १७. क-ख—अन्नव्यञ्जन १८. क-ख—मध्वाज्यै... १९. क-ख—बाष्प ना...

[1]ऊर्ध्वपुंड्रे कृते लिप्ते क्षालिते [2]स्थलिकाचये। वर्मणा वाससा च्छन्ने मर्यादाभ्यन्तरीकृते ॥
रक्षपालं च तत्पङ्क्तौ दत्त्वा [3]स्नानाद्यमाचरेत्। [4]अग्नेर्विप्रमवासानां? पूजास्थानस्य पौष्कर ॥
भाण्डानां भागपूर्वाणां सत्सहायगणस्य च। विनियोगं पुरा कृत्वा पूर्णान्तं नित्यमाचरेत् ॥
अपा. . ..... .नात् प्रतिशाटकम्। तस्याधश्शाटिकायां तु विभुयात्? तनुवेष्टनम् ॥१९८॥
[5]अभूतं विमलं स्वच्छं... सूतं? वल्कलादिकम्। नीलाञ्चितं? च यत्किञ्चिद्ध्रियते चाम्बरादिकम्॥
सर्वत्र विषयां चैव? त्वपास्य भुवनाद्बहिः। ततो धियाऽभिसन्धाय मन्त्रमूर्तिगतं परम् ॥२००॥
[6]यजाम्यनुग्रहार्थं च पितॄणां पुनरेव हि। निवेश्य प्राग्वदाहूय ह्यासनेषु [7]क्रमाद् द्विजान् ॥
तेभ्यः [8]प्रागाननौ पूर्वं निवेश्यौ द्वौ द्विजोत्तमौ। द्वादशारो धरो धाम [9]त्रितयाधिष्ठितासने ॥
[10]अथोक्तान् सर्वसोमान्यान् षडङ्गा[11]द्विजवास्वरा?। अस्त्रमन्त्रशिखायुक्तः[12]क्रमाद्वि. ..षडन्वितम्॥
नियोज्य प्राङ्मुखस्थाभ्यां देहतादात्म्यताश्रये। स्ववाचकेन सद्धाम्नो ह्येकमूर्त्यादिकात्मना ॥
न्यस्तव्यं देवताव्यूहं [13]फड्वौषट्कारसंयुतम्। नृसिंहाख्यं सवाराहं मन्त्रमूर्तिद्वयं हि यत् ॥
[14]अग्नीषोमाख्यदैवत्यं रक्षार्थं सर्वदैव हि। [15]अवीक्षयन्नुदग्भागं अतोऽन्ये विनिवेश्य च ॥
तत्रादौ हृदयादीनामधःपङ्क्तौ निवेश्य च। दशा सद्वर्णजानां तु सद्धानामेवमेव हि ॥ २०७ ॥
तस्य दक्षिणतश्चोर्ध्वे [16]जननीयकुलस्य च। कवचेनापरं योज्यमेकान्तं भगवन्मयम ॥ २०८ ॥
पितृनाम्ना च [17] .तस्य दक्षिणतस्ततः। तृतीयमासिकारी? च चतुर्थं हृदयेन तु ॥ २०९ ॥
पितामहाभिधानेन मूर्तिमन्त्रेण पञ्चमम। प्रपितामहनाम्ना वै योज्यमेकायनं द्विज ॥ २१० ॥
जनके जीवभावेन तदतीतत्रयं क्रमात्। [18]निवेशनीयं तैर्मन्त्रैर्वर्तने च [19]द्वयं क्रमात् ॥२११॥
प्रपितामहपूर्वं तु समतीतत्रयं न्यसेत। सामान्येन षडङ्गेन त्वेवमुक्तं स्वकेन वा ॥ २१२ ॥
मन्त्रेण श्राद्धदाने तु विनियोगं द्विजार्चने। चतुर्मूर्ताधिकारेण द्विधावस्थमथोच्यते ॥ २१३ ॥
सभोगमपवर्गं च मन्त्रैकस्मादवाप्यते। कैवल्यं केवलं चैव द्वितीयादमलेक्षण ॥ २१४ ॥
ससुहृन्मन्त्रवर्गस्य [20]न्यसेदव्यक्तमन्त्रराट्। त्रयाणां वासुदेवान्तं प्रद्युम्नाद्यमतः क्रमात् ॥

१. क-ख— .किके क्षिसे २. क-ख—स्थलिकाद्वये ३. क-ख—स्नानाद्यमाश्रमा ४. क-ख— . जास्नानस्य ५. क-ख—अ.. स्वच्छम् ६. क-ख— . र्थं च ७. ग-घ—क्रमात् द्विज ८. क-ख—प्रागाननोपू . निवेश्यौ ग-घ—प्रागानने पूर्वम् ९ क-ख—त्रिधाया-धिष्ठिता १०. क-ख—यथोक्तान.. षडङ्गा ११. ग-घ—द्विजवास्वकान १२ घ—क्रमाद्विन्यो-षडन्वितम् १३. क-ख—फड्वौषट्कसमायुतम १४. क-ख—अग्नीषोमस्य दैवत्यम १५. क-ख—अधिक्षयन्तदिग्भागम् १६. क-ख—जननीयत्रिकस्य च १७. क-ख—श्रुतसा.. तस्य ग-घ—श्रितस्य १८. क-ख—निवेशनीय यन्त्रैर्मन्त्रैः १९. क-ख—द्वय... २०. क-ख—न्यस्सदव्यक्त

न तद्वै सविशेषं च पुनरेव. ..मे शृणु। सुहृत्प्रपूर्वमिश्राणामनि[1] रुद्धं हि वाचकम्॥ २१६ ॥
प्रद्युम्नमन्त्रवर्गस्य [2]कामाद् द्वाभ्यां द्वयं ततः। प्रणवेन परं ब्रह्मस्वरूपं प्रपितामहम्॥ २१७ ॥
मह(ता तन्मु)दाप्तमुखेनैव तर्पणं यन्महामते। नवमूर्त्यधिकारेण त्रिप्रकारमथोच्यते॥ २१८ ॥
समित्राणां च वात्सल्याद् द्विजानां विष्णुना न्यसेत्। ततो वैराजमन्त्रेण मातृवर्गस्य पौष्कर ॥
त्रिभिर्नारायणाद्यैस्तु पित्रादीनां त्रयं क्रमात्। विद्धि विद्धाख्यमेतद्धि श्राद्ध(श्रद्धा)ज्ञानं[2] फलप्रदम्॥
पितॄणां यजमानस्य देहलाभे[3]विनैव हि। वैराजमन्त्रादारभ्य [4]साङ्कर्षणान्तमब्जज॥ २२१ ॥
[5]समन्त्रपञ्चकं विद्धि .. .... .। प्रपितामहनिष्ठानां यत्तच्छ्राद्धं हि पौष्कर॥ २२२ ॥
प्रयच्छत्यात्मलाभं तु श्राद्धकर्तुः पितृष्वपि। आधाराणां ..मन्त्राद्वै............॥ २२३ ॥
नियोजनं द्विजेन्द्राणां पञ्चानां श्राद्धकर्मणि। मित्रवर्गात् समारभ्य परमेतद्धि [6]वैश्वरम्॥
[7]सामग्रीभिस्समोपेतं कर्तुः पितृगणस्य च। [8]परं यच्छति निर्वाणं सकृत्स्नं हि च[8] किं पुनः॥
कालमाजीवितंविप्र श्रद्धापूतेन चेतसा। कृपया च समानानां संभवे सति पौष्कर॥ २२६॥
काम्येऽस्मिञ्श्राद्ध[9]दाने तु पङ्क्त्या नाऽन्यत्र योजयेत्। समूहमेकं पूर्वं तु विप्राणामुत्तराननम्॥
[10]हृन्मन्त्रेणाब्जसंभूत सर्वेषां विन्यसेत् ततः। प्रणवेन स्वनाम्ना च[11] ज्ञात........हृदादिषु॥
[12]अस्त्रभूषणहेतीश पूर्वमन्त्रान् सगोचरे। एवं वा प्राङ्मुखं शक्त्या चक्रमन्त्रेण योजयेत्॥
[13]विप्रमेकमुदग्वक्त्रं मुख्यमन्त्रेण योजयेत्। द्वयं चोदङ्मुखं तत्र हृन्मन्त्रेणानुसन्ध्य च॥ २३०॥
सुहृन्मित्रं द्विवेतं तु[8] मातृवंशमथाब्जज। [14]पितृवंशं हि निश्शेषं स्मरेद्परदेहगम्॥ २३१ ॥
मण्डले त्वम्बुपात्रस्थं चक्रं वा नृहरिं यजेत्। [विप्रमेकमुदग्वक्त्रं मुख्यमन्त्रेण विन्यसेत्॥]
तृप्तये पितृवर्गस्य यथा मातृकुलस्य च। सर्वं जन[15]मतोऽन्येषां प्रीतये च स्वशक्तितः॥ २३३॥
[16]गवा ग्रासं समुद्धृत्य दद्याद् घृतमधुप्लुतम्। [17]दर्भैस्तिलोदकैर्मिश्रं न क्षारं लवणोत्कटम्॥
आत्मवंशाधिकारेण कुर्यादेवमतोऽन्यथा। पौरोहित्येन कृपया प्रीत्या वाऽन्यस्य कस्य चित्॥
निर्वर्तने तदीयं हि तत्पूर्वं विहितं [18]कुलम्। आपादाज्जानुपर्य[19]न्तमाजानोर्मध्यमस्तकम्॥

---

१. क-ख—मिश्राणा नि ..श्र ..द्धम् २. क-ख—कामात्...न्तकः ३. ग-घ—लाभेन्विहेव हि ४. ग-घ—सङ्कर्षणावसानिकम् ५. क-ख—"समन्त्रपञ्चकम्" इत्यारभ्य, . इत्यन्त अर्धचतुष्टय लुप्तम् ६. क-ख—वेश्वरः ७. क-ख—...भिस्समोपेतं .. योजयेत् ८. क-ख—...णच चतुस्तभ . किं पुनः ९. क-ख—श्राद्धदा... १०. क-ख—ब्रह्म.. ब्जसभूत ११. क-ख—ज्ञातयाद्वा...हृदादिषु ग-घ—ज्ञातायाद्वहृदादिषु १२. क-ख—"सर्वत्राभूषण हेति" १३. क-ख—इदमर्धं लुप्तम् १४. क-ख—पित्रिशनिहिनिश्शेष .. देहगम् १५. क-ख—मतो... प्रीतये... १६. क-ख—इदमर्ध लुप्तम् १७. क-ख—तिलोदकै...णोत्कटम् १८. क-ख—क्रमे १९. क-ख—पर्यन्तमा...मस्तकम्

[1]आवह्निमूर्ध्नो हृदयमाहृदो मस्तकावधि। अनिरुद्धादयो मन्त्राश्चत्वारो विनिवेश्य च ॥२३७॥
सुगतिप्राप्तये विप्र पितॄणां नित्यमेव हि। तृप्तये वासुदेवाद्यादामूर्ध्नस्त्वङ्घ्रिगोचरम् ॥ २३८ ॥
[2]चत्वारश्चानिरुद्धान्ता योक्तव्या वा महामते। [3]प्रणवेन हृदि ब्रह्मन् शान्तं संविन्मयं तु वा ॥
समीरानलतो[4]ऽयक्ष्माभूतानां व्यपकं क्रमात्। न्यस्तव्यं वासुदेवाद्यमध्यक्षान्तं चतुष्टयम् ॥२४०॥
अपेक्षयानिरुद्धाद्यं पृथिव्यादिचतुर्ष्वथ। रक्षार्थं नृहरिं न्यस्त्वा नवमूर्तेः परं द्विज ॥ २४१ ॥
मूर्धास्य[5]कण्ठहृन्नाभिगुह्यजानुद्वये त्वथ। पादयोः क्ष्माधरान्तं तु न्यस्तव्यं त्वष्टकं क्रमात् ॥
हृदम्बरे तु भगवान् वासुदेवोऽप्यधोक्षजः। क्ष्मान्तानां बुद्धिपूर्वाणां क्रमात् सङ्कर्षणादिकम् ॥
योक्तव्यमथवा विप्र पृथिव्यादिक्रमेण तु। [6]सप्तकं भूधराख्यं तु सङ्कर्षणान्तमेव हि ॥ २४४ ॥
[7]अथ चिद्धृत्त्वधिष्ठाने वासुदेवं तु भावयेत्। रसलोहितमांसानां मेदोमज्जास्थिषु द्विज ॥२४५॥
क्रमेण शुक्रधात्वन्तं न्यसेत् सङ्कर्षणादिकम्। सप्तकं च वराहान्त[8]माशुक्राद् द्वारसिद्धये ॥
वराहमन्त्रादारभ्य सङ्कर्षणान्तमब्जज। एवं दुष्टनिरासार्थं पूर्व[9]वत् पात्रकं न्यसेत् ॥ २४७ ॥
व्यापकत्वेन भगवान् बहिरभ्यन्तरे स्ववत्। जीववत् सांकर्षणं च बीजं हृत्कमलोदरे ॥ २४८ ॥
सृष्टिसंहारयोगेन सप्तकं धातुसप्तके।

### पौष्कर उवाच—

सामान्येन स्वमन्त्रेण सति सन्निहितेन वै। कारयो विग्रहे वृत्तौ [10]ज्वालन्ताभ्यन्तरे(यथा)तु वा ॥
[11]न्यासार्चनादिमुक्तानां मन्त्राणां युज्यते कथम्। विनियोगं [12]चतुर्णां वा नवानां मन्त्रकर्मणि ॥

### श्रीभगवानुवाच—

सषडङ्गो हि सामान्यस्सर्वेषां विहितस्सदा। [13]साधकस्य हि मन्त्रो हि विषमस्स्याद्विरोधकृत् ॥
[14]अनुज्ञातस्ससर्वस्य चातुरात्म्यादिकं हि यत्। गुरोरिच्छा स्वकीयाऽत्र स्वमन्त्रादौ महामते ॥
[15]तत्रापि हि विशेषाय श्राद्धे द्वाभ्यां स उच्यते। [16]मन्त्रग्रामे तु विन्यस्ते विप्राणामिच्छया पुरा ॥
स्वमन्त्रमुपसंहृत्य स्वधाम्ना [17]च धिया सता। ब्रह्मभावनया व्याप्त एवं कृत्वाऽऽश्रयादिकम् ॥

१. क-ख—आ.. मस्तकावधि २. क-ख—चत्वारश्च...योक्तव्या ३. क-ख—प्रणव . सविध तु वा ४. क-ख—तोयक्ष्मा.. व्यापकम् ५. क-ख—कण्ठ... ६. क-ख—... कन्धराख्य तु ७. क-ख—कथचि . धिष्ठाने ८. क-ख—माशुत्वाद्वार ९. ग-घ—पात्रग न्यसेत् १०. क-ख—ज्वलन्ता . वा ११. क-ख—न्यासा मुक्तानाम् १२. क-ख—चतुर्वे..... वा १३. क-ख—साध... १४. क-ख—अनुज्ञान ..चातु १५. क-ख—तत्रापि...श्राद्धे द्वाभ्यां सा... १६. क-ख— . या पुरा १७. क-ख—विधि...

यद्विप्रविग्रहे व्यस्तं मन्त्रव्यूहं तदात्मनि। १अ? थानियोजनीयं च क्षन्तु? तत्पाणिपूर्वकम् ॥
तत्रायं विहितं विप्र विशेषं तन्निबोधतु। व्यापकत्वेन भगवान् प्राक् सव्येतरयोस्ततः ॥ २५६ ॥
दक्षिणे करशाखासु द्वितीयं पञ्चसु न्यसेत्। तद्वन्द्वामे तृतीयं हि त्वङ्गुष्ठादिक्रमेण तु ॥२५७॥
२तलद्वये दक्षिणादावनिरुद्धमतो न्यसेत्। एकं वा वासुदेवान्तं न्यसेदिच्छावशेन तु ॥ २५८ ॥
यदा नवात्मा करयोस्तदङ्गुष्ठद्वयेऽच्युतः। अष्टकं च वराहान्तं प्राग्वदातर्जनैः क्रमात् ॥२५९॥
३वामतर्जननिष्ठं तु वासुदेवान्तमेव वा। स्वाहामध्योदितं कृत्वा पूजासारे? तथाऽ(र्चने)नले ॥
४हुतमप्यनलं भूतं प्राग्वत् पाव(न)कतां नयेत्। एवमिच्छावशेनैव मन्त्राणां परिवर्तनम् ॥
५स्वाराध्या नवनिष्ठानां श्राद्धकाले विरोधकृत्। एवं नियोजनं कृत्वा शिरसाऽभ्यर्च्य साम्प्रतम् ॥
सासनं पुष्पपात्रेण समूहं भगवन्मयम्। ६तन्मध्येम्मश्चलं चित्तं पञ्चेन्द्रियसमन्वितम ॥ २६३ ॥
कुर्यात्तां मन्त्र७पीठस्थं मध्ये यागेऽथवा हृदि। कालमाचमनान्तं (र्थं) तु मदनुग्रहकाम्यया ॥
सन्निधाने द्विजानां च विभोस्सज्वलनस्य च। ८आव्यं सुयन्त्रितेनैव सर्वज्ञेनापि जन्तुना ॥
एवं भूतैर्द्विजेन्द्रैस्तु (स्तै) बुद्धया तु सुविशुद्धया। ९श्रद्धेयमखिलं तस्य सानुकम्पेन चेतसा ॥
यस्मादब्जसमुद्भूत मानं यदुभयात्मकम्। नासकृत् सर्वभावानां विशेषाच्छ्राद्धकर्मणि ॥२६७॥
१०समये . योज्यं तत् पूरण सर्वकर्मणाम्। पावनं तृप्तिजननं किं पुनः पितृकर्मणि ॥ २६८ ॥
आदाय मनसा ११मान्त्रीमाज्ञां वै शिरसा सह। हार्दमासाद्य वै श्राद्धं द्रव्योत्थं यद्वशाद् द्विज ॥
सफलं स्यात् पितॄणां तु ज्ञानमूलं हि तत्त्वतः। अन्यथा हेतुना १२केन पितॄणां तद्गतिप्रदम् ॥
१३मूलं विना क्ष्मां नाभ्येति पादपानां यथा तथा। ज्ञानमाह्लादपूर्वेण फलत्याशु च कर्मणा ॥
कारणं सर्वेन्द्रियग्रामं बहिर्वृत्तिगतं हि यत्। स्वयमात्मनि संलीनं कृत्वा हृत्कमलाम्बरे ॥
स्वभावगतया संपूर्य समाम्ने साम्प्रतं तु तत्। स्वरूपाद्वन्दनं कुर्याद्विभोस्सर्वेश्वरस्य च ॥२७३॥
शान्तसंवित्स्वरूपस्य स्पन्दानन्दमयात्मनः। तवाच्युतं हि चित् स्पन्दं स्वयं परिणतं स्मरेत् ॥
सहस्रशशिसूर्याग्निप्रभया प्रोज्वलं स्थिरम्। १४मरीचिचक्रसंपूर्णचिद्गर्भं सर्वतोमुखम् ॥२७५॥
१५चिदम्बरान्तरावस्थं सुशान्तं भगवत्पदम्। १६तच्छक्ति(तच्चित्र)ज्ञाननाडे वै विलक्षणतरं हि यत् ॥

१ क-ख—...पूर्वकम् २. क-ख—कुलद्वये दक्षिणादि नि ३. क-ख—वाम-तर्जन ..वान्तमेव वा ४. क-ख—हुतमप्यल प्राग्वत् ५. क-ख—ध्यानवनि . लेखरोधकृत् ६. क-ख—तन्मध्ये पञ्चेन्द्रिय ७ क-ख—क्रियताम् ८ क-ख—भाव्य सयन्त्रितेनैव ९. क-ख—श्रये ..खिलम् १०. क-ख— तत्पूरणम् ११. क-ख—मनसामन्त्री ज्ञाम् १२. क-ख—केन . णां तत्गतिप्रदम् १३. क-ख—मूल विना क्षानाभ्येति १४. क-ख—मरीचि .. चिद्गर्भ १५. क-ख—मिदम्बरा ग-घ—तदम्बरा १६. क-ख— ..विलक्षण

सरेन्मरीचिकोणस्थं स्वभावाह्लादपिण्डकम्। स्वकं पितृसमूहं तु स्फुरन्तं कर्मशान्तये ॥२७७॥
[1]महतः पावकाद्यद्वच्छक्तिर्दहनलक्षणा। [2]अङ्गारकणमाश्रित्य बाह्यमायाति पौष्कर ॥ २७८ ॥
[3]तद्वदेव हि निर्यातः किन्तु सङ्कल्पनिश्चयात्। अग्नीषोमौ [4]समाश्रित्य पितरश्चेश्वरेच्छया ॥
प्रकाशमन्त्रा[5]द्बाह्यं मायाकाशव....द्विज। क्रमेण [6]यत्ततस्त्वेषां सुखदुःखतरं तु वा ॥२८०॥
[7]मूलान्तःकरणेनैव सेन्द्रियेण समाब्जज। मायाकाश[8]वृतेनैव हृन्मन्त्रं भ्रामयेत्ततः ॥ २८१ ॥
तद्दुः(खमु)खादुपशान्त्यर्थं रश्मिरन्ध्रेण केनचित्। [9]ज्ञानतस्त्वरविन्दाक्ष तदाकाशावधेः पुनः ॥
तत्कालं तत्कुलोद्भूतमनुभाववशाद् द्विज। अग्नीषोमाश्रयस्थं च [10]चित्पिण्डं तत्तु वै क्रमात् ॥
[11]अन्तःकरणबीजं तु महामोहबलोज्झितम्। [12]ज्ञानान्तमंबरान्तस्थं सुसूक्ष्मं सततोदितम् ॥
[13]क्ष्मान्तं नारायणाद्यैस्तु ह्यध्यक्षान्तैरधि[14]ष्ठितम्। [15]प्राणब्रह्मावसानैर्वा वासुदेवादिकैः क्रमात् ॥
[16]बुद्ध्या व्याप्तैर्यथावस्थैः प्रभवस्थितिलक्षणैः। मन्त्राङ्गैर्ज्ञस्वरूपैर्वा पञ्चभिर्लोचनोज्झितैः ॥
यद्वशात् प्रतिपत्तिर्वै[17] कर्तुर्भवति सुस्फुटा। [18]सन्निवेशवशेनातो हार्देऽस्मिन् पितृतर्पणे ॥
[19]स्वानुष्ठानवशेनापि मन्त्राणामुदयान् स्मरन्। अमूर्तमथवा मूर्तमधिदैवव्यवस्थया ॥ २८८ ॥
चिद्बीजनिचयाधारव्यात्मकं यत् पुरोदितम्। [20] ..ताभिः संपूर्णमन्तःकरणशक्तिभिः ॥२८९॥
अभिन्नलक्षणेनैव प्रणवेन महामते। [21]ध्यायेच्चित्कर्णिकामध्ये भूमौ बीजत्वमागतम् ॥ २९० ॥
सतुर्यमपृथग्भूतै[22]स्सत्वाद्यैरनुपप्लुतम्। तस्माद्विनिर्गतं ध्यायेत् त्रितयेनाभिरञ्जितम् ॥ २९१ ॥
प्रपितामहसंज्ञं तु चैतन्यत्वेन पौष्कर। सुषुप्तिरूप(संज्ञ)ताप्राप्तमीषत्कालुष्यमागतम् ॥ २९२ ॥
[23]विश्रान्तं कर्णिकाकाशदेशे चिद्भास्करोदरे। तदुद्देशं ततस्तस्माच्चैतन्यान्निर्गतं स्मरेत् ॥ २९३ ॥
स्वेनान्तःकरणेनैव रञ्जितं [24]स्वं पितामहम्। एकारेण स्वनाम्ना च [25]स्वप्नेनाविष्वक्कृतस्य च ॥

---

१. **क–ख**—महत. फलकात् यद्वत् २. **क–ख**— ..कणमाश्रित्य बाह्य...पौष्कर ३. **क–ख**—तद्वदे वहि....कलनिश्चयात् ४. **क–ख**—समाश्रित्य...र्पात श्वरेच्छया ५. **क–ख**—बाह्य द्विज **ग–घ**—बाह्य मायाकाशवधद्विज ६. **क–ख**—यत्तत स्वेषा सुख.. **ग–घ**—यत्तत. सष्टां सुख ७. **क–ख**— .. समाब्जज ८. **क–ख**— ...वंतनैव . क. ९. **ग–घ**—ज्ञानतत्वांबरावस्वसत्व स्वरविन्दक्ष त धाकाशवधे पुन. १०. **क–ख**—चित्पिण्ड . क्रमात् ११. **क–ख**—अन्तःकरण .. १२. **क–ख**—ज्ञानान्तवा...सुसूक्ष्मम् १३. **क–ख**—क्षाद्य नारायणाद्यैस्तु .. धाक्षान्तै १४. **ग–घ**—क्षान्तैरनुष्ठितम् १५. **क–ख**—प्राण ब्रह्मवशानेमा १६. **क–ख**—बुध्याव्याप्ता...स्थैः १७. **क–ख**—ककुब्भवति १८. **क–ख**—सन्निवेश ..पितृतर्पणे १९. **क–ख**—...नुष्ठान .. २०. **क–ख**—प्रथम.. नाभि. सपूर्णमन्त.करणशुद्धिभि. **ग–घ**—पृथक् दन्तानि सपूर्ण २१. **क–ख**— ...बीजत्वमागम् २२. **क–ख**—सत्वोत्थैरनुपप्लवम् २३. **ग–घ**—सुज्ञान्तम् २४. **क–ख**—प्रपितामहम् २५. **क–ख**—स्वप्नान्तःकरणेन

संस्थितिं संस्मरेत्तस्य द्व्यात्मना माश्रितस्य च। चिदंशस्य च वैकण्ठ देशे नाभ्यन्तराम्बरे ॥
मनोबुद्धिरहङ्काररञ्जितं संस्मरेत्ततः। जाग्रेणाकूलिनैनैव पिता चैतन्यमब्जज ॥ २९६ ॥
[1]ब्रह्मनाड्यन्तराकाशे ब्रह्मरन्ध्रपथावनौ। ध्यात्मके जीवकोशे तु कारणे तुर्यलक्षणे॥ २९७ ॥
दैवत्यं वासुदेवं च साकारं वाऽर्कबिम्बवत्। तदात्मना च बोद्धव्यौ विबुधौ विश्वसंज्ञकौ ॥
[2]तन्मूलं हि यतस्सर्वं कर्मिणां पितृसंग्रहः। प्रपितामह[3]संज्ञं वै त्वधिष्ठायाथवा भवेत् ॥२९९॥
मध्याह्नभास्कराकारं मूर्तं वा [4]ज्ञानमूर्तिभृत्। पैतामहीयमेवं हि चैतन्यं कमलोद्भव ॥ ३००॥
प्रद्युम्नाधिष्ठितं ध्यायेत् स्वस्थानेन पुरोदितम्। पिताधिदेवतारूपमनिरुद्धमतस्स्मरेत् ॥ ३०१ ॥
मूर्ध्नि[5]च्छिद्रप्रवेशे तु अमूर्तं मूर्तमेव वा। आराध्य मन्त्रेणाढ्यं वा स्थानं कुर्यादधिष्ठितम् ॥
हृन्मन्त्रेणापरं विप्र शिरसा तत् परं तु तत्। शिखाधिदैवतं ध्यायेच्चतुर्थं सर्वदैव हि ॥ ३०३ ॥
शक्तिमन्त्रेण [6]तनुतीं हृन्मन्त्रानुगतां स्मरेत्। शिरसा सह चास्त्राख्यं शिखया सह लोचनम् ॥
नवमूर्तेश्चतुष्कं तु चिद्रूपं केवलं हृदि। सत्तामात्रस्वरूपाभिर्विभिन्नं गुणशक्तिभिः ॥ ३०५ ॥
ओं तत्सदिति चैतद्वत् कर्णिकागहनान्तरे। [7]व्यक्तं कण्ठावधोद्देशं कुर्या[8]द्गरुडगादिना ॥३०६॥
ब्रह्मरन्ध्रगतं ध्यायेत् सवराहनृकेसरि। भिन्नत्वे भेदबुद्ध्या तु यथैकस्मिन् हि जायते ॥
स्वभावशीतलं चोष्णं स्वादु भिन्नजलद्वयम्। एवं भोगाश्रये कुर्यादेतस्माद्व्यत्ययं हि ये ॥३०८॥
[9]ज्ञेयं तन्मोक्षदं विप्र नित्यमेवाफलार्थिनाम्। [10]तनुत्रास्त्रदृशो मन्त्राः हृदयान्मस्तकावधि ॥
न्यस्याधिदेवतात्वेन शक्तित्वेन हृदादयः। [11]ज्ञानादीनां हि वै यस्माद्वीर्यास्त्राणि बलादयः ॥
ते च षड् हृदयादीनि निर्णीतानि च वै पुरा। एवं कारणमूलं तु देहे पितृगणं क्रमात् ॥
[12]न्यस्त्वा मनीषितैरन्यैश्चिद्रूपैः पितृभिस्सह। [13]सन्तर्पणं ततः पार्श्वे विश्वेदेवपुरस्सरम् ॥
ज्ञलक्षणेन सन्तर्प्यौ प्रणवेन तु तौ पुरा। परमानन्दगर्भेण सहस्रशशिरश्मिना ॥ ३१३ ॥
हृदि प्राणकलामूले प्रोच्चरत् प्रणवं स्मरेत्। दुग्धबुद्बुदसङ्काशममृतं हिमशीतलम् ॥ ३१४ ॥
[14]तरसारतयं तं च ज्ञाननाडीक्रमं महत्। यमाश्रित्य च तिष्ठन्ति विश्वेदेवपुरस्सराः ॥३१५॥
पितरो भगवद्रूपास्साकारा वह्निराकृतिः। ब्रह्मरन्ध्रावधि यावद्विसर्पन्तं स्मरेत तत् ॥ ३१६ ॥

---

१. क-ख—ब्रह्मनाध्यानराकाशे २. क-ख—तन्मूल . कर्मिणाम् ३. क-ख—संज्ञावै ४. क-ख—मूर्त वा ज्ञानमूर्तहृत् ५. क-ख— चिद्रूपवेशे ६ क-ख—तनुतीं ब्रह्म ...नुगताम् ग-घ—मनुतिः हृन्मन्त्रानुगता स्फुरेत् ७. घ-घ—व्याप्त कण्ठा ८. ग-घ- -गगनोदरे ९. क-ख—जयन्त मोक्षदम् १०. क-ख—तनुत्रास्त्रमृगोमन्त्राः ११. क-ख—ज्ञानादीनां हि .. १२. क-ख—निस्त्वामनिष्ठिते १३. क-ख—सन्त...द्विश्वेदेव १४. क-ख—तारका रसयन्तश्च

संपूर्णेन्दुत्वमापन्नं [1]भावयेत्तत्र तद्द्विज । यत् पित्र्यदैवतं मन्त्रं ब्रह्मरन्ध्रोपरि स्थितम् ॥३१७॥
प्राणशक्तिर्ज्वलद्रूपा तदीया तच्छिरोपरि । सूर्यमण्डलमध्यस्था युगान्ताऽनलवत् स्मरेत् ॥३१८॥
[2]तत्तेजसावलीनं तद्ध्यायेन्मण्डलमामृतम् । [3]जनकीयकरन्ध्रेण प्रतिस्रोतीकृतं पुनः ॥ ३१९ ॥

(अत्र ग्रन्थपात इव)

मूलनिष्ठं क्रमाद्ध्यायेत् चेतसा निर्मलेन तु । [4]एवं गतपिपासार्थः प्राग्वदोङ्कारमुच्चरन्॥ ३२० ॥
तुर्यभूमिं तु पित्रादिलयध्यानधिया न येत् । इति भोगासये [5]कुर्याद् भूयो भूयो द्विजोत्तम ॥
पितॄणाममृतं श्राद्धं सर्वदुःखक्षयप्रदम् । प्रकाशाह्लादपिण्डस्थं कृत्वा पितृगणं तु वै ॥ ३२२ ॥
अन्तर्यामाम्बराद्यन्तं क्षीणसंस्कारलक्षणम् । आमूलादुल्लसन्तं च ऊर्ध्वदेहव्यपेक्षया ॥३२३॥
औदयेन क्रमेणैव सूर्यबिम्बमिवाम्बरे । तत् पुनर्विलयीकुर्याच्चन्द्रभावनया यथा ॥ ३२४ ॥
न रोगमायाति पुनः कर्मभूमौ सचित्फलः । एवं यत पातयेत् पिण्डं ब्रह्मक्षेत्रसमाश्रिते ॥३२५॥
अनन्ते विपुले पूर्णे चिद्रूपे त्वम्कुटं द्विज । स्ववंशोतारकं विद्धि ज्ञानकर्मपरायणम् ॥ ३२६ ॥
किन्त्वसौ दुर्लभो यस्य [6]भावनैषा हि तत्त्वतः । भगवद्भक्तिपूता (त्मा?) तन्मन्त्रैकपरायणः॥
प्रवर्तेताथ सिद्ध्यर्थं वाह्यतरश्राद्धकर्मणि । मन्त्रेशवह्निविप्राणां सन्निधाने यथाक्रमम् ॥ ३२८ ॥
[7]अभ्यर्थासनकर्माख्यं मन्त्रं यदवतारितम् । भगवन् पुण्डरीकाक्ष [8]पित्र्यं वर्गं हि मामकम् ॥
स्वयं श्राद्धात्मना भूत्वा प्रोद्धरस्व भवार्णवात् । भुङ्क्ष्व त्वं शक्तिनिष्ठेन स्वयं ज्ञानादिकेन वै ॥
करणेन बलाद्यं हि भोगजालं त्रिलक्षणम् । एवमभ्यर्थयित्वा च ह्यभिसन्धाय चेतसा ॥३३१॥
क्रमात् पितृगणं सर्वमिदमुच्चार्य वै ततः । ओं ओं ओं ओं पितॄणां च तृप्तये परमेश्वर ॥३३२॥
उत्तारणार्थमपि वै यजाम्योमां नमो नमः । सकृच्चतुर्धा नवधा त्विदमुच्चार्य चेतसा ॥ ३३३ ॥
स्मरन् बाह्याम्बरावस्थं विन्यस्तं यत् परात्मनि । ततो विभवतस्सर्वैरर्घ्यपाद्यपुरस्सरैः ॥ ३३४ ॥
भोगै[9]स्ताम्बूलपर्यन्तैर्मन्त्रनाथं यजेद् द्विज । तत्रेदं सर्वसामान्यं भोगोपादानकर्मणि ॥ ३३५ ॥
मन्त्रमुच्चारणीयं च श्राद्धदानेषु सर्वदा । ओं वौषडमृताभं तु बलवीर्यमयं त्विदम् ॥ ३३६ ॥

१. **क-ख**—"भावये . स्थितम्" इत्यन्त लुप्तम् २. **क-ख**—तत्तेजसा ..ध्यायेत् ३. **क-ख**—जनक.. चेतसा निर्मलेन तु **ग-घ**—जनकीयकरन्ध्रेण प्रतिस्रोतीकृत पुन. मूलनिष्ठं क्रमात् ध्यायेत् चेतसानिर्मलेन तु ४. **क-ख**—एव गतवित्रासास्तु...रमुचरन् ५. **क-ख**—कुर्यात् न.. यो यो ६. **क-ख**—भाव तेषाम् ७. **ग-घ**—अभ्यर्थासनग मुख्यम ८. पितृवर्गम् ९. **क-ख**—तांबूलचित्त...मन्त्र

तेजस्स्वभावममलं भोगं भुङ्क्ष्वो नमो नमः। नैवेद्यं विद्यमानं तु प्रोक्षयित्वा दृशा बृहत् ॥
एवं यद्बृहद्द्रव्यं पाणौ कृत्वा तु पात्रगम्। तथा चाविद्यमानं यन्मनसा वाद्य धारणा ॥३३८॥
पितॄणां तृप्तये ह्येवमिष्ट्वा मन्त्रेश्वरं ततः। ततारा' दर्भलोपे(भे)तं प्रदद्याद्देहसोदकम्॥ ३३९ ॥
[1]ओं नमोऽस्मत्पितृगणात् प्रीतो भव जगन्मय। तेषामस्त्विदमक्षय्यं यत् कृतं च त्वयाऽऽत्मसात्॥
[2]इति कर्तव्यता सा वै पैत्रं स्थानात्मना नयेत्। मन्त्रेशरोमकूपानामाशयं चोदयार्कवत् ॥३४१॥
बहिर्हृत्कमलोद्देशे स्मरेत् पितृगणं क्रमात्। अथान्तर्मानिष्ठं तु ह्यर्घ्याद्यैः [3]भोगसंचयैः॥३४२॥
द्रवत्पूर्णेन्दुधवलं मरीचिचयसंकुलम्। संविशन्तं स्वशक्त्या वै ध्यायेन्मन्त्रात्मनि स्थिते॥३४३॥
तेजोमये पितृव्यूहे पितृसङ्घं हि तत् पुनः। मध्याह्नार्कायुताभं च [4]संस्मरेद्वि(द्धि)स्फुरत्प्रभम्॥
तद्व्यापारे निवृत्तेऽथ रोम[5]रन्ध्रे शनैश्शनैः। [6]मन्त्रहृत्पुष्कराकाशमाक्रान्तं तैस्स्मरेत्तथा ॥३४५॥
[7]पीठसन्निहितं मन्त्रादादायेन्दुधिया ततः। यायाद[8]ग्निसमीपं तु ध्यायेत्तत्रोदितं प्रभुम॥ ३४६ ॥
सन्तर्प्य विधिना भक्त्या पूर्णान्तं मन्त्रराट् ततः। तत्रावाद्य श्वरुः प्राग्वत् तथा पिण्डार्थमोदनम्॥
मध्वाज्यतिलदर्भाणां संपुटे रजतान्विते। अभिमन्त्रितमाराध्यैन्नतन्तैस्ताडनादिभिः ॥ ३४८ ॥
नीत्वा निर्दोषतां पश्चात् स्थगयेदम्बरादिना। अथानुसन्धानपूर्वं साधारं त्वासनं यजेत् ॥३४९॥
क्रमात् कुशानामूर्ध्वं तु यथास्थानविभागशः। संसिच्य प्रणवेनाथ सतिलेन तु वारिणा ॥३५०॥
हेमपूर्वाणि [9]तत्राग्रे पात्राणि क्रमशो न्यसेत्। पित्राद्यनुक्रमेणैव त्वादावन्त्ये तदग्रतः ॥३५१॥
मन्त्रपूर्वेण नाम्ना तं सनमस्केन निक्षिपेत्। तिलास्त्वम्बुकुशा[10]ग्राणि विद्धि तेऽर्घ्यं पठन् क्रमात्॥
प्रपितामहपर्यन्तामेवं कृत्वार्घ्यकल्पनाम्। [11]कामोऽन्यस्मिन् श्राद्धदाने ह्येवमन्येष्वपि द्विज ॥
पूर्व[12]वन्नामगोत्रे तु ह्यर्घ्यमावाद्य पात्रगम्। पृथक् पृथग्वा पात्राणामासीनद्विजसङ्ख्यया ॥३५४॥
प्रकल्पितमथ स्वं स्वं नीत्वा सार्घ्यं तु भोजनम्। प्रपितामहनिष्ठानां पाणौ दद्यात् कुशान्वितम्॥
सावशेषं तथाऽन्येषां हस्तेऽर्घ्यं प्रतिपाद्य च। कुर्यात् सार्घ्योदकानां च [13]सुमर्यादानु चान्तरे॥
संस्थानं सर्वपात्रस्य दत्ते सार्घ्योदके सति। विप्रपाणिवृन्देनाथ तेन चार्घ्योदकेन तु॥ ३५७ ॥
विसृज्य नयने स्वे वै पात्रेऽन्यस्मिस्ततो द्विज। क्रमादाहृत्य तत्तोयं प्रयायादग्निसन्निधिम् ॥

---

१. क-ख-ग-घ—ओं त्वमस्मत् २. क-ख-ग-घ—अथेति कर्तव्यता ३. क-ख—भोगसक्षयम् ४. घ—सस्मरेद्धि स्मरन् प्रभुम् ५. क-ख—रोमरन्ध्रे ६. ग-घ—मन्त्रवाक् पुष्करा ७. क-ख— यज्ञा तत ८. क-ख यायादग्नि ९. ग-घ—तत्राधो ग-घ—त्वादावङ्गो तदग्रतः १०. क-ख—कुशाग्राणि पठन् ११. क-ख—कामान्यस्मिन् १२. पूर्ववन्नामगोत्रैस्तु १३. क-ख—सुमध्याचासु

ततस्तदग्रे तत्पात्रं तिलाम्बुपरिपूरितम्। कृत्वा तस्मिन् धिया ध्यायेद्विष्टरं परमेश्वरम् ॥३५९॥
संविभज्य पितृव्यूहं तत्रोङ्कारेण भावयेत्। विमलाम्बरसंस्थं तु यथा नक्षत्रसञ्चयम् ॥ ३६० ॥
तथा कमलसंभूत तस्मिन् पात्रान्तरे [1]स्थिते। [2]अपावन्यच्युताकाशे ह्लादवृत्तौ विभावयेत् ॥
अन्तस्सर्वेश्वरं देवं स्पन्दमानं स्वतेजसा। ततोऽर्घ्यैः कुसुमैर्गन्धैः कृत्वा तेषां पुरार्चनम् ॥३६२॥
मधुलिप्ते कुशाकाण्डे तत्र द्वे सलिले न्यसेत्। स्थगयित्वा परेणैव पात्रेण च कजेन तु ॥१६३॥
द्यावापृथिव्यौ ते पात्रे [3]योद्धव्ये द्विज पूरिते। निधाय चार्चयित्वा तु स्वोत्तरोत्तरमूलतः ॥
तासु सूक्ष्मपितृव्यक्ति प्रोच्चरेत् प्रणवं स्मरेत्। सामान्यचित्स्वरूपं तु तारशब्दैकतां गतम् ॥
स्ववृत्तिमार्गेणायातां रुद्धां कुर्यात् कुशासने। तत्रोदितक्रमेणैव प्रभावेन विभावयेत् ॥ ३६६ ॥
[4]क्वचिच्छब्दैकवृत्तौ तु पूर्वलक्षणलक्षिताम्। पङ्क्तीभूतां स्थितिं पैत्रीमनुमूर्ति प्रकाशिताम् ॥
तिलोदकेन संपूर्य अर्घ्यपात्रात् कराञ्जलिम्। [5]धारां सन्तानवद्दद्यात् क्रमात्तद्वै पठन् द्विज ॥
नाम प्रणवनिष्ठं तु एतत्ते [6]पाद्यमस्त्विति। ततोऽन्यपात्रमुत्पाद्य प्राग्वदग्नौ समर्पयेत् ॥ ३६९ ॥
रजतालंकृतेनैव सपवित्रेण पाणिना। व्यापकं चित्स्वरूपं तु धातुसप्तकमूर्तिभृत् ॥ ३७० ॥
ब्रह्मभावनयानन्तं निश्चयीकृत्य चेतसा। जीवानामिदमाधार[7]मिदमाप्यायनं परम् ॥ ३७१ ॥
संभवं च लयस्थानं परमानन्दलक्षणम्। अतस्तमादौ पात्रस्थमर्घ्यपुष्पानुलेपनैः ॥ ३७२ ॥
प्रणवेनार्चनीयं च तेनैवापाद्य वै ततः। पठंस्तमेव मनसा वर्तयेद्गोलकाकृतिम् ॥ ३७३ ॥
सर्वशक्त्यात्मकं यस्मात् सन्ति सर्वत्रतांखिलाम्[?]। गृह्णन्ति नियता मूर्तिं कर्मणां प्रतिपत्तये ॥
सनाभीयाननुग्राह्यानधिकृत्याखिलान् पितॄन्। यथाऽर्घ्यपूर्वैर्मन्त्रेशमिष्टं भोगैस्सुपुष्कलैः ॥३७५॥
तथाऽन्नमूर्तिमापन्नांस्तानपि क्रमशो यजेत्। अलकाद्यं हि वै भाण्डं पूरितं गालिताम्भसा ॥
मधुदर्भतिलोपेतं कृत्वाऽन्नं तत्र वै स्मरेत्। मन्त्रेशं चन्द्रबिम्बस्थममूर्तममितद्युतिम् ॥ ३७७ ॥
बहिस्स्वस्मिन्नुल्लसन्तं ध्यायेत्तेनांभसा सह। कुम्भादुत्कीर्यमाणेन निर्मलं शीतशीकरम् ॥३७८॥
आदायाथ कराभ्यां तु प्राक्क्लिन्नं मधुसंप्लुतम्। आपूर्यापूर्य चैकस्य श्रद्धया परया द्विज ॥
[9]तिलान् ...स्तेन भावनासहितेन च। पितॄणां क्रमशो दद्यात् तृप्तयेभस्तु मन्त्रितान् ॥ ३८० ॥
अथ प्राङ्मुखपूर्वाणां द्विजेन्द्राणां समाचरेत्। पूर्ववत सविशेषं हि स्वश्राद्धे श्रद्धयान्वितम् ॥
[10]सर्वाङ्गिकं क्रमाद्विप्र आपादान्मस्तकावधि। अर्घ्याम्बुमिश्रितैः पुष्पैश्चन्दनाद्यैर्विलेपनैः ॥

---

१. ग-घ—स्थिरे २. ग-घ—अपापान्यच्युताकेश ३. क-ख—योद्धव्ये बीजपूरिते ग-घ—वेद्धव्ये द्विज ४. क-ख—द्विशब्देरेकवृत्ते तु ५. क-ख—धारासन्दवद्द ६. ग-घ—पाद्यमोस्तुते (पाद्यमोस्त्विति) ७. क-ख—रदेवमाप्या ८. ग-घ—अलुकाद्यम् ९. ख—तिला...ना जलैस्तेन ग-घ—त्रिरन्तारलयस्तेन १०. क-ख—पूर्वाङ्गिकम्

ततस्स(स्तु)पक्षव्यजनैस्तेषामुद्बोध्य मारुतम्। निवेद्य विविधान् पश्चाद्वस्त्रान् धूपाधिवसितान्॥
ताताऽलंकृत्य वै शक्त्या कङ्कणाद्यैर्विभूषितैः। उपवीतान् सोत्तरीयान् दद्यात्तेषामनन्तरम्॥
शिरोमाल्यानि शुभ्राणि ततः कण्ठस्रजानि च। [1]दिव्यगन्धं ततः क्षोदं मूर्ध्नि कर्पूरमिश्रितम्॥
ततो निवेद्य वै तेषां नयनाञ्जनमुत्तमम्। दर्शयेद्दर्पणं पश्चात् पुरतः कुसुमान् क्षिपेत्॥ ३८६॥
सुगन्धधूपपूतेन ततस्तान् धूपयेत् क्रमात्। सुप्रकाशेन दीपेन पूजनीया महामते॥ ३८७॥
[2]उपानहौ. ..तेषां छत्राणि विविधानि च। [3]पादुकाः पादपीठानि आसनानि च तानि च॥
शयनानि विचित्राणि शिबिकाश्वादि चैव हि। कल्पनीयानि [4]सर्वेषां कृत्वा तद्रजतादि च॥
तन्मूलमथवा शक्त्या सर्वेषां विनिवेद्य(श्य)च। [5]समवायश्च साधारश्चेतसः परितुष्टये॥३९०॥
पुनरर्घ्योदकं पाणौ दत्त्वा मन्त्रं समुच्चरन्। कुर्यात् संपूजनं तेषां भगवद्यागवत् क्रमात्॥
मधुपर्केण चान्नेन श्रद्धया विविधेन च। भक्ष्यैस्सफलमूलैस्तु पावनैः पानकैस्ततः॥ ३९२॥
रसालाभिस्सुगन्धाभिः शृतेन पयसा सह। भक्षितश्चाग्रतस्सर्वमल्पकेषु पुटेषु वा॥ ३९३॥
प्रीतयेऽखिलविप्राणां समं कृत्वा निवेद्य च। प्राग्वदर्घ्योदकं पाणौ दद्यात् संप्राशनाय च॥
संस्मरन् मनसा मन्त्रं प्रतिपद्य द्विजाम्भसा। जपन् ध्यायंस्तथाऽस्त्रं च आस्तेऽग्रे नान्यमानसः॥
कलां वै तुष्टये तेषां सुखबोधमहाफलम्। [6]तपाधिकं? धर्मशास्त्रं मोक्षशास्त्र[7]मथोत्तमम्॥
[8]उद्घोषयन् गुणांस्त (द्य) .. यस्योपयुज्यते। निवेदनीयं तत्तस्य अथ तृप्ते द्विजे .॥ ३९७॥
पूर्ववच्चानुसन्धाने संपन्ने सति सर्वदा। कुर्यादुदकदानं तु भूयस्सन्तर्पयेद् द्विज॥ ३९८॥
पिण्डदानावशिष्टेन अन्नेन सह वारिणा। मधुपर्कतिलक्षीरैराज्यसव्यञ्जनेन च॥ ३९९॥
कराञ्जलिं च संपूर्य क्षिपेत् पिण्डं ततो बहिः। द्विजानामग्रतश्चापि सह चोदकधारया॥ ४००॥
क्षिपेदुत्तर[9]दिग्भागान्निर्नयेदन्तकास्पदम्। पवित्रकं परित्यागं कृत्वाऽथ प्रतिशाटकम्॥४०१॥
तद्वासः परिवर्त्याथ ऊर्ध्वं वा संस्मरन् हृदि। स्वमन्त्रेणाचमेत् पश्चाद् हृन्मन्त्रेणामलात्मना॥
संपन्नमस्तु भोस्सर्वं चोदयेदासनस्थितान्। द्विजान्[10] संयतचित्तांस्तु दद्यात् पूर्णाहुतिं ततः॥
[11]अथ पूर्ववदब्दानामाचर्तव्यं यथाक्रमम्। [12]प्राङ्मुखाभ्यां विना सर्वैराचर्तव्यमततः स्थितैः॥
दद्यात्ताभ्यां तदन्नेऽथ सर्वमुद्धृत्य चोदनम्। पात्रे सफलमूलं च मध्वाज्यतिलभावितम्॥

१. क-ख—द्रव्यगन्ध ..क्षोदम् २. क-ख—पानदेह . सुस्नेहात् ग-घ—उपानहोऽथ सुस्तेषाम् ३. क-पादुकाः .. ख-"पादुकाः इत्येतदर्धमारभ्य, भक्ष्यैः" इति पर्यन्त अर्धानामष्टक लुप्तम् ४. क-ख—सश्लेषाम् ५. ग—समवाय च साधारम् ६. ग-घ—तयादिक धर्मशास्त्रम् ७. क-ख—मथोत्तरम् ८. क-ख—उद्घोषयन् . ९. क-ख—दिग्भागम् १०. ग-घ—द्विजानां सयतश्चित्तान् ११. ग-घ—अथ पूर्ववदब्जाचमाचर्तव्यम् १२. क-ख—प्राङ्मुखा...

द्विजनां चोदनं कुर्याद् भुक्तशेषस्य साम्प्रतम्। उच्यतां विनियोगं भोः प्रब्रूयुस्ते ह्यनाकुलाः ॥
उद्धृतं त्वस्मदीयं वै भाण्डस्थं विभवेच्छया। अथ पैतामहीयं यत् पूजितं चान्नगोलकम् ॥
तस्मिन् [1]किंगेहमानीय [2]पृथक्कृत्य स्फुलिङ्गवत्। स्वदेहाद्रेचकेनैव त्वनुसन्धाय वै ततः ॥
ध्यात्वाऽमृतपुटान्तस्थममृतांशुसमं हृदा। कृत्वा द्विषट्कजसं तु प्रणताया द्विजेच्छया ॥४०९॥
प्रतिपाद्य स्वजायायाश्शेषं ब्राह्मणकाम्यया। विनियुज्योप[3]संहृत्य गोष्वापस्वा[?] द्विजानले ॥ ४१० ॥
[4]अंघट्[?] भोजनपात्राणां कृत्वा प्राग्ज्वलनं ततः। तत्र वा भगवत्यग्रे सतिलं [5]चोदकालकम् ॥
सहिरण्यं क्रमाद्दद्यात् पितृभ्यः प्रीणनाय च। रक्षयेच्च सृगालेभ्यस्सांप्रतं कमलोद्भव ॥ ४१२ ॥
पितृकर्मणि [6]मात्रेऽस्मिन् सम्यक् [7]स्थानक्रियात्मके। क्रिया[8]न्वैः प्रापणी पैण्डी निर्वर्त्या भोजनादनु ॥
[9]नाक्षय्यां वाचयेत् प्रीतिमुद्दिष्टेऽप्युदकक्रियाम्। न पूर्णाहुतिदानं च न चोदक् [10]परिवर्तनम् ॥
पैत्र्यं पात्रमथोद्धाय्य स्वमन्त्रं हृत्कुशेशयात्। [11]विरिच्य देवायान्तेन कल्पान्तार्कानलद्युति ॥
[12]तत्पात्रं गगनोद्देशे तद्दूरे (च) द्विषडङ्गुलात्। द्वादशान्तं हि तत्पित्र्यं पात्रादैक्यं यथाक्रमम्॥
[13]संपश्येत्तांश्च मन्त्रेशान् ध्यायेद् ध्यानधिया पितॄन्। [14]पातं हि साबलं तद्वन्निशि दीप्तानलाचलं ॥
एवमेकत्वमापन्नास्सह [15]मन्त्रेण तेन ते (ता.)। शशाङ्कशतसङ्काशमथ मन्त्रेश्वरं हरिम् ॥४१८॥
निरस्तावयवं ध्यात्वा शक्तयस्तत्र वैष्टराः। पितृव्यूहवदालीनं कृत्वा तदनु मन्त्रराट् ॥४१९॥
[16]आत्मसात् पितृमार्गेण [17]तत्र तेनोदकेन च। विसृज्य नयने भूयस्सपत्नीको द्दशाऽब्जज ॥
जलायैव च निक्षिप्य प्राग्दत्तं सह वारिणा। क्षान्तानलगतं देवं समासाद्यार्चनालयम् ॥४२१॥
मन्त्रेशमर्चयित्वा च पूर्ववत् प्रीणयेद् द्विज। ततस्तदुपसंहार कृत्वा भोजनमाचरेत् ॥ ४२२ ॥
बान्धवैस्सह मन्त्रेशं ध्यायन् हृत्पुष्करोदरे। यतवागमृतप्रख्यैर्ग्रासैस्तदनु पौष्कर ॥ ४२३ ॥
निरुच्छिष्टे तु भूभागे कृते संक्षालने ततः। सोदनं व्यञ्जनीयं [18]यद्दुःखा . ॥ ४२४ ॥
तमाहृत्यापरस्मिन् वै पात्रे दर्भतिलान्विते। [19]क्षिपेद्दीपद्वितीयं तद्बहिर्वै दक्षिणेन च ॥४२५॥
सरत्नमन्त्वं शुचौ देशे दत्वा दर्भान्तरं ततः। नयेद्धर्मकथाभिस्तु [20]योग्य ..निशाम् ॥ ४२६ ॥

१. ग–घ—किं देहमानीय २. क–ख—पृथक् ३. क–ख—सहृत्य . द्विज ४. क–ख— .. भोजन ५. ग–घ—चोदकालकम् ६ ग–घ—मात्रेण ७. क–ख—स्थानक्रियाय च ८. क–ख—यान्नै. पाणि निर्वर्त्या ९. क–ख—अक्षय्या वाचयेत् १० ग–घ—परिवर्तते ११. क–ख—विशो ..देवायान्तेन १२. क–ख—तत्पात्रे गगनोद्देशे षडङ्गुलात् १३. मविशोत्तांश्च क–ख—सवि . त्तांश्च मन्त्रेण .. १४. घ—पातर्ह्नासाबल यद्वत् १५. क–ख—[?]त्रेण . १६. ग–घ—आत्मसाचित्रमार्गेण १७. ग–घ—तदस्तेनोदकेनच १८. क–ख—यदुःखा .. ख—दुःखांवुध . वारिणा ग–घ—दुःखापूत च पाणिना १९. क–ख—क्षि... र्वैदक्षि २०. ग–घ—योग्याशेशैव वानिशाम्

इत्येवं विधिना श्राद्धं पितॄणां विहितं द्विज। संसारदुःखशमनमचिरादपवर्गदम् ॥ ४२७ ॥
कृतमेकप्रकारं च श्रद्धया चोभयात्मकम्। दत्त्वा [1]ज्ञानक्रियानत[1] याचोपयुज्यते ॥ ४२८ ॥
लोकधर्मस्थिता सा संपूरणे [2]याति वासनाम्। [3]तस्माच्चित्तप्रसादं वै जायते येन कर्मणा ॥
आचर्तव्यं प्रयत्नेन मन्त्रज्ञैर्विततात्मये। [4]अथ.... मनसंस्कारं संपन्नानां समाचरेत् ॥ ४३० ॥
और्ध्वदेहिकसंज्ञं तु व्यापारं समनन्तरम्। पूर्वोक्तफलसिद्ध्यर्थं तन्मे निगदतश्शृणु ॥ ४३१ ॥
[5]तच्चापि द्विगुणं विद्धि द्विविधं(प्रथमं)कमलोद्भव। [6]सा दीक्षितानां सर्वेषां [7]मुक्तानाममृतादिकैः ॥
व्यक्तादिवृत्तिस्थानेषु हितं नित्यं तमेव हि। प्राग्वदाराधिते मन्त्रे श्रद्धया [8]संप्रदत्तवत् ॥४३३॥
आतृप्तेः भगवत्प्रीतिपर्यन्तममलेक्षण। द्वितीयममलाग्रे तु मन्त्रेशे सन्निधीकृते ॥ ४३४ ॥
ओदनेनात्मकेनैव भोजनं क्रिययोज्झितम्। आहृष्टेरल्पसत्त्वानां सर्वेषां सर्वदा हितम् ॥४३५॥
ज्वलदव्यक्तबीजान्तं [9]निविष्टं वर्तते ततः। [10]सौम्यवृत्तिमसूक्ष्मश्च प्राण[11]शक्तिपरश्वसन् ॥
तद्दशांशं हि वै कालं बाह्यं च दिनलक्षणम्। समाश्रित्य क्रमेणैव [12]कर्ता तदनुकल्पवान् ॥
[13]तत्प्राणांशानुविद्धा .व्यक्तमिन्द्रियलक्षणम्। आपादयति चाव्यक्तादन्नमूर्तिच्छलेन तु ॥
श्रोत्रेन्द्रियादिकाश्चैव उपस्थेन्द्रियपश्चिमा। यमाश्रित्य [14]लभेताशु समर्तानि दशाहिके ॥४३०॥
एकादशेऽह्नि विप्रेन्द्र अस्मिन् शक्तित्वमेव हि। [15]त्रयस्त्रिंशाहिकेनैव ब्रह्मन् व्यक्ततरेण तु ॥
[16]विनाडि सत्यपूर्वेण तत्प्राणांशेन वै पुनः। द्विषट्कलक्षणेनैव [17]शेषं तत्वगणं द्विज ॥४४१॥
बुद्धितत्वान्धकारं तु व्यञ्जनीयं यथाक्रमम्। प्राक् संवत्सरं बुद्धिं द्विर्नीयेन ततो द्विज ॥४४२॥
[18]ततस्त्वाशब्दतन्मात्रात् पञ्चभिः पञ्चकं तु वै। तन्मात्राणां व्यञ्जनीयमाकाशाद्यमनः परम् ॥
मासानां पञ्चकेनैव क्ष्मान्तं वै [19]भूतपञ्चकम्। ततस्समर्चेले संपन्ने(स्ना)स्थाने [20]भुक्तोज्झितं तथा ॥
दन्तकाष्ठे [21]हृदा पीते पञ्चगव्येन ते पुनः। मन्त्रे तु विधिवत् स्थाने प्रावृते चाम्बरे तथा ॥
समाचम्य हृदा न्यस्य मूलं पाणितले ततः। [22]आमूर्धयाथ[22] तेनैव सकलीकृत्य विग्रहम् ॥

१ **ग–घ**—ज्ञानक्रियावदिच्छि तया  २. **क–ख**—सपूर्णे सति  ३. **ग–घ**—यस्माच्चित्त  ४. **क–ख**—अ मनससस्कार सपन्नानाम्  ५. **क–ख**—तच्चापि द्विविध सिद्धि  ६. **क–ख**—सुरक्षितानां सर्वेषाम्  ७. **ग–घ**—मुक्ताना मृतकादिके.  ८. **ग–घ**—सप्रदानवत्  ९. **क–ख**— .विष्टर वर्तते मृतम्  १०. **ग–घ**—ऊर्ध्ववृत्ति  ११ **क–ख**—शक्तिपर श्वसन्  १२. **क–ख**– कर्ता . नात्  १३. **ग–घ**—तत्प्रमाणाशुविद्या च  १४. **ग–ग**—लभेदाशु  १५. **क–ख**—यत्र त्रिंशा  १६. **ग–घ**—विनाडीसह्यपूर्वेण  १७. **क–ख**—शेष तत्वगणम्  १८. **ग–घ**—तत. स्वां शब्द  १९. **ग–घ**—भूतपञ्चमम्  २०. **ग–घ**—भुक्तोज्झिते तथा  २१. **क–ख**—हृदापीठे  २२. **ग–घ**—आमूर्धया तथैनैव

किञ्चित्किञ्चित्समादाय प्रो . . प्ववयवेषु च। आख्यातपरि . ब्रह्मन्[१] दलपादानिकं क्रमात् ॥
निम्नतां च नयेदीषत् क्षेत्रात् क्षेत्रं यथोदितम्। शेष एव सचक्रम्य [२]....मार्यचान्यथा ॥११८॥
खातात्मकेसरक्षेत्रमानमत्र यथोदितम्। दलजालं समापाद्य सव्योम चांशकेन तु ॥ ११९ ॥
सचक्रनेमिवृत्तं तु सार्धेनांशेन तद्बहिः। भाग ..क्षेत्रं कुर्यात् प्रागुक्तलक्षणम् ॥ १२० ॥
पृष्ठतस्व .... कुर्यात् सपद्मं केवलं तु वा। कमलं दलजालं [३]च मुख .... ॥ १२१ ॥
एतत्प्रमाणनिर्माणपरि .... । तदा प्रमेयमस्यां वै [४]ज्ञातव्यं कर्मसिद्धये ॥१२२॥
[५]शतपत्रात्मनानन्तो मुष्टिस्तेनन्तवात्र[?] धृक्। अन्तर्बीजात्मभावेन [६]स्थित्वा चोत्थमुखः पुनः ॥
पतस्कन्धं यदर्यात्मभूतप्राणमरुन्महत्। प्रेरितं ब्रह्मरन्ध्रेण तत्तदिच्छावशात् पुनः ॥ १२४ ॥
सप्तपातालनालं च त्वगमक्षात्मनाम्बुजम्[?]। यदाश्रित्य स्ववाहे तु ह्यमृतं जलवत् स्थितम् ॥१२५॥
सचक्ररचनाजाले [७]स्थितस्ते सत्रमूर्तिधृक्। शङ्खविग्रहधृग्वायुराज्यकोशं च खं ततः ॥ १२६ ॥
निर्बीजमजमक्षोभ्यमाद्यं स्वदेवतस्याधिदैवतम् ?। सत्यभूतममेयं च प्रमेयमिदमच्युतम् ॥ १२७ ॥
संस्कारकाले त्वारोप्य नित्यं संमन्त्र्य तर्पणे। दैर्घ्यमेव तमुज्झित्य वेदिविस्तारमेव च ॥ १२८ ॥
यथोक्तांशं ... ... ...। . .संहतं गदादण्डं सुशिरं सुदृढं तु वा ॥१२९॥
नातिस्थूलं नातिकृशं युक्तमृजुगणेन तु। एवं द्रव्यमयं कुर्याच्छुभदारमयं[?] तु वा ॥ १३० ॥
स्रुक्स्रुवानां च होमार्थं तल्लक्षणमथोच्यते। आयशुद्धं समादाय प्रागुक्तगणलक्षितम् ॥ १३१ ॥
त्रयेंशोनं स्रुचा दैर्घ्यादष्टधा चोच्छ्रितं भजेत्। तेन भागप्रमाणेन तद्विस्तारं विधीयते ॥ १३२ ॥
संविभज्य समांशैस्तत्सूत्रैस्स्पष्टैर्यथाक्रमम्। कलशं [८]कल्पयेन्मूलादष्टांशं चतुरश्रकम् ॥ १३३ ॥
वर्जयित्वाथ बाहुल्यं विस्तारार्धेन कल्प्य वै। कुर्यादाधारविश्रान्तं कमलं रचितान्वितम् ॥१३४॥
तं शंखं विततास्यं तु नन्द्यावर्तं सुलक्षणम्। पार्श्वभागद्वयं त्यक्त्वा [९]चतुरंश....स्मृतम् ॥
पाशवद्ग्रथितं मध्ये सुविभक्तं च वर्तुलम्। चतुर्भागाननं दण्डं निर्गतं कलशाननात् ॥ १३६ ॥
वितानं [१०]शङ्खवक्त्राद्वा .... त्रितयसंयुतम्। धारानालद्वयं कुर्यात् .... ष्टाङ्गसंमितान् ॥१३७॥
पीठवत्कण्ठपीठं तु चतुरश्रं समाप्य च। तस्मिन् पङ्कजमुलिख्य चक्रवृत्तान्तरीकृतम् ॥ १३८ ॥

१. **क-ख**—जलपादानिकम् २. **क-ख**—क्रम्य .. ३. **ग-घ**—दलजालं च व्यते मम... ४. **ग-घ**—ज्ञातव्य कल्यमिद्धये ५. **ग-घ**—शतपत्रात्मनानीतमुष्टिस्थान तवात्र धृक् ६. **ग-घ**—भावेनस्थ . सकंध(य)त्रदर्या . शेत् पुनः ७. **ग**—जालेस्तिरस्तेऽस्त्रमूर्तिधृक्। शङ्खविग्रह.. यस्याखदेवता। सत्यभूतममेयं च **घ**—सचक्रजना...शेत् पुनः। सस्कारकालेनारोप्य ८. कल्पयेन्मूलात् इति चेत् साधु ९. **क-ख**—चतुरंश... **ग-घ**—चतुरशतत्र ? स्मृतम् १०. **क**—शङ्खव... **ख**—शङ्खवक्त्राद्वा... त्रितय संयुतम्

मुक्ताजालसमं सूत्रं शङ्खकोणचतुष्टये। एकांशेनोन्नता ग्रीवा विस्तारद्व्यङ्गसम्मिता॥ १३९॥
ईषद्वक्त्रा न साष्टांशादूर्ध्वे भागसमुज्झिताम्। पद्मवच्चोत्तमाङ्गं च ग्रीवानालं सकर्णिकम्॥
अनन्तकेसरप्रान्तैरावृतं कर्णिकाननम्। तद्बहिः पत्रजालं तु केसरोच्छ्रायसंमितम्॥ १४१॥
[1]अविभाग .... पृष्ठतस्तिर्यगाननम्। कुर्याच्च कर्णिकामध्ये गोलकेनैव मुद्रितम्॥ १४२॥
कौस्तुभेनाङ्कितं चैव [2]सौरभीयाश्रिणाथवा। सार्धहोमप्रमाणेन [3]द्रव्यजाज्याहुतेः क्षमम्॥१४३॥
प्रमाणोपे.... ....लक्षणं समुदाहृतम्। स्मृतं सदाज्यहोमार्थं शेषमन्यन्निबोधतु॥ १४४॥
साक्षादमृतमूर्तिर्वै [4]वरुणः कमलात्मना। [5]नालात्मना तदस्त्रं च संस्थितं विघ्नभीतिकृत्॥
जगदाप्यायकृच्चन्द्रः पद्मत्वे[6]नाग्रदेश ....। आनन्दाख्यं हि सामर्थ्यं ज्ञेयं तत्परमेश्वरम्॥
देशिकस्तु तदान्याससाधकस्संयतस्तु वा। दैवीयमभिमानं च समाश्रित्य ....ने॥ १४७॥
अर्चने सन्निकार्ये तु यथोपकरणाखिलाः। सन्त्रायं स्वकरणानां तु ह्येकस्मिन् स्वाश्रये स्थिता॥
[7] .... सर्व .... देहेनानेन त्वर्घ्यपात्र ....। ... .... शङ्खचक्रादिकैर्युताः॥
[8] .... कार्या .... त्वमभिमतास्पदं। तस्मादनधिकार्येऽथ ह्यन्नदेवपरस्तथा॥१५०॥
[9]दमहो .... .... .... संश्रयेत्। निषिद्ध .. .... देहापहरणं शुभम्॥
संपाद्य पदवीं याति योऽधिकारपदे स्थितः। ददत्यनुज्ञाजुष्टाना त्वद्भक्तानां च तत्प्रति॥१५२॥
आज्यस्थाली [10]बृहद्ब्रह्मलक्षणे .... । कुर्यात्कमलगर्भं तु [11]याम्यययात्रात्मतो शुभा॥
गृहीत्वात्मामृतः सम्यक्[12] संस्तुत्वं लभतेऽग्निना। ध्रुवं प्रमाणनालं च तन्मूले शुभलक्षणम्॥
कुर्यादमलसारं च ... . व्जज। तत्समर्थं च तन्नालमंज्झिना श्रीनिषेविता॥१५५॥
संपाद्य नलिनीं दिव्यां प्रफुल्लैरर्धपुष्पितैः। [13]तथा मुकुलितैः पद्मैस्सपद्मै रन्तराकृतैः॥
... दिक्पालिताश्चैव दक्षिणोत्तरयोस्तु वा। चतुर्विस्तारवक्त्रां च [14]पुलपद्मान्तराणिताम्॥
चक्रव्योमत्रिभागेन निम्ना वातदलेन तु। मूलयेद्दलदेश(स्ता)स्स्यादन्यमन्यं समाप्य वै॥१५८॥
[15]उष्णीं चात्पलोपेतं संसिद्धा सुरभीरवै। सनाला नलिनी नेषा तत्पात्रं पारमेश्वरम्॥१५९॥
शयनासनसंज्ञं च सततं चामृतार्णवम्। [16] .. द्यावापृथिव्या . ॥ १६०॥

१. ख—अविमुक्त पृष्ठत. ग-घ—अविभक्त पृष्ठत २ क-ख—सौरभीयाश्रिणा . ३. क-ख—द्रव्य... ४. क-ख—वरुण तु वलात्मना ५ ग-घ—नालाथिना तदस्त्र च ६ ग-घ—पद्मत्वे नागदेवतम् ७. क-ग-घ— ... ८ क-ख— मभिधास्पदे ९. क—दमहो १०. ग-घ—महत् ब्रह्म लक्षणे... ११. ग-घ—याम्यययात्राथिता शुभम् १२ ग-घ—सम्यक् सस्तुत्व मुद्यतेऽग्निना १३ क-ख—इदमर्ध लुप्तम् १४ ग-घ—पद्मान्तरान्तताम् १५ ग-घ—स्रोष्णीषम् १६. ग-घ—वै कुण्ड द्यावापृथिव्या...तषणीषपन्दगम्

[1]स्रगंधव . तेरस्ते....सपुष्पे चोपलब्धये। [2]प्रणीतादीनि पात्राणि तूपयोग्यानि यान्यपि ॥
तानि शङ्खाब्जहेतीशसंयुक्तान्यखिलानि च। विचित्रं रचना....धातु[3]दार्वमयानि वा ॥ १६२ ॥
[4]यथाभिमतमानानि कुर्यात् पद्मेवतानि? च। मन्त्राराधनपूर्वाणां कर्मणां कमलोद्भव ॥ १६३ ॥
सर्वं सलाञ्छनं कुर्या....पदंत्र? कलशादि....। . .त्वासनादीनि स्वात्मोपकरणानि च ॥१६४॥
मुक्ताङ्गुलीयकं चैव भूषकं (णं) कटकादिकम्। उत्तमाङ्गोद्वहं सर्वं शिरोष्णीषादिकं तु वै ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां कुण्डलक्षणं नाम
एकोनत्रिंशोऽध्यायः ॥

(समुदित श्लोकसंख्या १६५)



## अथ त्रिंशोऽध्यायः

**पौष्कर उवाच**—

संजाने भगवन् लोपे भक्तानां मन्त्रमेविनाम्। [5]ज्ञानादियोगनिष्ठस्य सद्यापारस्य चाच्युत ॥ १ ॥
पातत्राणमुपायं वै श्रोतुमिच्छामि साम्प्रतम्। कृतेन येन भक्तानां जायते कृतकृत्यता ॥ २ ॥

**श्रीभगवानुवाच**—

कथं संवत्सराद्विप्र कर्मणाभिमतं फलम्। प्राप्नुयाच्च क्रियासक्तः पवित्रारोहणं विना ॥ ३ ॥
यथाश्वमेधं विप्राणां सर्वेच्छापरिपूरकम्। राजसूयं नृपाणां च भक्तानां भूषणं तथा ॥ ४ ॥
भूषणानां यथा मध्ये कौस्तुभं वरभूषणम्। ज्ञेयं पवित्रकं तद्वद्भोगजालस्य चान्तरे ॥ ५ ॥
यत्पूरयति भक्तानां व्यापारं पारमेश्वरम्। भोगमोक्षास्पदं शश्वद्भोगस्तस्मात्तु कोऽधिकः ॥ ६ ॥

१. क— म पुष्पे ग-घ—सगन्धवहन्तरस्ते स पुष्पे २. ग-घ—कोशयोः "प्रणीतादीनि" इत्यारभ्य अर्धपञ्चक लुप्तम् ३. क-ख—धातुदार्वमजाति वा ४. ख—इदमर्धं "तानि शङ्खाब्ज"—"विचित्रम्" इत्यर्धयोर्मध्ये वर्तते ५. क-ख—स्नानादिनिष्ठयोगस्य

भक्तानां सततं भक्त्या सालोक्यं विदधाति वै। सामीप्यं साधकानां च नानासिद्धिसमन्वितम् ॥
सायुज्यं साधकेन्द्राणां स्वमन्त्रात्मनि यच्छति। तदुत्तरायणेऽतीते चातुर्मास्यस्य मध्यतः॥ ८ ॥
आदावन्तेऽथवा कुर्याद्द्वादशीष्वखिलासु च। संक्रान्तिषु च सर्वासु पौर्णमासीषु चाब्जज॥
अमावास्यास्वशेषासु तृतीयासु तथैव च। वैष्णवेष्वथ ऋक्षेषु तत्क्षणेष्वखिलेषु च॥ १० ॥
चातुर्मास्यस्य कालस्य तुल्यानं द्वादशी तु या। षडशीतिमुखा दिव्या तस्यामारोपयेत्तु यः॥
पवित्रकं जगद्योनेस्सपवित्रीकरोति च। अतीतां वर्तमानां च एष्यां स्वकुलसन्ततिम्॥ १२ ॥
तत्र सन्निहितस्साक्षान्नानानिर्माणविग्रहः। भक्तानां भगवान् प्रीतः परमात्माच्युतो हरिः॥१३॥
यद्यप्यब्जसमुद्भूत भक्तानां नित्यमेव हि। नारायणस्तु मन्त्रात्मा स्थितस्सन्निहितस्स्वयम्॥
तथापि बलवत्ता वै तत्तिथेस्तत्र कर्मणि। सन्निधिं भजते येन मन्त्रिणां मन्त्रराट् प्रभुः॥१५॥
ग्रीष्मकालं समासाद्य यथर्कस्तीक्ष्णतां व्रजेत्। स्वरूपमजहन्नेव सन्निधानतरं विभोः॥ १६ ॥
सत्पात्रदेशकालानामासृष्टेस्स्थितये तु वै। अतः पवित्रकं तस्यामन्यस्यां तदसंभवात्॥ १७ ॥
कार्यं क्रियापरैर्भक्त्या साखण्डा येन जायते। [1]अखण्डकारी पुरुषो [2]ज्ञानकर्मपरायणः॥ १८ ॥
भक्तिश्रद्धातथोत्साहयुक्तो योगबलैर्युतः। ब्रह्मण्येकात्मतां याति अचिरादेव पौष्कर॥ १९ ॥
सर्वभावेन भक्तानां यत्पालयति सर्वदा। मनोवाक्चित्तजं कृत्स्नं व्यापारं शुभलक्षणम्॥ २० ॥
परिज्ञेयमनन्तस्मात् स्वरूपं तस्य यादृशम्। फलमेति च वै येन भक्तानां तत्समापनात्॥ २१ ॥
यदच्छिन्नं जगद्योनेरनन्तप्रसरं सितम्। विच्छेदमकृतज्ञानामेति नानात्मना स्वयम्॥ २२ ॥
[3]जगत्सूत्रं तु तद्विद्धि हेमसूत्रादिना तु वै। षाड्गुण्यमभिमानं यद्धत्ते प्रतिसरात्मना॥ २३ ॥
ज्ञानरागोपरक्तं च युक्तं कार्यैस्तु वीर्यजैः। तेजसैरावृतं मन्त्रैर्बलेनावलितं परम्॥ २४ ॥
ऐश्वर्यमुपचारे तु संप्राप्ते शक्तितोऽव्ययम्। एवं पवित्रकं तावत्परिज्ञातं न तत् प्रभोः॥ २५ ॥
ब्रह्मण्यधिपतौ विष्णौ तदाकारे प्रतिष्ठिते। भक्त्या च विधिवद्दत्तं ददाति भगवत्पदम्॥ २६ ॥
स्थूलस्य व्यतिरिक्तस्य व्यवहारपदस्थितेः। पदार्थे कल्पनीया च यथा तदवधारय॥ २७ ॥
सूक्ष्मं दृढं सितं श्लक्ष्णं सूत्रं ब्रह्मप्रसूतया। विनिर्मितं कुमार्या वा वृद्धया वा विनीतया॥२८॥
विशुद्धया विधवया संपादितमथापि वा। यथालब्धं तु चादाय कुर्यादस्त्रविशोधितम्॥ २९ ॥
अवलोक्य सरन्मूलं विनिष्पाद्य चतुर्गुणम्। चातुरात्म्यव्यपेक्षायामथवाष्टगुणं द्विज॥ ३० ॥
भगवन्मूर्तिभेदे तु भेदभिन्नोपलक्षितम्। केशवादिष्वधिष्ठातृभावेन त्रिचतुर्गुणम्॥ ३१ ॥
तन्तुभिर्विषमैर्विष्णोः समस्य परिवर्जयेत्। पावित्रिकी क्रिया यस्माद्विषमा सा न कस्यचित्॥

१. क-ख—अखण्डकानि २ ख—ज्ञानकर्मपरिकल्पित. ३. क-ख—जगत्सूत्रे

पावित्रकाणि कार्याणि तन्तुभिस्तैस्सुतानितैः। मन्त्रास्त्रकुम्भयोः पूर्वं नानामन्त्रालयस्य च ॥३३॥
मण्डलाख्यप्रधानस्य तद्गतस्याखिलस्य च। कर्णिकास्थस्य च विभोः केसरच्छदगस्य च ॥ ३४ ॥
विभवव्यूहरूपस्य लाञ्छना[१]स्त्रद्वयस्य च। मूर्ध्नि कण्ठेंऽसयोः पुष्पपूजायामुपरि क्षितौ ॥ ३५ ॥
प्रमाणेन जगन्नाथप्रतिमायां चतुष्टयम्। द्वयं हि कुण्डानलयोश्शास्त्रपीठस्य च द्वयम् ॥ ३६ ॥
[२]लिपेर्वाक्त्वभूतस्य शब्दतत्त्वस्य च प्रभोः। घण्टाक्षसूत्रपूर्वाणां क्रियाङ्गानां महात्मनाम् ॥३७॥
जायायां भक्तिनम्रायां रक्तायामर्चने हरेः। सम्बन्धिनां च मित्राणां भगवद्धर्मसेविनाम् ॥ ३८ ॥
तदुत्तरसहायानां चातुरात्म्याभिलाषिणाम्। भृत्यानां स्वानुकूलानां पुरुषोत्तमयाजिनाम् ॥ ३९ ॥
वृद्धये योषितां चैव पवित्रीकरणाय च। पवित्रकरणं रम्यं रचनीयं यथाक्रमम् ॥ ४० ॥
षडध्वपीठसंस्थस्य नानामन्त्रास्पदस्य च। ज्ञानादिगुणभेदस्य चतुस्स्थानार्चनाय च ॥ ४१ ॥
मुख्यमन्त्रस्य च विभोश्शतेनाष्टाधिकेन च। तन्तुना भूषणं कुर्यादर्धेनांशेन वाब्जज ॥ ४२ ॥
जपहोमादिका संख्या पूर्णा रिक्ता तदात्मना। समीकरोति भक्तानां मन्त्राणामत एव हि ॥
हेमसद्रत्नकर्पूरमालयक्षोदकुङ्कुमैः। सर्वौषधिसमोपेतैस्त्वगेलादिविमिश्रितैः ॥ ४४ ॥
पावनैर्विविधैर्द्रव्यैर्निर्व्याजपिचुना सह। कुर्यात्तद्गर्भरचनां सूत्रसंख्यापलक्षिताम् ॥ ४५ ॥
बीजपूरवदब्जाक्ष [३]आर्द्रामलकशङ्खवत्। तदन्तरालानि पुनस्त्वच्छिन्नेन तु तन्तुना ॥ ४६ ॥
विभागप्रतिपत्त्यर्थं ग्रथनीयान्यदूरतः। यथेच्छया ततोऽन्येषां याज्यानां परिकल्प्य च ॥ ४७ ॥
सूत्रभ्रमसमोपेतैर्गर्भैर्भूषणसंचयम्। आराधकस्य च गुरोस्सगर्भं भूषणद्वयम् ॥ ४८ ॥
विहितं भगवन्मन्त्रन्यासात्तादात्म्यभावनात्। अतोऽन्येषामगर्भं च रचनीयं पवित्रम् ॥ ४९ ॥
अन्तरालगतं गर्भं कुर्याद्धाह्लीकरञ्जितम्। अलंकृत्य च सौवर्णैरुपरिष्टाच्च रूपकैः ॥ ५० ॥
पत्रच्छेदसमुत्थैस्तु जातरूपमयैस्तु वा। [४]शङ्खचक्रगदापद्ममालाश्रीवत्सकौस्तुभैः ॥ ५१ ॥
खगेशतालमु[५]सलनन्दकज्याहलादिकैः। मन्दारकुसुमाकारैः पारिजातद्रुमोपमैः ॥ ५२ ॥
श्रीवृक्षाचलनागेन्द्रस्वस्तिकैश्चामरैर्घटैः। वेद्यानलार्चिषाख्या च व्यजनैरातपत्रकैः ॥ ५३ ॥
सरित्समुद्रवृषभभोगजालैस्तु सारसैः। एकस्यैव बहूनां वा यथास्थानानुरूपतः ॥ ५४ ॥
धातुजे पित्तले भाण्डे वस्त्रच्छन्ने निधाय च। छादयेदुपरिष्टाच्च धूपितेनाहतेन च ॥ ५५ ॥
कृताह्निकोऽधिवासार्थं दशम्यां प्रयतश्शुचिः। देशिकेन्द्रद्वितीयस्तु कर्तार्घ्यकुसुमोद्यतः ॥ ५६ ॥
सह सद्ब्रह्मघोषेण स्तुतिमङ्गलपाठकैः। शशाङ्कोदयवेलायां कृत्वा द्वार्स्थार्चनं विशन् ॥ ५७ ॥

१. **ग-घ**—लाञ्छनास्त्रवधस्य च २. **क-ख**—लिपे...त्वभूतस्य ३. **क-ख**—आम्रवल्क...शङ्खवत् ४. **क-ख**—शङ्खपद्मगदाचक्रमाला ५. **क-ख**—मुसल...ज्या

वैराजभुवनाकारं मण्डपं मण्डनाङ्कितम्। उपविश्य यथान्यायमन्तर्यागान्तमारभेत् ॥ ५८ ॥
न्यासपूर्वमशेषं तु अर्घ्याम्बुपरिकल्पनम्। गणेशाभ्यर्चनं कृत्वा निर्विघ्नफलसिद्धये ॥ ५९ ॥
कल्पयेद्ब्रह्मकूर्चं तु शोधयेद्वसुधां ततः। स्थापनं तोरणादीनामर्चनं कुण्डसंस्कृतिः ॥ ६० ॥
मन्त्रास्त्रकुम्भरचना तयोर्मन्त्रावतारणम्। तदर्चनादिकं सर्वं कुर्याद्दीक्षाविधेस्समम् ॥ ६१ ॥
व्यापारमाचरेद्दिव्यं कुम्भकेन स्मरन् विभुम्। नानिशं युज्यते यस्मात्तस्मादेषा प्रतिक्रिया ॥ ६२ ॥
विभाव्या मन्त्रिणा कौम्भी आस्त्री रक्षार्थमेव हि। ततोऽवतार्य भगवान्? स्थण्डिलेऽभ्यर्च्य चासनम्॥
जपान्तमस्खलितं कृत्वा प्रयायाद्बिम्बसन्निधिम्। अष्टाङ्गेन [1]नमस्कृत्य दद्यादर्घ्यं तु मूर्धनि ॥
अनुलेपनसंयुक्तं ततः पुष्पाञ्जलिं शुभम्। साङ्गं सावरणं भक्त्या धूपयेत् पुरुषोत्तमम् ॥ ६५ ॥
पुष्पपूजादिकं सर्वं मध्याह्ने यद्विनिर्मितम्। अपास्यादाय शिरसा अभिवन्द्य समर्च्य च ॥६६॥
विष्वक्सेनस्य चास्त्रेण निर्मलीकृत्य वारिणा। सपीठं भगवद्बिम्बं प्रासादं शोधयेत्ततः ॥ ६७ ॥
स्नापयेद्देवदेवेशं विधिदृष्टेन कर्मणा। ब्रह्मकूर्चादिकैस्स्नानैर्मन्त्रादानप्रकल्पितैः ॥ ६८ ॥
पदार्थसंमितैश्शक्त्या यथावदधिवासितैः। फलै रत्नादिकोपेतैः पूजयेद्विधिना ततः ॥ ६९ ॥
भक्त्या क्रमोपदिष्टैस्तु भोगैः कृत्स्नैरकृत्रिमैः। सर्वं कृत्वा प्रणामान्तं यायाद्धोमनिकेतनम् ॥७०॥
तत्रानलं च संस्कृत्य कुर्याद्वै मन्त्रतर्पणम्। कलश[2]स्थार्चवैम्बीयसंस्कृतेनाथ वह्निना ॥ ७१ ॥
चरुं संश्रपयेच्चुल्यां हृदा क्षीराज्यतण्डुलैः। समुद् धृत्याज्यपूतं तं विनिवेद्य यथाक्रमम् ॥
कलशस्थलवृत्तीनामेकांशं जुहुयात्ततः। दद्यात्पूर्णाहुतिं पश्चाद्बलिभि[3]स्सर्वमन्तरम् ॥ ७३ ॥
तर्पयित्वाम्बुसिक्ताभिः क्रमेण जुहुयात्ततः। तद्वदाज्यं सुपूर्णं तं मुद्राबन्धादिकं तु वै ॥ ७४ ॥
[4]कृत्वा प्रणामपर्यन्तं स्थलस्थस्याग्रतो विभोः। अस्त्रमन्त्रेण संप्रोक्ष्य कृत्स्नद्रव्यगणं ततः ॥७५॥
निवेश्य वायुदिग्भागे सर्वं सूत्रपुरस्सरम्। सितवस्त्रान्वितेनैव त्वक्षेनैव वर्मणा ॥ ७६ ॥
अर्चयित्वास्त्रमन्त्रेण स्थगयेत् कवचेन च। बहिःपक्षसमोपेतं सर्वमिष्वष्टकं ततः ॥ ७७ ॥
दिग्विदिक्ष्वस्त्रजप्तं तु दत्त्वाज्यमनलालये। पञ्चरङ्गेण सूत्रेण दृढेन सुसिनेन वा ॥ ॥ ७८ ॥
प्रदक्षिणचतुष्कं तु स्मरन् वर्म समापयेत्। प्रासादस्यान्तराद्बाह्याद्वेष्टयेत्तद्वदेव हि ॥ ७९ ॥
प्राङ्मुखस्त्वासनारूढो गुरुपाणिपरिच्युतम्। ब्रह्मकूर्चं पिबेत् पश्चाच्चरुशेषं तु भक्षयेत् ॥ ८० ॥
पिबेद्धृदयसञ्जप्तं हेमरत्नकुशोदकम्। अद्यात्तदनु ताम्बूलं दन्तकाष्ठसमन्वितम् ॥ ८१ ॥
कुतपे कम्बलोपेते स्थित्वा च सकुशास्तरे। जपेन्मन्त्रवरं साङ्गं पठन् स्तोत्रवरान् शुभान् ॥८२॥

१. क-ख—मनस्तुत्य २. ग-घ—कलशस्थलबैबीय ३. ग-घ—सर्वमत्वरम् ४. क-ख—आर्याप्रणाम

कथां सर्वेश्वरीं पुण्यां कुर्वन्निष्पाद्य मण्डलम्। कर्मशेषं तदापाद्य भूषणानां यथोदितम्॥ ८३॥
एकादश्यां प्रभाते तु स्नानपूर्वं तु पूजनम्। सम्पूर्णाहुतिदानान्तं हुत्वा सम्यग्यथाविधि॥
आसाद्य कलशोद्देशं विनिवेदनमाचरेत्। ततो विशेषभोगानां प्रभोरामन्त्रणाय च॥ ८५॥
दन्तकाष्ठं सताम्बूलं मुखवासांसि दर्पणम्। चन्दनादीनि गन्धानि जातिपूगफलानि च॥८६॥
विनिवेश्य निधायाग्रे दक्षिणेऽथ जगत् प्रभोः। गुग्गुलं मृष्टधूपं च प्रकाशं ताम्रपात्रगम्॥८७॥
दृक्प्र[1]भामण्डनं चैव हेमसूत्रं सकङ्कणम्। मध्वाज्यपूरिते पात्रे तैजसे रोचनाञ्जनम्॥ ८८॥
रसषट्कं महामूर्तेर्नेत्रवस्त्रे सितारुणे। पश्चिमेऽथ विभोर्दद्यात् पुण्यनद्युदकं तथा॥ ८९॥
तीर्थतोयान्नभोगार्थं [2]नगमृत् श्रीफलादि यत्। शाड्वलं [3]नीलदर्भाश्च ताम्रपात्रे तु वायसे॥
उत्तरेऽथ विभोर्दद्याद्देवदेवस्य पुष्कर। माल्यान्योषधयस्सप्त बीजानि च फलानि च॥ ९१॥
तिलतण्डुलपात्राणि क्षीरं दधिरस घृतम्। गन्धबृन्दत्वगेलाद्यं धातवो गैरिकादयः॥ ९२॥
सफलं नारिकेलं च विकारस्त्वैक्षवोऽखिलः। सराजते कांस्यपात्रे संभवे सति पद्मज॥ ९३॥
यज्ञपर्णपुटे वापि विनिवेद्यमसंभवे। सकुशोदकमन्येषां ताम्बूलं दन्तधावनम्॥ ९४॥
सितानि सोत्तरीयाणि उपवीतानि चन्दनम्। कुङ्कुमागुरुकर्पूरश्रीखण्डैरधिवासितम्॥ ९५॥
चतुस्स्थानावतीर्णस्य दद्याद्गन्धपवित्रकम्। ततोऽर्घ्यपुष्पधूपं च मुद्राबन्धं समाचरेत्॥ ९६॥
आदिमध्यावसाने तु सम्यगच्छिद्रशान्तये। जपेन्मन्त्रवरं साङ्गं पश्चाद्बद्धाञ्जलिः पठेत्॥
प्रणवद्वियथार्थ? तु स्तोत्रमन्त्रं निवेदयेत्। सर्वमन्त्रमयानन्त नित्यसन्निहिताव्यय॥ ९८॥
गुणप्रधान योगेश भावनाभोगविग्रह। नारायण परं ब्रह्म प्राणेश [4]चतुराकृते॥ ९९॥
सर्वगाच्युत सन्मूर्ते सर्वज्ञ पुरुषोत्तम। अस्मात्काललवाद्यावद्विसर्जनदिनावधि॥ १००॥
नानामन्त्रगणोपेतस्सन्निधिं भज मे प्रभो। देवबिम्बे तु तन्मूर्तौ कलशे मण्डलक्षितौ॥ १०१॥
संख्यासूत्रेऽक्षसूत्रे च पावके गुरुविग्रहे। घण्टायां शास्त्रपीठे च यागोपकरणेषु च॥ १०२॥
स्रुक् स्रुवाद्येष्वशेषेषु एकान्तिद्विजमूर्तिषु। विष्णुपार्षदभेदेषु [5]जन्मकर्मरतेषु च॥ १०३॥
श्रद्धापूतेषु दक्षेषु त्वदेकशरणेषु च। अतीतवात्सरीयाणां स्नानादीनां हि कर्मणाम्॥ १०४॥
नैमित्तिकानां नित्यानामपूर्णानां हि शान्तये। त्वत्प्रीतये यथाशास्त्रमद्य निर्वर्तयाम्यहम्॥१०५॥
पावित्रकं विधानं च सर्वकर्मप्रपूरणम्। अतोयं मुखवासाद्यमुपचारं हि चार्चितम्॥ १०६॥
होमान्तमधि[6]वासीयं कुरु सर्वं हि चात्मसात्। त्वामर्चयाम्यहं भक्त्या सुप्त्यतीते तु जागरे॥

१. ग-घ—प्रभामण्डल चैव २. क-ख—नगमृ ..फलादिक यत् ३. क-ख—नीलद ...ताम्र ४. ग-घ—चतुरात्मक ५. क-ख—चर्म कर्म ६. क-ख—मधिवासीच ...रु सर्वम्

यथावद्ब्रह्मसूत्रान्तैर्भोगैर्भोगापवर्गद । विज्ञप्तो[१]ऽसीह भगवन् वेत्सि सर्वं हृदि स्थितम् ॥ १०८ ॥
भक्तस्य मम वात्सल्यात् प्रातः कार्यस्त्वनुग्रहः । एवं निमन्त्रयित्वाजमष्टाङ्गेन नमेत् क्षितौ ॥
चतुःप्रदक्षिणीकृत्य हृदि मन्त्रमनुस्मरन् । गीतनृत्तादिकैः स्तोत्रैर्वेदपाठसमन्वितैः ॥ ११० ॥
जयशब्दसमेतैस्तु जागरेण नयेन्निशाम् । स्नात्वा ब्राह्ममुहूर्तेऽथ कृतकौतुकमङ्गलः ॥ १११ ॥
महता विभवेन प्राक् द्वारयागं समाचरेत् । यथावद्भगवद्यागं कुर्यात्तदनु पौष्कर ॥ ११२ ॥
सांस्पर्शिकै[२]रासनाद्यैर्विविधैरौपचारिकैः । हृदयङ्गमसंज्ञैस्तु बहुभेदविनिर्मितैः ॥ ११३ ॥
भक्ष्यैर्भोज्यैस्तथा लेह्यैश्चोष्यैर्नानाविधैरपि । षड्ऋतुप्रभवैस्सर्वैश्शाकैर्मूलैः फलैश्शुभैः ॥ ११४ ॥
पावनैः पावकस्विन्नैरुपदंशादिकान्वितैः । गोमंभवैस्स्थिरैः कांस्यपात्रैर्मध्वाज्यपूरितैः ॥ ११५ ॥
रसालक्षीरसंपूर्णैर्दधिकस्थितैस्तु समुद्रवत् । मात्राविन्तैस्सताम्बूलैरन्तर्मानैर्यथोचितैः ॥ ११६ ॥
वरशय्यासमेतैस्तु पावनैरात्मवल्लभैः । स्वदेशपरदेशोत्थैः क्रीडाभोगैरकृत्रिमैः ॥ ११७ ॥
जातरूपमयैः पात्रैर्गन्धमाल्याद्यलङ्कृतैः । जपमुद्रावसानान्तमेवं मण्डलसन्निधौ ॥ ११८ ॥
कृत्वा तु भगवद्यागं विशेषाद्देवमन्दिरे । अथ भूषणपात्रं तु आदायोद्धाट्य पूज्य च ॥ ११९ ॥
पवित्रकं समादाय यायात्कलशसन्निधिम् । आराधनाङ्गनिचयमव्यक्तं तात्त्विकं हि यत् ॥१२०॥
तृतीयमुभयात्मं वै अध्यात्मादित्रयं तथा । अनुसन्धाय वै तस्मिन् संस्मरन् हृदयाद्धिया ॥१२१॥
तत्राष्टाष्टकसंख्यं तु अव्यक्तं भोगसंग्रहम् । मन्त्रमुद्रासमूहं तु तात्त्विकं परिकीर्तितम् ॥ १२२ ॥
स्वाध्यायगीतवाद्यानि व्रतानि नियमानि च । दानान्युत्सवपूर्वाणि नानानैमित्तिकानि च ॥१२३॥
एतान्युभयरूपाणि पुरुषार्थप्रदानि च । प्रीतिदानि जगद्योनौ मन्त्रमूर्तौ जनार्दने ॥ १२४ ॥
[३]भास्वरं चिन्मयं शुद्धं यदेषां रूपमक्षयम् । तद्गर्भेष्वनुसन्धेयं सूक्ष्मं तदनु पौष्कर ॥ १२५ ॥
सूर्येन्दुवह्निसंकाशमियत्तापरिकल्पितम् । तद्ग्रन्थिगणदेशेषु भावनीयं महामते ॥ १२६ ॥
सुस्थूलं व्यावहार्यं च तृतीय सार्वलौकिकम् । तत्तन्तु[४]निचयोद्देशे भावनीयं सदैव हि ॥१२७॥
एवमाध्यात्मिकीं व्याप्तिं लक्षयित्वा तु पौष्कर । चिन्तयेदधिदेवाख्यां व्याप्तिं मान्त्रीमनश्वरीम् ॥
चतुर्णामविनाभावि यद्रूपममृतोपमम् । नानाभास[५]गणाकीर्णं मूर्तामूर्तमनश्वरम् ॥ १२९ ॥
किरीटमालाश्रीवत्सकौस्तुभानां महामते । सन्निधिं भावयेन्नित्यमधिदेवात्मना त्रयम् ॥ १३० ॥
पृथ्व्यप्तेजोऽनिलाकाशपञ्चानां समुदायि यत् । रमणीयं शुभं रूप भक्तानां परितोषकृत् ॥१३१॥
तदस्य चाधिभूतत्वं मन्तव्यं योजनाविधौ । ध्यात्वैवं मूलमन्त्रान्ते समुदीर्याब्जसंभव ॥ १३२ ॥

१. क-ख—विज्ञप्तो हि भगवान् वेत्ति सर्वम् २. क—रञ्जनाद्यैः ३. क-ख—भास्करम् ४. क— .. निचयो ५. क-ख—गणा कुण्ठ

प्रणवालंकृतं मन्त्रं तमुद्यतकरः पठेत्। त्वत्प्राप्तिसाधनं देव ज्ञानं यदमलं परम् ॥ १३३ ॥
भक्तिश्रद्धासमोपेता सत्क्रिया त्वत्प्रकाशिकी। अखण्डसिद्धये तस्याह्युपायः कथितस्त्वया ॥
ज्ञानकर्मप्रसक्तानां भक्तानां भावितात्मनाम्। पवित्राख्यं यथाशक्त्या त्वत्प्रसादान्मया कृतम् ॥
यथोचितमिदानीं तां ध्यायस्व परमेश्वरीम्। तस्माच्छुभतरं कर्म विज्ञानममलं हि यत् ॥१३६॥
विघ्यन्तरं मन्त्रगणाद् द्रव्यसङ्घस्त्वनेव हि। प्राप्तिः पूरयिता [1]पूर्णमपूर्णानां हि कर्मणाम् ॥
तथ्येनानेन भगवन् भवभङ्गादितस्य च। [2]अशठस्य क्रियाकाण्डमखण्डं सर्वमस्तु ते ॥ १३८ ॥
विज्ञतोऽसीह भगवन् अर्चिता मे परा त्वयि। विना त्वत्परितोषेण सम्यक् ज्ञानप्रदेन च ॥१३९॥
आपत्काले तु संप्राप्ते [3]बुद्धिपूर्वं मयाच्युत। न सन्त्याज्यं क्रियाज्ञानं त्वं सर्वं वेत्सि तत्त्वतः ॥
यथाकालं यथावच्च भोगैर्देव यथोचितैः। नार्चितोऽसि यथा सम्यक् खेदश्चेतसि तेन मे ॥
पूजनं भोगसंभोगैराज्यदोहैस्तु तर्पणम्। त्वय्येतत्कृतकृत्यानां न किञ्चिदुपयुज्यते ॥ १४२ ॥
गुरुस्त्वयाविनं चेतदविलार्थस्य मेऽखिलम्। फलिष्यत्यमृतत्वेन ज्ञात्वैवं हि पुरा मया ॥ १४३ ॥
अङ्गीकृतं गुरुमुखात् किन्तु सर्वेश्वर प्रभो। परिस्फुरति मे बुद्धौ न निर्व्यूढं यथास्थितम् ॥
मनोवाक्कायकर्मैस्तु आप्रभातान्निशावधि। अस्वातन्त्र्यादसामर्थ्यान्मनसश्चानवस्थितेः ॥ १४५ ॥
शीतोष्णवातवर्षाद्यैरन्तरायैर्ज्वरादिकैः। असम्पत्तेः क्रियाज्ञानां देव त्वदनुरूपिणाम् ॥ १४६ ॥
आप्रवृत्तेः परानन्दप्राप्तिनिष्ठं यथाह्निकम्। यथोक्तमसराणां तु यस्मान्न घटते त्वतः ॥ १४७ ॥
तस्य संपूरणार्थं तु प्रयानतरमर्चनम्। पवित्राख्यमादिष्टं वत्सरं प्रति यत्त्वया ॥ १४८ ॥
तन्मया कृतमध्यक्षमर्चितं यदनिर्मलम्। क्रियायोगादसंपूर्णं तन्मे निर्मलतां नय ॥१४९॥
ज्ञानतोऽज्ञानतो वापि यथोक्तं न तु तन्मया। तत्सर्वं पूर्णमेवास्तु सुतृप्तो भव सर्वदा ॥१५०॥
ओमच्युत जगन्नाथ मन्त्रमूर्ते सनातन। रक्ष मां पुण्डरीकाक्ष क्षमस्वाज प्रसीद ओम् ॥१५१॥
उक्त्वैवं मूलमन्त्रं तु हृदाद्यैर्लाञ्छनैस्सह। समुद्दिश्य ततो दद्यान्मूर्ध्नि मन्त्रात्मनो विभो ॥
सर्वज्ञानक्रियाभोगशुभसंकल्पविग्रहम्। मण्डलान्तर्गतस्यैवं प्रासादान्तस्स्थितस्य च ॥ १५३ ॥
वह्निमध्यगतस्यापि समारोप्य महामते। अर्चनेन पुटीकृत्य पावनं च पवित्रकम् ॥ १५४ ॥
यागोपकरणानां च दत्त्वा [4]शास्त्रात्मनस्ततः। देशिकस्य हृदारोप्य पूजितस्य च देववत् ॥
परितुष्टेन तेनाथ तस्य सर्वार्थसिद्धये। [5]साशिषं हि सदारभ्य संस्थितस्याग्निसन्निधौ ॥ १५६ ॥
हवनान्तेऽर्चनान्ते वा ह्यन्येषां क्रमशस्तु वै। ततः प्रावरणैर्दानैर्यथासंपत्ति संभृतैः ॥ १५७ ॥

१. क-ख—पुण्यमपूर्णानाम् २. क-ख—अङ्गस्य क्रिया ३. क-ख—वृद्धिपूर्वम्
४. ग-घ—शास्त्रात्मनस्तदा ५. क-ख—साशिष्ट हि

सोपवीतोत्तरीयैश्च छत्रोपानत्समायुतैः। विविधैर्भोजनैर्विप्र धूपैश्चालभनादिकैः॥ १५८ ॥
पूजयेद्ब्राह्मणान् सर्वान् मुमुक्षूंस्तथा यतीन्। त्रिरात्रादथ सप्ताहादुपसंहृत्य पौष्कर॥ १५९ ॥
महदर्चनपूर्वं तु कृत्वा पूर्णावसानिकम्। क्रमशश्चोपसंहृत्य स्वयं गुर्वात्मनाथवा॥ १६० ॥
आदाय पूजिते पात्रे अर्चयित्वा यथाविधि। जानुनी भूगते कृत्वा प्रणिपत्य च देशिकम्॥
मानयित्वार्घ्यपुष्पाद्यैः प्रणिपत्य स्वयं पुरा। विनिवेश्य च तत्पात्रं प्रसादः क्रियतां विभो॥१६२॥
साशिषं भगवत्प्रीतिर्वाच्याचार्येण तस्य तु। यथागमं यथाशास्त्रं प्रसादाच्चानुगात्मनः॥ १६३ ॥
त्वयि सांवत्सरं विप्र सुसंपूर्णं तदस्तु ते। समुत्कीर्तयतस्तस्य आसनस्थस्य मूर्धनि॥ १६४ ॥
कलशद्वितयं मन्त्रं रक्षासौभाग्यमोक्षदम्। विसर्जनं विभोः कुर्यात् पूजापूर्वं यथाक्रमम्॥१६५॥
विष्वक्सेनं यजेत् साङ्गं तर्पयेत्तदनन्तरम्। समाहृत्याखिलं पश्चात् कुर्ते वै तद्विसर्जने॥
प्रकल्प्य पूर्ववत्सोमपानमच्छिद्रसिद्धये। रुक्मराजतमद्रत्नघटिते वा विभूषिते॥ १६७ ॥
चक्राधारे तु कलशे वितते कमलोदरे। पाञ्चजन्यवलीग्रीवे शतपत्रशुभानने॥ १६८ ॥
ऊर्ध्वाधःकौमुदामालामण्डलालंकृतेऽञ्जज। मकराननशोभाभिरमृताम्बुप्रवाहके॥ १६९ ॥
नदी[1]समुद्रश्रीवृक्षमीनमाल्यैः परिष्कृते। [2]एवं लक्षणसंयुक्तो[2] विभोराराधनाय च॥ १७० ॥
पाद्यार्घ्याचमनस्नानदाने सांवत्सरोत्सवे। तथा सहस्रकलशैरभिषेकविधावपि॥ १७१ ॥
इत्युक्तमरविन्दाक्ष पवित्रारोपणं परम्। [3]ऊनातिरिक्ताद्यघानि भुवि [4]भक्तजनं सदा॥ १७२ ॥
तस्य निर्वर्तनाद्भक्त्या ब्राह्मणो वेदविद्भवेत्। श्रीमानायुष्प्रशस्तिश्च क्षत्रियोऽच्छिन्नसन्तति॥
धनधान्ययुतो वैश्यश्शूद्रस्तु सुखवान् भवेत्। गोभूसुवर्णदानानामनन्तानां हि यत्फलम्॥
यावज्जीवं प्रदत्तानां प्रत्यहं तु समाश्रितम्। परमायुषि संपूर्णे तत्फलं प्राप्नुयान्नर॥ १७५ ॥
प्राप्तकालस्स्वबुध्या तु आसाद्यायतनं हरेः। स्मरन्मन्त्रेश्वरं सम्यक् सम्यक् सृजति विग्रहम्॥
यानैश्चन्द्रप्रतीकाशैर्दिव्यस्त्रीजनसंयुतैः। वीज्यमानो दिवं याति पूज्यमानस्तथामरैः॥ १७७ ॥
भुक्त्वा भोगांस्तु विपुलान् सर्वलोकान्तरोद्भवान्। कालेन महता [6]साम्य मानुष्यं पुनरेव हि॥
शुभे काले शुभे देशे जायते च शुभे कुले। निवृत्ते बाल्यभावे तु व्यक्ते करणसंग्रहे॥१७९॥
बुद्धितत्त्वे प्रवृद्धे तु जन्माभ्यासवशात्तु वै। कर्मणा मनसा वाचा नारायणपरो भवेत्॥
नित्यं क्रियापरो धीमान् ब्रह्मण्यस्सत्यविक्रमः। अनन्यथा विशुद्धात्मा दुष्टसङ्गविवर्जितः॥

---

१. **ग-घ**—समुद्रश्रीवत्स  २ **ग-घ**—एवं लक्षणसंयुतान् विभो  ३. **क**—ऊनातिरिक्ता . पाति  **ख**—ऊनातिरिक्तादन्यत् पाति  ४. **ग-घ**—भक्तजन तदा  ५. **क-ख**—तथापरे.  ६. **क-ख**—साम्यमानुष्यम्

व्यधिशोकविनिर्मुक्तः पुत्रदारादिकैर्युतः। अपमृत्युविनिर्मुक्तो ज्ञानमासाद्य निर्मलम् ॥ १८२ ॥
श्वेतद्वीपं समायाति सुराणां यत्सुदुर्लभम्। ज्ञानिनामपि चान्येषां तत्र दृष्ट्वा जगत्पतिम् ॥१८३॥
परं ब्रह्मत्वमायाति तत्कर्मपरमः पुमान्। पश्यन्त्यारोप्यमाणं ये ब्रह्मसूत्रं जगत्प्रभोः॥ १८४ ॥
[1]तथानुमोदयन्त्यन्ये यान्ति तेऽप्यमरावतीम्। शृण्वन्ति ये विधानं तु पवित्रं पापनाशनम् ॥
प्राप्नुवन्ति च ते पुण्यमिष्टापूर्तादिकं हि यत्। नारीह्यनन्यशरणा पतिना परिचोदिता ॥
तद्भक्ता सः सती साध्वी कर्मणा मनसा गिरा। नित्यं भर्तरि चाद्रोहा प्रयता साङ्गतेन वै ॥
पवित्रकं जगद्योनेरारोपयति चाब्जज। सातुलं चैव सौभाग्यं प्राप्नुयादचिरेण तु ॥ १८८ ॥
देहान्ते देवनारीणां देवानां याति पूज्यताम्। सात्वरुन्धतिपूर्वाणामवाक् [2]समभिवीक्षते ॥
ज्ञानमासादयत्यन्ते येन यान्त्य(त्य)च्युतं पदम्। प्रोत्तारयति बन्धूनां दुष्कृतेभ्योऽब्जसंभव ॥
पितॄणां जनकादीनां नाम्ना स्नेहपुरस्तु यः। ददाति भूषणं विप्र मन्त्री मन्त्रात्मनो विभोः ॥
दुर्गते[3]स्सुगति याति धुसिन्धोरस्थिरा नरः। यथा सुराणाममृतं नृणां गाङ्गं जलं यथा ॥
स्वधा यथा पितॄणां च कर्मिणां तद्वदब्जज। पवित्रकं क्रियाढ्यानां पावनं भूतिवर्धनम् ॥
सर्वदोषभयघ्नं च सर्वोपद्रवनाशनम्। सर्वसौख्यप्रदं चैव सर्वगुह्यप्रकाशकम् ॥ १९४ ॥
यस्सम्यग्भगवद्भक्तः कृतमन्त्रपरिग्रहः। एवमेव प्रवृत्तो वा जन्माभ्यासात्सदार्चने ॥ १९५ ॥
अनन्यत्वेन वै विष्णोः परस्य परमात्मनः। प्रयत्नेनार्थनीयं च महतानेन देशिकः ॥ १९६ ॥
असन्निधानात् स्वगुरोरभावात्तस्य चाब्जज। प्रवर्तनीयमन्येन गुरुणाभ्यर्थितेन च ॥ १९७ ॥
कर्मणा मनसा वाचा नेतरस्याधमस्य च। नान्यदर्शनसंस्थस्तु मद्भक्तैस्तत्परायणैः ॥ १९८ ॥
पवित्रारोहणादीनामर्थनीया हि देशिकः। [4]मामतिप्रतिपन्नं च अन्तस्था वेत्ति यद्यपि ॥१९९॥
कृतार्थमतिभक्तत्वादमुं मन्ये तदा गुरुम्। प्राप्तमुत्तारकं शिष्यो मन्ये भक्तिवशाद् गुरुम् ॥२००॥
यत्रैवं चित्तवृत्तीनां साम्यमस्ति त्रयस्य च। शिष्यदेशिकमन्त्राणां तन्त्रमोक्षश्च सिद्धयः ॥
ज्ञात्वैवं यस्तु भक्तानामभक्तस्संप्रवर्तने। [5]मन्त्रदाने च शिष्याणां स याति नरकेऽधम ॥२०२॥
प्रत्यक्षमेति भक्तानां भक्तिः प्रागार्जिता शनैः। तत्सम्पर्कसमाचारान् मन्त्रदैवतनिन्दनात् ॥
तस्माद्विषयसंभूतं यस्य यद्विषयं स्फुटम्। परमात्मनश्चापि तस्य तत्सिद्धिदं स्मृतम् ॥२०४॥
यत्रास्ति देशिकानां च भक्तिरव्यभिचारिणी। [6]तत्रैव यदि शिष्याणामभिलाषोऽस्ति [7]पूजने ॥

१. **क–ख**—तदानुमोद  २. **ग–घ**—समभिवीक्ष्यते  ३. **ग–घ**—सुगतिं यान्ति धु सिन्धोरस्थिना नराः  ४. **क–ख**—मामाति प्रतिपन्नं च  ५. **क–ख**—मन्त्रदानैश्च  ६. **क–ख**—यतिशिष्या  ७. **ग–घ**—पूजिते

तदा [1]मन्त्रवरः प्रीतः सन्निधिं कुरुतेऽब्जज। सिद्धस्य समबुद्धेर्वै निष्क्रियस्य तु या क्रिया ॥
अतोऽन्यस्य क्रियां विद्धि भक्तिपूर्वा तु सा स्मृता। या च तद्विषया भक्तिः पतिवृत्तिसमोचिता ॥
अष्टाङ्गलक्षणा पूर्णा श्रद्धापूता च मोक्षदा। अतोऽन्या सिद्धिदा सिद्धिर्व्यभिचारफलप्रदा ॥
सर्वस्याहं तटस्थोऽहमाशयं वेद्मि तत्त्वतः। भक्तिर्मां प्रति [2]वै ताभ्यां यदा ह्यव्यभिचारिणी ॥
मन्त्रात्मनानुगृह्णामि शिष्यं गुरुमुखेन तु। नाभक्तेन त्वतो भक्तो दीक्षणीयः कदाचन ॥ २१० ॥
नाभक्तस्त्वतिभक्तेन योजनीयस्त्वदर्चने। गुरोरभक्ताद्भक्तानां भक्तिरभ्येति तापनम् ॥ २११ ॥
शारीरं मानसं दुःखं वर्धते च क्षणात् क्षणम्। भावमासुरतामेति येन यात्यधमां गतिम् ॥
गुरोरनन्यशरणाद्भक्तानां कमलोद्भव। द्विविधं त्रिविधं दोषमचिरात् क्षयमेति च॥ २१३ ॥
अनुग्राह्यादभक्ताच्च सावलेपात् क्रियोज्झितात्। गुरोरकीर्ति महती विद्वेषं सहते न वै ॥
सामुख्यं दुस्सहानां च दोषाणां दीक्षितस्य च। तस्मात्सर्वप्रयत्नेन अदृष्टफलसिद्धये॥ २१५ ॥
विहितं यच्च तत्कार्यं शिष्येण गुरुणापि च। नाभक्तस्संविदामोति नाभक्तो ध्यानमाप्नुयात् ॥
नाभक्तस्सत्क्रियां वेत्ति नाभक्तश्शास्त्रविद्भवेत्। नाभक्तमर्चा यागं च वह्निमर्चापयेत्तथा ॥२१७॥
बन्धापयेन्नमुद्रां च श्रावयेत्समयान्न हि। [3]योऽपरोधेन वा लोभादभक्तानां जगद्गुरो ॥२१८॥
विपर्ययार्थवेत्तॄणामपहासरतात्मनाम्। अभिगच्छापयेन्मोहात्स याति नरकं गुरुः ॥ २१९ ॥
प्रायश्चित्तं हि पूर्वोक्तं तापार्तो नाचरेद्यदि। इत्युक्तमरविन्दोत्थ यत्त्वया परिचोदितम् ॥२२०॥
भक्तानामुपकारार्थं पवित्रारोहणं शुभम्। प्रावृट् काले प्रवृत्ते तु त्रैलोक्योदरवर्तिनाम् ॥ २२१ ॥
मनुष्यामरसिद्धानां वक्तव्यं चानुवर्तिनाम्। [4]प्रवर्तन्ति हि वेगेन श्रद्धया वत्सरं प्रति ॥२२२॥
महत्यस्मिन् महाबुद्धे व्यापारे पारमेश्वरे। विभोश्शयनसंस्थस्य काले पुष्पफलाकुले ॥ २२३ ॥
गगने लङ्घ्यमाने तु सबलाकैर्वलाहकैः। कुमुदोत्पलकह्लारैर्भूषिते वसुधातले ॥ २२४ ॥
वनोपवन उद्याने हरितैश्शाद्वलादिकैः। शालिसस्यादिकैर्युक्ते पल्वलोदकशोभिते ॥ २२५ ॥
पवित्रकं कृतं विष्णोरन्तस्थस्याति तुष्टिदम्। तस्य प्राग्विहिता विप्र सततं शयनक्रिया ॥२२६॥
अथोक्तदिवसे ताभ्यां ब्रह्मन्निर्वर्तिते सति। रक्षणीयमवश्यं वै [5]कर्मयागं क्रियापरैः ॥ २२७ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां पवित्रारोहणं नाम त्रिंशोऽध्यायः ॥



१. ख-ग-घ—मन्त्रेश्वर. २. क-ख—वै त्वाभ्याम् ३. ग-घ—योऽवरोधेन
४. क-ख—प्रवर्तन्ति हि वेगेन ग-घ—हि वै येन ५. ग—कर्मयागम्

# अथ एकत्रिंशोऽध्यायः

**श्रीभगवानुवाच—**

पवित्रारोहणं कृत्वा चातुर्मास्यं महामते। निर्वहणीयं नियमैर्विविधैर्लोकपूजितैः ॥ १ ॥
शयनं देवदेवीयमर्चयेत्तद्विधिं शृणु। हेमादिरत्नखचिते सर्वाङ्गपरिशोभिते ॥ २ ॥
भगवत्यनुरूपे च शयने शशिवासिते। सितातपत्रचमरकिङ्किणीवरमण्डिते ॥ ३ ॥
वैजयन्तीगणोपेते हेमदण्डाङ्घ्रिभूषिते। वितानकेन दिव्येन कुङ्कुमाद्यैर्विभूषिते ॥ ४ ॥
शोभिते चोपरिष्टात्तु तिर्यगूर्ध्वपटावृते। जातीफलादिकैर्लाजसर्वबीजादिपूरिते ॥ ५ ॥
विदिक् चित्रपटैर्युक्ते सत्पुष्पप्रकराकुले। रत्नदीपसमायुक्त इत्यस्मिन् शयने सृजेत् ॥ ६ ॥
क्षीरोदार्णवमध्यस्थं सहस्रफणमौलिनम्। हिमकुन्देन्दुधवलं नागनाथं महामते ॥ ७ ॥
प्रणवेन स्वनाम्ना च वर्णान्तेन सबिन्दुना। ध्यात्वार्चयित्वा स्तुत्वा च नमस्कृत्य प्रसाद्य च ॥८॥
निवेश्य तस्मिन् कर्मार्चा हारकेयूरभूषिताम्। श्रीखण्डशशिवाह्लीकविलिप्तां पुष्पवेष्टिताम् ॥ ९ ॥
प्रावृतां नेत्रवस्त्रेण मृष्टरूपैः सुधूपिताम्। सबीजं मन्त्रवर्णं तु ओं लक्ष्मीपतये नमः ॥ १० ॥
समुदार्य धिया चार्घ्यमङ्गोपाङ्गक्रमेण तु। द्वादशाक्षरवर्णैस्तु स्वनामपदसंयुतैः ॥ ११ ॥
कर्मार्चाया अभावात्तु दर्भमञ्जरिजं शुभम्। यथोक्तेन विधानेन विष्टरं विनिवेश्य च ॥ १२ ॥
तस्मिन् मन्त्रवरं न्यस्य स्वपञ्जगगनोदरात्। निर्लीनाखिल[1]गण्डादिशक्तिपञ्जरमध्यगम् ॥ १३ ॥
व्यक्तीनां मूर्तिदानेन नीत्वा ध्यानान्वितेन च। देवाङ्गमहितं वस्त्रमभुक्तममलात्मकम् ॥ १४ ॥
दत्त्वोपरि समभ्यर्च्य पुष्पधूपविलेपनैः। सर्वतत्त्वोपसंहारं [2]चितश्शक्तिं तु विन्यसेत् ॥ १५ ॥
दक्षिणे त्वभिमानाख्यां मूर्तिं तु चमरोद्यताम्। एवं ज्ञाननिशां वामे तालवृन्तकरोद्यताम् ॥१६॥
उत्तमां भावयेन्निद्रां करसंवाहने रताम्। पादारविन्ददेशस्थां लालयन्ती कराम्बुजैः ॥ १७ ॥
आदाय चरणे दिव्ये साक्षाच्छ्री(स्स)सन्निधिस्थिता। आनन्दं ब्रह्मणो रूपं तस्यै देवाधिदेवता ॥
तदन्तस्स्मरणानन्दजातविस्मयलोचनाः। स्वनामपदमन्त्रैस्ताम्संपूज्याः प्रणवादिभिः ॥ १८ ॥
एवं हि देवदेवीयं शयनं कमलोद्भव। यथोक्तं संप्रतिष्ठाप्य चातुर्मास्यपरैर्नरैः ॥ २० ॥
कार्यात्र प्रत्यहं पूजा मार्जनं चोपलेपनम्। मृदा धातुविकारैर्वा सुगन्धैश्चन्दनादिकैः ॥ २१ ॥

१. घ—नाखिलगन्ध्यादि  २. घ—चिन्ताशक्तिम्

प्रदानं धूपदीपानां व्यजनेनानिलोत्थितः। शशिचन्दनसंयुक्तशीतलोदक [1]सत्क्रियाः॥ २२ ॥
कदलीदलकह्लारैः पद्मोत्पलविमिश्रितैः। [2]स्वेदशान्तिं समापाद्य पौनःपुन्येन पूजनम्॥ २३ ॥
वेणुवीणासमोपेतां गीतिं च मधुरस्वराम्। एवं मासद्वये याते जाते मेघरवेऽम्बरात्॥ २४ ॥
ब्रह्मन् भाद्रपदे मासि द्वादश्यां हि निशामुखे। ईषत् प्रबोधमाश्रित्य देवदेवो ह्यधोक्षजः॥२५॥
स्थित्यर्थममराणां च परिवर्तनमाचरेत्। दक्षिणेनाङ्गसङ्गेन त्यक्त्वा चोत्तानशायिकाम्॥ २६ ॥
योगनिद्रां समाश्रित्य प्रकुर्वन् प्रभवाप्ययौ। [3]मरुच्चक्राक्षसंस्थस्य विश्वबीजस्य पौष्कर॥ २७ ॥
मूलेन्दुमण्डलाच्चाथ आप्याय्याच्छादनाम्बरम्। अस्ते त्वाश्वयुजे त्वेवं द्वादश्यां परमेश्वरः॥२८॥
संत्यजेच्छयनं दिव्यं निशायां कार्तिकस्य (तु) च। उत्थायामरनाथश्च समाक्रम्य पतत्रिराट्॥
निश्शेषभुवनग्रामवीथीनां दोषशान्तये। विचरत्यप्रमेयात्मा नन्दयंस्तान् सुरादिकान्॥ ३० ॥
आवीक्षयञ्जगत्यस्मिन् स्वकृतं धर्मपद्धतिम्। एवं भक्तजनैः कार्यं तस्य तच्चेष्टितं महम्॥ ३१ ॥
विविधैरुत्सवैर्दानजपजागरणैश्शुभैः। नृत्तगीतसमोपेतैर्विलासैर्हास्यसंयुतैः॥ ३२ ॥
क्रीडमानैस्सुमनसैः प्रयतैः प्रणतैः प्रभो। एकदेशस्थितैर्विप्र अनन्यमानसैस्सदा॥ ३३ ॥
मासशेषं तपोनिष्ठैस्समर्थैः पुनरेव हि। स्वाश्रमे नामरक्षेत्रे रक्षणीयं महाजनैः॥ ३४ ॥
ब्रह्मन् द्वादशरात्रेण षड्रात्रेण शुभेन च (वा)। असामर्थ्ये त्रिरात्रेण अहोरात्रेण वाब्जज॥३५॥
नयेन्नक्ताशनेनाथ चत्वार्येते शुभव्रता। मासोपवासनिरतैर्नरैः परमवैष्णवैः॥ ३६ ॥
अन्ते त्रिद्व्येकरात्रं वा कार्यमच्युतजागरम्। पुण्याख्यानकथाभिस्तु स्तोत्रपूर्वैस्तु गीतकैः॥३७॥
सवाद्यैर्मधुरैर्नृत्तैरपहासैस्तु हर्षदैः। जयशब्दैर्नमस्कारैः करतालसमन्वितैः॥ ३८ ॥
समर्चयेच्छ्रीनिवासं जुह्वन् ध्यायन् जपन्नपि। भोगैः षड्रसपूर्वैस्तु [4]सुपूर्णैरोपचारिकैः॥ ३९ ॥
अर्घ्यैर्विलेपनैर्माल्यैर्मृष्टधूपसमन्वितैः। ब्राह्मे मुहूर्ते द्वाश्या मन्त्रमूर्तिं यजेद्धरिम्॥ ४० ॥
शङ्खध्वानसमोपेतैर्दुन्दुभीपटहस्वनैः। वन्दिवृन्दोत्थितोच्चाभिर्नानावाग्भिर्महामते॥ ४१ ॥
महाजयजयारावैः पुनः पुनरुदीरितैः। प्रबोधलक्षणैस्तैस्तैरुत्थाप्य शयनात्ततः॥ ४२ ॥
महता विभवेनाथ मण्डलादौ यजेत्क्रमात्। महत्स्नपनपूर्वैस्तु भोगैः पूर्णैर्यथोदितैः॥ ४३ ॥
महार्दीपैः प्रभूतैस्तु साङ्कुरैः पालिकागणैः। फलैः पनसपूर्वैस्तु मध्वाज्यतिलचर्चितैः॥ ४४ ॥
पुष्पार्घ्यचन्दनाद्यन्तैर्ब्रह्मसूत्रविभूषितैः। मालतीमल्लिकापूर्वसमुत्थैर्मञ्जरीगणैः॥ ४५ ॥
कदम्बचूतश्रीवृक्षऋजुशाखासमन्वितैः। तरण्डैः सूत्रसम्बन्धैः कुङ्कुमाद्यैस्सुपूजितैः॥ ४६ ॥

१. क-ख—सत्क्रियाः २. क-ख—स्वेदे शान्तिम् ३ क-ख—कुरु कक्ष ४. क-ख—१

गोभूहेमादिकैर्दानैश्चित्रैः प्रावरणैश्शुभैः । एवमिष्ट्वा तु होमान्तं ग्रामं वा नगरं गृहम् ॥ ४७ ॥
सपवित्रेण यानेन मचक्रेण शुभेन वा । मन्त्रास्त्रकुम्भयुक्तेन तद्बिम्बोदरकेण वा ॥ ४८ ॥
ब्रह्मघोषसमेतेन गीतवाद्यान्वितेन च । गणिकाभगवद्भक्तास्सहनागरिकैर्जनैः ॥ ४९ ॥
परिव्राड्ब्रह्मचारीभिर्जपस्तुतिपरायणैः । महता केतुयुक्तेन सितच्छत्रावृतेन तु ॥ ५० ॥
प्रदहन् सुरभि धूपं पृथक् साम्यं च गुग्गुलुम् । यानमेवं परिभ्रम्य द्रविणं चार्थिषु क्षिपेत् ॥
ततः प्रदक्षिणीकृत्य चतुर्धा प्रणिपत्य च । सर्वाङ्गैर्दण्डवद् भूमौ भक्त्या तु पुरुषोत्तमम् ॥
रथस्थमालयस्थं तु चेतसा संस्तुवन् जपन् । [1]प्रक्षिपन् चार्घ्यपुष्पे तु लाजान् सिद्धार्थकान् फलान् ॥
दृष्टं [2]यदेव दिग्देवं भावयेत्सर्वदिक्तथा । चङ्क्रमेद्भवनं कृत्स्नं स्थितिं बध्नाति येन वै ॥ ५४ ॥
भक्तानां भगवान् भक्तौ दिक्कालाद्यैरनाहत. । एतत्प्रदक्षिणं नाम सामान्यं सर्वदेहिनाम् ॥५५॥
समभ्यस्तं परिज्ञातं ददाति पदमाच्युतम् । जानुभ्यां सहपाणिभ्यां जानुभ्यां वा समाचरेत् ॥
सकृत्संवत्सरस्यान्ते त्रिसन्ध्याद्वादशीषु वा । एकमेव तथेज्यान्ते शिरसावननेन तु ॥ ५७ ॥
[3]समभ्यर्च्य ततो भावमचिरादेव [4]कर्मिणाम् । फलं यच्छति देहान्ते क्रमाल्लोकांस्तु वैभवाः ॥
कृतेज्यः परया भक्त्या प्रणम्यैवमधोक्षजम् । प्रदक्षिणैरर्चनीयं प्रणिपातसमन्वितैः ॥ ५९ ॥
सर्वक्षेत्राभिगमनात् सर्वतीर्थाटनात्तु वै । फलं ददाति भगवान् भक्तस्य चरणार्चितम् ॥ ६० ॥
प्रदक्षिणीकृता येन मूर्तिर्मन्त्रात्मनो हरेः । दोषैः प्रदक्षिणीकृत्य त्यक्तस्संभवगैर्नरैः ॥ ६१ ॥
भगव[5]त्कर्मदीक्षाणां भक्तानां भावितात्मनाम् । प्रकृष्टमेतद्ध्यपरं दक्षिणं शुभवर्त्मनि ॥ ६२ ॥
ज्ञानगोलकतुल्यत्वाच्चक्रवद्भ्रमणात्तु वै । प्रददाति शुभं नित्यं क्षिणोति क्लेशसंचयम ॥ ६३ ॥
भगवत्कर्मनिष्ठानां देवायतनवासिनाम् । भक्तानामपि वान्येषां कर्मवागिन्द्रियात्मकम् ॥ ६४ ॥
अन्तर्गर्भगृहे विष्णोर्गर्भाद्वाननमण्डपे । प्रणिपातगणं कुर्यात प्रदक्षिणगणं विना ॥ ६५ ॥
वहिस्थस्य विभोर्यस्मात्पाणिपृष्ठस्य दर्शनम् । दोषकृन्मन्त्रमूर्तीनामेवं देहमसिद्धिकृत् ॥ ६६ ॥
जानु[6]प्रदक्षिणं कृत्वा अन्तस्सन्निकटे विभोः । विरुद्धमपरं विप्र भक्तानां चरणभ्रम. ॥ ६७ ॥
उपानत्पादुकारूढच्छत्रोष्णीषधरास्तथा । यानाश्वशिविकासंस्थस्ताम्बूलाद्यं हि चर्वयन् ॥ ६८ ॥
क्रीडा[7]पक्षिहिलादण्डदर्पणं व्यजनं वहन् । प्रहसन्नथवामोदमुच्छ्वसन् प्रलपन् बहु ॥ ६९ ॥
विलासकेलिक्रीडां च कुर्वन् कुपितमानसः । त्वराविष्टश्शुभार्थी यो [8]लभेन्नात्र भ्रमन् फलम् ॥

१. क-ख—प्रदक्षिण चार्घ्यपुष्पे २ ग-घ—यथैव ३. क-ख— समततो भावकर्मणाम् ग-घ—समभ्यर्च्य ४. क-ख—कर्मणाम ५. ग-घ—कर्मदक्षाणाम् ६. क-ख—प्रदक्षिणं मत्वा ७. ख-ग-घ—पक्षिभिलादण्ड ८. क-ख—लभेन्नात्र द्रुमात् फलम्

अनन्यबुद्धिना तस्मात्तद्गतेनान्तरात्मना । कार्यं शुभेप्सुना नित्यं गृहायतनयानगे ॥ ७१ ॥
यस्माद्वै भूरिफलदमलक्लेशं महामने । एकवेरमनन्तं च [1]महामोक्षकरं परम् ॥ ७२ ॥
एवं प्रदक्षिणीकृत्य कृत्वा पुष्पाञ्जलिं ततः । अवतार्य रथान्मान्त्रं चक्राधिष्ठानपूर्वकम् ॥ ७३ ॥
पूजनीयं पुनरपि मुद्राबद्धाञ्जलि ततः । तर्पणीयमथाज्याद्यैर्दद्यात्पूर्णाहुतिं शुभाम् ॥ ७४ ॥
अर्घ्यधूपप्रदानाद्यैः क्षमयेत्पुरुषोत्तमम् । यानपात्रं तथा च्छत्रं प्रतिपाद्य सदक्षिणम् ॥ ७५ ॥
शयनं स्वगुरोर्विप्र द्विजानां तदसन्निधौ । कृत्वा जानुद्वयं भूमौ बद्धाञ्जलिरिदं पठेत् ॥ ७६ ॥
देव योऽीश्वरानादे कर्मणानेन चाखिलाम् । शुभां गतिं जनो यातु प्रीतिं त्वं परमां भज ॥७७॥
भोजयेद्ब्राह्मणान् पश्चाद्विविधैः पानभोजनैः । श्रद्धया दक्षिणान्तैश्च तृप्त्यर्थं पितृसन्ततेः ॥ ७८ ॥
अनुयागं ततः कुर्याद्बन्धुभृत्यसमन्वितः । विभवे सति वाब्जोत्थ कार्यमेवमनाकुलैः ॥ ७९ ॥
द्रष्टव्यममरैर्देवं [2]क्षेत्रे ब्रह्मरथे स्थितम् । ग्रामीये नागरे स्थाने विमाने वा स्थितं प्रभुम् ॥ ८० ॥
इत्येवमुक्तं भक्तानां विधानं कौमुदीयकम् । यस्य सालोक्यतापूर्वं फलं भाववशात् स्थितम् ॥
पवित्रारोहणाद्यं च भक्तानां भावितात्मनाम् । यदुक्तमेवमखिलं यथाक्रमलसंभव ॥ ८२ ॥
अस्वातन्त्र्यादसामर्थ्याद्वित्ताभावात्तु वा द्विज । द्वादशीष्वखिलास्वेवं कुर्यात्संवत्सरान्तरे ॥ ८३ ॥
वारिनेऽपि निशायां तु चातुर्मास्ये तु संयने । भक्तैर्निर्वहणीयं च तुलाभागावसानिकम् ॥८४॥
[3]प्राक् भवेत्तुलभो(गात्तु)गस्तु द्वादश्यां विगतं यदि । [4]निशायामाचरेत्कृत्स्नं पारम्यं तत्तिथेर्यतः॥
कुर्याद्व्रतवरं चैवं पञ्चाहमुभयोरपि । एकादशीपूर्णिमान्ते तुलाद्वै वृश्चिकावधि ॥ ८६ ॥
मधुमांसपरित्यागं मदिरास्त्रीनिषेवणम् । मारणं मृगजातीनां द्रुमविच्छेदनं तथा ॥ ८७ ॥
वनदाहं च वसुधाखातं कुद्दालकादिना । ताडनं गोपशूनां च वधबन्धादिकं नृणाम् ॥ ८८ ॥
निशाटनमवर्णानां व्यवहारं तु तैस्सह । [5]मृष्टोदनं तु साभ्यङ्गं सर्वं यत्नाद्विवर्जयेत् ॥ ८९ ॥
उपसंहारदिवसादपरेऽहनि पद्मज । भक्तानामास्तिकानां च विहितं वत्सरं प्रति ॥ ९० ॥
कर्तव्यमभिषेकं च स्वस्तिशान्तिशुभाप्तये । तस्मादनुग्रहधिया कर्ताचार्यवरेण तु ॥ ९१ ॥
जनन्या जनकेनाथ ऋत्विग्भिर्वा वयोऽधिकैः । गुरोरसन्निधानाच्च साधकः [6]साधकैस्तु वा ॥
भद्रासने समारोप्य साम्बुजे स्वस्तिकाङ्किते । सूत्रिते नवनाभे तु पद्मे वाष्टदले ततः ॥ ९३ ॥
कुङ्कुमाद्यैर्विलिखिते कुसुमैर्वा सुपूरिते । नेत्रवस्त्रैः परिच्छन्ने [7]यथोक्तरजसा कृते ॥ ९४ ॥

१. क-ख—महामोहक्षयकरम् २. क-ख—क्षेत्रात् ब्रह्मरथे ३. क-ख—प . भवे
४. क-ख—यगायामाचरेत् ५. क-ख—मृष्टोदन तु सौभाग्यम् ६. ग-घ—साधकस्तु वा
७. क—यथोक्त...स्तुते

घण्टाविधानपूर्णैस्तु प्राक्स्थितैर्वा नवैर्युते। जातबीजशरावैस्तु शुभपूर्णयवाङ्कितैः ॥ ९५ ॥
दधिदर्पण[1]सच्छत्रपुष्पैस्सन्माङ्गलीयकैः। सर्वबीजादिकैस्सर्वैस्सुगन्धैश्श्रीफलादिकैः ॥ ९६ ॥
मङ्गल्यगीतिभिर्वाद्यैर्ब्रह्मघोषसमन्वितैः। आचार्यैः पञ्चरात्रज्ञैर्ज[2]पध्यानपरायणैः ॥ ९७ ॥
प्रभवाप्ययसद्ब्रह्मसदागममतस्थितैः। अलाबुवीणाजरुजैर्वंशघण्टारवैस्सह ॥ ९८ ॥
ज्वालासुमनसः पूर्णकुम्भसद्वृक्षमञ्जरीः। साकारविविधाकन्यालंकृते यज्ञमन्दिरे ॥ ९९ ॥
दूर्वादीनपि चर्वद्भिर्गोवृषैर्बालवत्सकैः। परितश्चावृते गोभिर्वन्दि[3]बृन्दसमाकुले ॥ १०० ॥
वृद्धये तु परां लक्ष्मी सर्वशक्तिसमन्विताम्। प्राप्तये त्वाच्युतं सत्यं शाश्वतं पदमव्ययम् ॥१०१॥
भक्तानां विहितं स्नानविधिनानेन पौष्कर। पूर्वोद्दिष्टेन विधिना अधिवास्य यथाक्रमम् ॥ १०२ ॥
हेमाद्यं रत्नखचितं प्रागुक्तरचनान्वितम्। नवकं कलशानां तु न्यस्तव्यमुदकोदरम् ॥ १०३ ॥
सर्वेषां वरुणं तावद्ध्येयं फणिरथस्थितम्। वरदाभयहस्तं च प्रोद्गिरन्तं सुधारसम् ॥ १०४ ॥
स्वाद्वाख्यं क्षीरसंज्ञं च (तु) एकभावत्वमागतम्। विचित्रमकरारूढं रत्नपात्रकरोद्यतम् ॥ १०५ ॥
वरपाणि समुद्रं च ध्येयं सर्वत्र चाम्बुवत्। नारायणाङ्घ्रिसंभूतां पूर्वे जलघटोद्वहाम् ॥ १०६ ॥
आग्नेये कच्छपारूढां यमुनां देवपूजिताम्। मण्डूकाम्बुजसंस्थां च दक्षिणे तु सरस्वतीम् ॥
शनैः प्रवाहसंज्ञां च पाशबन्धविमोक्षणीम्। नैर्ऋते वृषभस्थां च पश्चिमे सिंहवक्त्रकाम् ॥
ऐरावती तु वायव्ये कलशे तु गजस्थिताम्। ईशानपद्ममध्येऽत्र वितस्तां मीनगां घटे ॥ १०९ ॥
नर्मदां महिषारूढां ममज्ञां देवपूजिताम्। वृ(द)षद्वतीं देविकां च परोष्णीं बडवाह्वयाम् ॥
सिन्धुः ककुप्सु सर्वासु अष्टासु परितः क्रमात्। उपकुम्भेषु वाब्जस्थास्सर्वास्तोयघटोद्यता ॥
कुसुमैस्स्तबकैर्युक्ता जलसुद्वीर्यमानसाः। वासुदेवादिमूर्तीशैश्शताष्टपरिमन्त्रितैः ॥ ११२ ॥
पूजितैरभिषेकं च दद्यात्सर्वफलाप्तये। ध्यात्वाधारे तु हेमाद्ये एवं चक्रगतेऽम्बुजे ॥ ११३ ॥
नदीसमुद्रवरुणयथोक्ते पूर्वनिर्मिते। उत्कृष्टमुक्तारत्नाढ्ये स्वस्तिकाद्यैर्विभूषिते ॥ ११४ ॥
द्वादशारासु [4]मासेशकेशवाद्यैरधिष्ठिते। सर्वाङ्गदेवतोपेते मन्त्रन्यस्ते प्रतिष्ठिते ॥ ११५ ॥
तदम्बुना तु वा कुर्यात् स्नानं चावभृथं शुभम्। प्रत्यहं तज्जलं मूर्ध्नि धारणादभिवादनात् ॥
मुच्यते सर्वदोषेभ्यो मङ्गल्यं वृद्धिमेव च। तीर्थेभ्यस्त्वासमुद्रेभ्यो गङ्गादिसरितो गणात् ॥
स्नानोत्थं फलमाप्नोति भावितात्माच्युताश्रयी। कृते चावभृथस्नाने परितुष्टोऽथ साधकः ॥११८॥
[5]भगवत्पदसिध्यर्थं गुरुपादाम्बुना स्वयम्। दक्षिणेन करेणैव स्वमन्त्रं मनसा स्मरन् ॥ ११९ ॥

---

१. क-ख—सच्छत्रपूर्णे. समाङ्गलीयकैः २. ग-घ—ध्यानजप्यपरायणैः ३. क-ख—वन्दिब्रह्मसमाकुले ४. क-ख—मासेऽथ ५. क-ख—भगवत्पद्म

मूर्ध्नि संसिच्य [१]शङ्खाख्यमुद्रया चोर्ध्ववक्त्रया। अम्बुसिक्तेऽम्बरेऽपास्य परि[२]धायापरे ततः ॥
प्राग्वदुष्णीषपूर्वैस्तु पुष्पैर्गन्धैस्तु भूषणैः। शरीरमभ्यलंकृत्य उपविश्यासने ततः ॥ १२१ ॥
यथोदितं पुरास्त्रेण कुर्यान्निर्भर्त्सनं ततः। [३]अभिनन्द्य कृतन्यासो मङ्गलार्घ्यपुरस्सरान् ॥ १२२॥
नृपोपकरणान् सर्वान् छत्रचामरपश्चिमान्। देशिकेन्द्रकरात् प्राप्य समुत्थायासनात्ततः ॥ १२३ ॥
नमस्कृत्य जगन्नाथं परमेश्वरमच्युतम्। अनलालयमासाद्य देशिकेन्द्रेण वै सह ॥ १२४ ॥
पुष्पस्रग्गन्धधूपैश्च फलैर्बीजैस्तु वा(चा)ञ्जलिम्। पूरयित्वार्चनं कृत्वा विभोर्वह्निगृहान्तरे ॥
संस्मरन् हृदि मन्त्रेशमुपविश्याग्निसंमुखम्। ततो मन्त्राभिजप्तेन साम्बुना विष्टरेण तु ॥ १२६॥
प्राग्वदामस्तकात्सर्वं स्पृशेद्ध्यान[४]धिया शुचि। कुर्याद्विन्यस्तदेहं तु ध्यात्वा मन्त्रं करोदरे ॥
गन्धपुष्पार्घ्ययुक्तं तद्दद्यान्मूर्ध्नि शिरोहृदि। सौत्रं वा कुसुमं दार्भं दामवर्णाभिमन्त्रितम् ॥
स्वेऽम्बरे मेखलासूत्रे उपवीतेऽथ कूर्परे। कृत्वा सम्यक् निविष्टं प्राक् दद्यात् शिष्यकराम्बुजे ॥
एवमैक्यं समापाद्य सगुणेनानलेन वै। आमोक्षात्सर्वसिद्धीनां तस्य साम्मुख्यसिद्धये ॥ १३० ॥
गुरुस्समाचरेद्धोमं पूर्णान्तं पुनरेव हि। मिश्रीभूतैस्समिद्द्रव्यैस्सप्तभिश्शर्करान्वितैः ॥ १३१ ॥
मध्यस्थं मन्त्रमूर्तेर्वै साष्टकं जुहुयाच्छतम्। सहस्रं वायुतं विप्र दद्यात्पूर्णाहुतिं ततः ॥ १३२ ॥
सविष्टरमधोवक्त्रं स्रुचामुपरि विन्यसेत्। स्रुचमभ्यर्च्य पुष्पाद्यैराज्यपूर्णां स्रुचं ततः ॥ १३३ ॥
कुर्यात्पूजां सुगन्धाक्तैः पुष्पैः सार्घ्यैर्निरम्बुभिः। उक्तसंख्यं त्वतस्त्वाज्यं तदर्धमथ होमयेत् ॥
पूजान्ते पातयेत्पूर्णां पुनरेव यथोदिताम्। शतात्सहस्राद्युताल्लक्षाद्वामललोचन ॥ १३५ ॥
ज्ञानात्मा पूर्वमूर्तीनां चतुर्थांश पृथक् पृथक्। तत्समं हृदयादीनामथोर्ध्वमखिलासु च ॥ १३६ ॥
परमेश्वरकान्तासु तदर्धेन तु पौष्कर। लाञ्छनाभरणादीनि सर्वाणि जुहुयात् क्रमात् ॥ १३७॥
साधारासनमन्त्राणां षण्णां कालात्मरूपिणाम्। गुर्वादीनां च विहितमर्धं लाञ्छनतर्पणम् ॥
सास्त्राणां लोकपालानां द्वास्थानां कमलोद्भव। गुरुपूर्वक्रमाद् हुत्वा अर्धमर्धं यथाक्रमम् ॥ १३९॥
कार्या चैकाधिका संख्या विषमार्धस्य चाहुतेः। आज्यहोमस्य विप्रेन्द्र तद्वदेवाम्बुजादिषु ॥
ब्रह्मयज्ञद्रुमोद्भूताः पूतज्ञानद्रुमोत्थिताः। एवं क्षीरतरुभ्यो वै समिधस्त्रिमधुप्लुताः ॥ १४१ ॥
जुहुयाद्विधिवन्मन्त्री नयन्मन्त्रगणं क्रमात्। तृप्तिं पूर्णप्रदानैस्तु [५]अंशांशहवनैः कृतैः ॥ १४२॥
स्वबुद्धिसंख्याहोमेन स्वाङ्गं वै विश्वविघ्नजित्। तर्पणीयश्च पूर्णान्तमेवमन्तेऽनलो द्विज ॥ १४३॥
पूर्णान्तेन नयेत्तृप्तिं मन्त्रव्यूहे कृते हृदि। इति संपादिते होमे दद्यात्पुष्पाञ्जलिं ततः ॥ १४४ ॥

१. क-ख—शङ्खाद्यमुद्रया २. क-ख—धायाबरे ३. क-ख—अभिनन्द्य तु तन्यासो
४. क-ख—धिया .. ५. क-ख—अङ्गाङ्गभवनैः.

तिलकं चोर्ध्वपुण्ड्रं वा कुर्याद्वै भूतिना शिशो। स्वस्थानेषु हृदा वर्म[1] शिरोमन्त्रेण च क्रमात् ॥
हृन्मन्त्रेण प्रयोक्तव्यं सर्वदा सर्वकर्मसु। तस्य सर्वाणि कर्माणि सदा तेन समाचरेत् ॥ १४६ ॥
सर्वमन्त्राख्यभूतस्य विधिमेवं समाचरेत्। कृते चास्रवणे वारिबिन्दवः स्रुङ्मुखात् च्युताः ॥
दद्यात्करेण शिरसि प्रणीताभाजनात्ततः। होममेतन्मुमुक्षोर्वै निष्कामस्य पुरोदितम् ॥ १४८ ॥
सकामस्य मुमुक्षोर्वै कुर्या[2]त्सालंकृतस्य च। काङ्क्षितं नानुजानाति सर्वज्ञो हृदये स्थितः ॥
अप्रार्थितोऽपि स्वर्गं तु भक्तानां यो ददाति च। किमदेयं हि तस्यास्ति तस्मा[3]दभ्यर्थनां त्यजेत् ॥
एतावदर्थनीयं च परमेश्वरमच्युतम्। जन्तुना कृतपूजेन नित्यमेव महामते ॥ १५१ ॥
मम यच्छ परां भक्तिं यया त्वं मे प्रसीदसि। त्वयि प्रसन्ने देवेश किं न प्राप्तं मया भुवि ॥
इत्युक्तस्त्वरविन्दाक्ष आभिषेचनिको विधिः। समाप्य भगवच्छास्त्रश्रवणेऽधिकृतो भवेत् ॥
अधिकारपदं दिव्यमासादयति वैष्णवम्। येनातिभक्तस्संसारादुत्तारयति[4] संकटात् ॥ १५४ ॥
कृते कलशदानेऽथ सक्तुना पललादिना। मण्डलाद्वाद्यतो दद्यात्प्रादक्षिण्येन पौष्कर ॥ १५५ ॥
सर्वदिग्भगवन्भूत'बलि दत्त्वा सहाम्बुना। सतिलोदकमध्वाज्यगन्धपुष्पान्वितेन च ॥ १५६ ॥
कार्या पितृक्रिया प्राग्वदोदनेनानलाग्रतः। बहिर्मण्डलवत्कुण्डाद्बलिदाने कृते सति ॥ १५७ ॥
आचम्य पूजयित्वाजं कुम्भात्कुण्डाच्च मण्डलात्। क्षान्त्याथ भुक्तं पूजार्थं माननीयो यथाविधि ॥
साङ्गं सपरिवारं च धूपयित्वा यथाक्रमम्। तत्क्षान्तिप्रार्थनां कृत्वा निरम्बुकुसुमादिकैः ॥
वह्निपूजां समापाद्य नमस्कृत्य यथाविधि। तच्छक्तिमात्मसात् कृत्वा हृदा संहारमुद्रया ॥१६०॥
विसृज्य स्रुक्स्रुवे कुर्यात् परिषेचनमम्बुना। यज्ञभूमेस्स्वशिरसि प्रणीतोत्थमथोदकम् ॥ १६१ ॥
अथ द्वाभ्यां न संहृत्य हृदि तत्स्थितमच्युतम्। स्तरोपसंहृतिं कृत्वा मधुक्षीराम्बुना ततः ॥
संप्राप्य यज्ञवसुधामानलीमपि पद्मज। सर्वमम्भसि निक्षिप्य समाहृत्यार्घ्यपूर्वकम् ॥ १६३ ॥
अनुग्रहार्थं शिष्यस्य अनुयागं समाचरेत्। भगवद्यागवत्कार्यं यागं तेनापि वै गुरोः ॥ १६४ ॥
दत्त्वा शिष्यं ततो यायादात्मयागे कृते सति। यथावदद्यप्रभृति मन्त्राराधनमाचरेत् ॥ १६५ ॥
मोहालस्यादिकैर्दोषैर्बुद्धिपूर्वेण चेतसा। नाचर्तव्यं विभोः पुत्र परित्यागं हि पूजने ॥ १६६ ॥
जपे तथाग्निभवने स्नाने दाने यथोदिते। स्तुतिपाठे यथा शास्त्रचिन्तने श्रवणेऽपि च ॥१६७॥
व्याख्याने भव्यबुद्धीनां नारायणरतात्मनाम्। शिरसा दधतामाज्ञां कृत्वा पादाभिवन्दनम् ॥
प्राणयात्रां ततः कुर्यात् नैवेद्यप्राशनादिकाम्। कृतोपवासा येऽश्नन्ति प्रापणं पारमेश्वरम् ॥१६९॥

१. क-ख—गिरोमन्त्रेण २. क-ख—सालकृतेन च ३. क-ख—दभ्यर्थिताम्
४. आत्मानमिति शेषः

सम्प्रदानावशिष्टं च पूतदेहा नरास्तु ते। वन्दनीया नराणां च मान्या वै सिद्धिसन्ततेः ॥
१अन्वात्मतत्वं विज्ञेयं विहितं तस्य सर्वदा। आत्मनैवात्मसिध्यर्थं यागमन्नेन तेन च ॥१७१॥
सहयज्ञावशिष्टेन साम्बुना च फलादिना। अनुयागं च तं विद्धि आत्मनात्मनि यत्कृतम् ॥
कुर्वन्ति भोजनात्पूर्वं प्रत्यहं प्राशनं तु ये। तच्छक्ति२ग्रहणं प्राणे प्रयोजनवशात्तु वा ॥
भावभक्तिसमायुक्तास्सन्मार्गस्था दृढव्रताः। अप्रयत्नेन ते यान्ति देहान्ते पदमाच्युतम् ॥१७४॥
येषां व्रतमिदं दिव्यं नराणां पुण्यकर्मणाम्। ते सर्वव्रतिनां मूर्ध्नि तिष्ठन्ति मखयाजिनाम् ॥
मन्त्रब्रह्मात्मनोविष्णोस्सम्यग्विधिनिवेदितम्। शुभं तस्य परिज्ञेयं मत्वा वापमिदं पुनः ॥१७६॥
इदं तदमृतं ब्रह्म इदमायुरनश्वरम्। इदं ज्ञानमिदं वीर्यमिदं तेजस्तु वैष्णवम् ॥ १७७ ॥
इदमिन्दुरखण्डं च स्थितमन्नात्मना स्वयम्। पर्जन्यरस्य भगवान् व्यञ्जनस्थितसिद्धये ॥१७८॥
हार्दानलात्मना भुङ्क्ते अध्यक्षःपरमेश्वरः। तच्छक्त्यानुगृहीतत्वात् सोऽहं प्रकृतिगः पुमान् ॥
एवमन्नदमन्नादं ज्ञेयमन्नं पुरस्थितम्। बाह्यतस्स्वाज्यदानेन संबोधमुपयाति च ॥ १८० ॥
यथा तथाम्बुनाभ्येति देहस्थो हुतभुक् प्रभुः। कारणं रसमन्नस्य षड्गुणं षड्विधस्य च ॥१८१॥
आत्मब्रह्म ततस्तस्मादीषत्कारणेन तु। सांमुख्यमात्मना नीत्वा ततोऽन्नं जुहुयाच्छनैः ॥१८२॥
प्रान्तपर्वैश्चतुर्धा प्राक् चातुरात्म्यव्यपेक्षया। तुर्यापेक्षावशेनैव जुहुयाद्वाहुतित्रयम् ॥ १८३ ॥
सहृदा मूलमन्त्रेण भुञ्जीयात्कवलैस्ततः। प्रयतास्यकरश्चान्ते पिबेन्मन्त्राभिमन्त्रितम् ॥ १८४ ॥
तोयं तद्वा यानपादाब्जपरिस्रुतमथापि वा। प्रतिष्ठितस्य वा पूर्वं तदाकृतिधरस्य च ॥ १८५ ॥
यतस्तत्सर्वपापघ्नं सर्वदोषक्षयङ्करम्। सर्वोपतापशमनं सर्वसौख्यप्रदं सदा ॥ १८६ ॥
पावनं सर्वतीर्थेभ्यो मन्त्रेभ्यः पद्मसंभव। अतस्तु भोजनान्ते वै हार्दाग्नेस्तर्पणं पुरा ॥ १८७ ॥
भावभक्तिपरो नित्यं कं पिबेदाज्यदोहवत्। ब्रह्मतीर्थे तदा पाने द्विः पठेद्वा चतुः क्रमात् ॥
दत्तशिष्टस्य चान्नस्य प्रापणाख्यस्य वै तदा। माहात्म्यमेवमतुलं परिज्ञेयं यथोदितम् ॥ १८९ ॥
यागावसाने योग्यानां भक्तानां परमेश्वरे। पितॄणां तर्पयन्नित्यं दद्याद्वै प्रीतये विभोः ॥ १९० ॥
यो वेत्त्येवं महत्तां च नैवेद्यस्याच्युतस्य च। विधिपूर्वं समश्नाति सयात्यच्युतसाम्यताम् ॥
व्रतज्ञेन जगद्योनेर्भक्तेन च विशेषतः। प्राणवद्रक्षणीयश्च प्राणेभ्यो नित्यमेव हि ॥ १९२ ॥
अन्नदानादिना सम्यग्विधिनानेन शक्तितः। परां प्रीतिं समभ्येति तस्य वै परमेश्वरः ॥१९३॥
मूर्तमन्त्रं परं ब्रह्म पूजितं प्रददाति यः। भगवत्तत्त्ववेत्तॄणां दत्तं तेनाखिलं भवेत् ॥ १९४ ॥
व्रतपर्यन्तकाले तु स्थानेष्वायतनादिषु। पुण्येषु सन्मुहूर्तेषु तिथिलग्नाश्रितेषु च ॥ १९५ ॥

१. क-ख—अब्जात्मतत्वम् २. ग-घ—ग्रहणं प्राणैः

कृत्वाऽक्षयं भगवतो दत्तमक्षय्यमेति च। सत्पात्राणां तदग्रे तु येन तुष्यत्यधोक्षजः ॥ १९६ ॥
अपात्राणामभक्तानां नास्तिकानां दुरात्मनाम्। वर्जनीयं प्रयत्नेन स्वानुष्ठानपरेण तु ॥ १९७ ॥
स्त्रीशूद्राणां पशूनां च भृतकानां विशेषतः। सकामो वाथ निष्कामो मन्त्रज्ञः सद्व्रतस्थितः ॥
मन्त्रपूतं हि नैवेद्यं निषिद्धानां ददाति यः। सिद्धोऽपि याति पातित्यमारुरुक्षुस्तु किं पुनः ॥

**पौष्कर उवाच—**

ज्ञातुमिच्छामि देवेश तत्तत्संक्षेपतो यथा। लौकिकं यत्त्वयोद्दिष्टं भगवद्धर्मसंग्रहम् ॥ २०० ॥

**श्रीभगवानुवाच—**

धनेन धर्मलब्धेन भूरिणाल्पेन वा पुनः। अधिकृत्याच्युतं देवं यदिवाप्यशुभं शुभम् ॥ २०१ ॥
भगवत्प्रीतये त्विष्टं सदस्यैस्तन्मयैस्सह। क्रतुवत् स्वल्पफलदा स्वर्गदा यद्यपि स्मृताः॥ २०२ ॥
सकामानां हि तत्रापि तेन तत्फलदास्तु वै। अकामानां तु भक्तानां [१]नूनमच्युतलोकदाः ॥
कृच्छ्रचान्द्रायणादीनि तपांसि विविधानि च। कृतानि भगवत्प्रीत्यै यथाभिमतदानि च ॥
यावज्जीवाधिकारं तु यदेभ्योऽभिमतं हि यत्। प्रत्यर्थं परमेशाय अङ्गीकृतमखेददम् ॥ २०५ ॥
तत्फलत्यचिरेणैव दिव्यज्ञानात्मना तु वै। पुण्यमासाद्य वै क्षेत्रं तत्र चागतमव्ययम् ॥ २०६ ॥
स्थले वा पत्रपुष्पाद्यैर्योऽर्चयत्यनिशं व्रती। भक्त्या ह्यनन्यचित्तस्तु देहान्ते तस्य देहिनः ॥२०७॥
प्रसादाद्देवदेवस्य स्थितिस्स्यात् सार्वलौकिकी। पूजां विष्णुवदाप्नोति यावज्जीवावधिं तु सः ॥
देहावसानसमये श्वेतद्वीपं प्रयाति च। भक्तिश्रद्धापरो विद्वान् नारायणपरायणः ॥ २०९ ॥
तैर्विमानैश्च मार्गेण ह्यर्चिराद्यान् महामते। [२]सुप्रसिद्धैस्सुगन्धैस्तु हृद्यैः पुष्पफलैश्शुभैः ॥

---

१. **क–ख**—ह्यानमच्युतलोदका.

२. इतःपरं मातृकाकोशेषु ग्रन्थपरिपाट्यां मिथः उल्लङ्घितत्व दृश्यते—**क–ख**—कोशौ एको वर्गः **ग–घ**—कोशौ अपरो वर्ग. तत्र प्रथमवर्गे यथा—अध्यायादितः आरभ्य "अर्चिराद्यान् महामते" इत्यन्तं प्रथमो राशिः—पश्चात् "विभवव्यूह" इत्युपक्रम्य "देवपादांबुपूर्वं तु तिलसत्फलचर्वणम्" इत्यन्ता अर्धन्यूना श्लोकविंशतिः द्वितीयो राशिः —अथ च "सुप्रसिद्धैः" इत्युपस्तुत्य "तद्भूत दर्शिते नैव मार्गेण महता मुने" इत्यन्ता श्लोकद्वाविंशतिः तृतीयो राशिः, अत ऊर्ध्वं "कृत्वा चाघ्राय" इत्युपक्रम्य "आध्यायसमाप्ति" चतुर्थो राशिः द्वितीयकोशवर्गे यथा—प्रथम, द्वितीय, तृतीयराशयः यथापूर्वं लिखिता. चतुर्थस्य आरम्भस्तु भिद्यते यथा—तृतीयराशेरनन्तर पुनरपि द्वितीयराशिं आन्त लिखित्वा तृतीयराशिं परित्यज्य तुरीयराशिरनुस्यूततया समग्रा लिखिता वर्तते कोशवर्गद्वयेऽपि द्वितीयतृतीयराशयोः व्युत्क्रमेण लेखननेव

योऽर्चयत्यच्युतं भक्त्या वने वा पर्वतान्तरे। बहवोऽभिमतान् कामान् प्राप्नोत्यप्रार्थितांस्तु वै ॥
देहान्ते वासवादीनां संपूज्यो भगवानिव। वैष्णवायतने दिव्ये सैद्धे वा पौरुषे तु यत् ॥२१२॥
कुर्यात् कर्म धिया भक्त्या स्नानं क्षीरादिना महत्। श्रीखण्डागुरुकर्पूरबाह्लिकेनानुलेपनम् ॥२१३॥
सितपीतारुणैर्दिव्यैर्दुत्तुलैर्वेष्ठनं ² तु वै। शुभेन सोत्तरीयेण उपवीतेन तु द्विज ॥ २१४ ॥
विभवे सत्यलंकारैस्सौवर्णै रत्नरञ्जितैः। मण्डयेच्च ततः पुष्पैस्स्रग्वरैश्चरणावधि ॥ २१५ ॥
धूपयेदाज्यसिक्तेन गुग्गुलेन शुभेन च। प्रभूतैश्च महार्दीपैस्तिलतैलाज्यपूरितैः ॥ २१६ ॥
अभुक्ताहतशुभ्रेतररञ्जितैर्व्यतिवेष्टनैः। गर्भीकृतत्वगेलाद्यैः पूजयेत्तदनन्तरम् ॥ २१७ ॥
ततो मध्वाज्ययुक्तेन दध्नाभ्यर्चितमीश्वरम्। नैवेद्यैर्विविधैः पूतैर्भक्ष्यैस्सफलमूलकैः ॥ २१८ ॥
पानकैः पावनैस्स्वच्छैश्शीतलैर्मधुरादिकैः। त्वगेलाद्यन्विर्तैर्वृष्टैर्धूपकर्पूरवासितैः ॥ २१९ ॥
नालिकेरोदकोपेतैस्तर्पणीयमनन्तरम्। नैवेद्याचमनार्थं तु गन्धोदकमनुत्तमम् ॥ २२० ॥
अभुक्तमहतं शुक्लमथ निष्पुंसनाम्बरम्। अथ चूर्णितकर्पूरवृष्टश्रीखण्डभावितम् ॥ २२१ ॥
सपूगफलमुत्कृष्टं ताम्बूलं विनिवेद्य च। शालयश्शिम्बधान्यादितिलास्सिद्धार्थकानि च ॥२२२॥
रोचना श्रीफलं पुष्पं दूर्वा धात्रीफलं दधि। दुकूलमहतं श्वेतं दक्षिणावर्तमम्बुजम् ॥ २२३ ॥
तमालादिदलच्छन्ने धातूत्थे ¹ वैदलेऽपि वा। पात्रे कृत्वार्घ्यपुष्पाढ्ये तत्र मध्ये निवेश्य च ॥
हेममानं हिरण्यं च स्वशक्त्या वानिनिर्मलम्। जानुनी भूगते कृत्वा शिरसावननेन तु ॥२२५॥
आदायोत्तानपाणिभ्यां विनिवेद्य जगत्प्रभोः। संपूरणार्थं सर्वेषां भोगानां द्विजसत्तम ॥ २२६ ॥
येनाप्तिस्सर्वकामानां भाविनां सत्फलार्थिनाम्। परमात्मनि संयोज्यमकामानां हि येन वै ॥
चामरव्यजनादीनि भोगान्यन्यानि यानि च। शयनासननिष्ठानि तन्त्रीवाद्यानि यानि च ॥
भेरीमृदङ्गसत्सङ्गपर्यन्तानि महान्ति च। तत्प्रेक्ष्य स्वधिया सम्यक् चित्तानन्दप्रदानि च ॥
संभवे सति सर्वाणि मनसा तदसंभवे। श्रद्धाभक्तिवशाच्चैव यो यजत्यमराजितैः ॥ २३० ॥
स्वर्गादिसत्यनिष्ठानां भुक्त्वा भोगान् यथेच्छया। ततः कालान्तरेणैव देवीयेच्छावशेन तु ॥२३१॥

विपर्यासे हेतु.—अत्रैव समाधि.—द्वितीयतुरीयराश्योरनालक्षितसन्धिबन्धतया स्थितिः ग्रन्थस्य परिपाटीं अनुसीव्यति, न विश्लेषयति च, यः पुनरन्तरापतितः तृतीयोराशि. स तु तुरीयेणराशिना साकं कथञ्चिदपि नान्वेतु शक्नोति. प्रत्युत प्रथमेन राशिना समं सुघटितमन्धानः प्रास्तावसरश्च संपद्यते. अस्मात् परं द्वितीय-राशिस्साधूपक्रमः ग्रन्थानुपूर्वीं पुष्णाति. अतः दर्शितानुसारेण ग्रन्थपरिपाटी सन्निवेशिता. परमतः सुधियः प्रमाणम्

१. क-ख—धातूत्थे पैत्तले

तद्भूतदर्शितेनैव मार्गेण महता मुने। [१]विभवव्यूहलोकानामास्ते कल्पशतान् बहून्॥ २३२ ॥
ज्ञानमासाद्य तत्रैव ह्यवतीर्याथ भूतले। लयं च सहसा याति भगवत्यमितात्मनि॥ २३३ ॥
क्षेत्रायतनसत्तीर्थवशेनाच्युतमर्चनम्। उक्तमुद्देशतः [२]किञ्चित् भक्तानां भवशान्तये॥ २३४ ॥
इदानीं का(ल)म'माश्रित्य हरेराराधनं शृणु। भक्तानां भवनाशार्थं विष्ण्वेकनिरतात्मनाम्॥
प्रभूतैः पावनैर्भोगैर्न्यायोपायसमार्जितैः। यष्टव्यं श्रद्धया भक्त्या पुण्येषु दिवसेष्वथ॥ २३६ ॥
नैमित्तिकेषु कालेषु नित्यमेव निराकुलैः। दिव्यान्तरिक्षभौमाख्यशुभलग्नक्षणेष्वपि॥ २३७ ॥
द्वादशीषु विशेषेण पक्षयोरुभयोरपि। दिनेषु [३]देशरूढेषु विज्ञानेष्वागमान्तरात्॥ २३८ ॥
सत्क्रियेष्वविरुद्धेषु देवतान्तरपूजनात्। पयोमूलफलाद्यैर्वा [४]परिविद्धाद्यवासरे॥ २३९ ॥
कोष्ठसंक्षालनार्थं तु पञ्चगव्यं ततः पिबेत्। भगवद्बिम्बपादाम्बुभावितं पर्णपात्रगम्॥ २४० ॥
सुवर्णदर्भसद्रत्नक्षालितेनाम्भसा सह। एवं कृतोपवासश्च प्राग्वदाराध्य केशवम्॥ २४१ ॥
हिरण्यान्नाम्बुगोभूमिदानैः कृष्णाजिनादिकैः। निवेदितैश्च सन्तोष्य पुण्डरीकाक्षमच्युतम्॥
तदाज्ञां शिरसादाय यो यच्छेत्तन्मयस्य च। भक्त्या फलार्थिनो नूनं लभेत्तु भगवत्पदम्॥
फलार्थिनोऽस्य च पुनः कल्पकोटिशतान् बहून्। दिव्य[५]भावफलत्वेन फलत्याशु महामते॥
आयुरारोग्यसद्भृत्यपुत्रदारान्वितस्य च। लाग्नं (यागं) मौहूर्तिकं कर्म तैर्व्यं यदपि विस्तृतम्॥
सशेषं प्राक् समापाद्य सावधानेन चेतसा। प्राप्तायां पुण्यवेलायां कर्मशेषं समापयेत्॥ २४६ ॥
पूर्णान्तमर्घ्यपुष्पाद्यैर्दत्तैर्हेमगवादिकैः। द्विवासरमहर्वात्र त्रिदिनं षडहं हि यत्॥ २४७ ॥
द्वादशाहं द्विपक्षं यत (च) क्षपयित्वा यथाविधि। व्रतान्तवासरात्पूर्वं सहजागरणादिना॥
जपहोमार्चन[६]ध्यान प्रणामैस्सप्रदक्षिणैः। [७]कथानकैस्तवैः पुण्यैः क्षपर्णायमतन्द्रितैः॥ २४९ ॥
ततः प्रभातसमये रात्रौ वा पुण्यवासरे। प्राणाग्निहवनान्तं च स्नानपूर्वं समाचरेत्॥ २५० ॥
सूर्योदयं विना रात्रौ विरुद्धमनिशं द्विज। सिद्धान्नं कल्पयित्वा तु द्विजानामुदकान्वितम्॥
दद्याच्च भगवत्यग्रे सुसिद्धं हविषा युतम्। देवपादाम्बुपूर्वं तु तिलसत्फलचर्वणम्॥ २५२ ॥
[८]कृत्वाचाघ्राय नैवेद्यं स्पृशेत्तत्पुनरेव हि। भोजनात् प्राक् समश्नीयादशुभध्वंसनाय वै॥२५३॥
वन्दनीयं सदानन्दसुखसौभाग्यसिद्धये। एष्यद्दिनोदयं ह्येवं व्रतज्ञैर्भगवन्मयैः॥ २५४ ॥

१. **क-ख**—अत्र यदवयं तत् (२१०) श्लोकस्य उत्तरार्धभूतस्य "सुप्रसिद्धेः" इत्यस्य टिप्पणे निरूपितम् २. **क-ख**—किञ्चिदुक्तानाम् ३. दिशि रुद्रेषु इति क्वचित् ४. **क-ख**—परिनिध्यार्ध-वासरे **घ**—परिपीञ्याद्य ५. दिव्यभोग इति स्यात् ६. **क-ख**—यानप्राणायामैः ७. **घ**—कथान्तरै-स्तवैर्दिव्यैः इति क्वचित् ८. अत्र यत् ज्ञातव्यं तत् (२१०) संख्यातस्य "सुप्रसिद्धेः" इत्यस्य टिप्पणे प्रका-शितम्

व्रताद्यदिवसं कार्यमेवं व्रतदिनस्य च। वर्जनीयं प्रयत्नेन प्रजासद्गतिकाङ्क्षिणा॥ २५५॥
परपीडदिनं शुद्धमुपादेयं हि सर्वदा। [1]पुरोवर्तिदिनांशेन युक्तं गुरुतरं तु तत्॥ २५६॥
[2]ईषदा द्यदिनोपेतमुपवासदिनं यदि। लोके लब्धप्रतिष्ठं च तथात्वेन तु सर्वदा॥ २५७॥
उपवासपराणां तु न तद्दोषप्रदं भवेत्। निष्कामानां हि भक्तानां व्रतं व्रतपरायणः॥ २५८॥
फलार्थिनां तद्भविनां कर्मतन्त्ररतात्मनाम्। [3]प्रतिषिद्धं च सिद्धत्वादुपवासेऽशनेऽपि च॥२५९॥
ततोऽङ्गभावं भ[4]क्तानां नतार्थं तत्प्रयान्ति च। मनसो येन कालुष्यं न भवत्यच्युतार्चने॥
उपवासेष्यशक्तानां कर्मब्रह्मरतात्मनाम्। परपीडसमं [5]विद्धि सदानं सर्वमाचरेत्॥ २६१॥
सोपवासवदन्यस्मिन्दिवसे भगवन्मयः। इतिकर्तव्यताशक्तः प्रासादेवं गुरुं यजेत्॥ २६२॥
सन्तोष्याभ्यर्थं वै क्षान्तिं वृत्त्यर्थं हि जगद्गुरोः। दिवसार्धसमानेन तदूनेनाधिकेन वा॥
युक्तमाद्यदिनेनैवं पुरोवर्ति च वासारम्। कृत्वा नक्ताशनं नित्यं यदि संकल्पमाचरेत्॥ २६४॥
फलं सातिशयं तस्य उपवासात्तु जायते। सर्वदानावसानान्तमासाद्य व्रतवासरे॥ २६५॥
तस्मिन्नेवात्मयागं तु विधेयमुपवासिना। तद्वासरक्षयाच्छश्वद्विशेषे पूजनादिना॥ २६६॥
शिष्टं दिनेऽपरस्मिन् वै कृतं तदभवं भवेत्। विरोधमन्यथासि(वि)द्धि कृतकृत्यस्य देहिनः॥
अक्षीणस्य परित्यागात् प्रभावादग्रहस्य च। परपीडतिथिष्वेवं हेयोपादेयतां पुरा॥ २६८॥
ज्ञात्वा तिथीशनाथात्मा वासुदेवोऽच्युतः प्रभुः। पूजनीयो हि पर्वादौ सोपवासैः क्रमेण तु॥
पक्षयोरुभयोश्चैव सितपक्षे तु वेच्छया। पितामहात्मा भगवान् तत्राद्येऽहनि पद्मज॥ २७०॥
विधिवत्पूजनीयश्च भक्तियुक्तेन चेतसा। [6]एवमब्ज द्विपक्षेण एकपक्षार्चने न वा॥ २७१॥
क्षपयित्वा यथान्यायं दानैर्होमैस्स्वशक्तितः। विधात्रात्मा द्वितीयायां तृतीयायां स्वयं हरिः॥
ततस्संयमनात्माहं (नं) चतुर्थे ह(रिं) नि मानयेत्। पञ्चम्याममृतात्मानं शक्तीशं षष्ठवासरे॥
सप्तम्यां ज्ञानमूर्तिं वै विश्वात्मा तदनन्तरम्। नवम्यामथ सिद्धात्मा धर्मात्मा भगवांस्ततः॥
ईशानात्माथ देवेशस्सूर्यात्मा दिवप्रकाशकृत्। कामात्माथ त्रयोदश्यां कलात्माथ महामते॥
भगवान् पितृसंज्ञात्मा भेदास्त्वेते जगत्प्रभोः। काम्यकर्माधिकारेण नित्यं चाभिमतास्ये॥
पूजनीयोऽर्घ्यपुष्पाद्यैरुपहारैः क्रियान्वितैः। पूजार्थमाद्यदिवसे ब्राह्म(ब्रह्मा)णं वत्सरं यजेत्॥
एवं हि वाग्विभूत्यर्थी देवं धातारमव्ययम्। मोक्षविघ्नविनाशार्थं हरिं तत्सिद्धयेऽपि च॥२७८॥

१. क-ख—पुरोवृत्ति २. क-ख— . माद्यदिनो ३. क-ख—प्रतिषिद्ध च सिद्धुपवासे ४. ग-घ—क्तानामुक्तार्थं तत्प्रयाति च ५. क-ख—विद्धि.. सर्व ६. एवमब्दे द्वि इति स्यात्

अधर्मशान्तये चैव [1]यमं संयमतां ततः। आयुरारोग्यवृद्ध्यर्थं पञ्चम्याममृतेश्वरम् ॥ २७९ ॥
यजेच्छक्तिप्रभावार्थं षष्ठ्यां शक्तीशमच्युतम्। स्वसंविदाप्तये सम्यक् तद्दिनेशमथार्चयेत् ॥२८०॥
प्रभूतये तु विश्वात्मा त्रिविधास्वथ सिद्धिषु। प्राप्त्यर्थं नवमीनाथं सधर्मावाप्तिकृत्ततः ॥२८१॥
दशम्यामर्चनीयं च तद्दिनेशं महामते। एकादशेऽह्नि विद्यार्थी विद्यानाथमहेश्वरम् ॥ २८२ ॥
महत्तेजःप्रभावार्थं तदीशं द्वादशेऽहनि। नानास्त्रीरत्नलाभार्थं त्रयोदश्यां च तत्पतिम् ॥ २८३ ॥
कालात्मा कालमृत्यूनां विजयेऽथ यजेत्सदा। शान्तये त्रिविधस्याथ ऋणस्य परमेश्वरम् ॥२८४॥
एवं पञ्चदशाहेशो माननीयस्ससर्वदा। यद्यप्युक्तं तिथीशानामर्चनं तिथिषु द्विज ॥ २८५ ॥
नैकान्तिनां तद्विहितं द्विजानामफलार्थिनाम्। एकादश्यां हि वै तेषां पक्षयोरुभयोरपि ॥२८६॥
[2]परपीडं च विहितं तन्निष्ठं वा परावृतम्। तिथीश्वरद्वयेनैव यद्यप्युक्तं तिथिद्वयम् ॥ २८७ ॥
एकादश्यादिकं चैवं तथापि द्विजसत्तम। गौणमेतन्न मुख्यं च मुख्यत्वेन तदाच्युतम् ॥२८८॥
न केवलं हि तद्यावद्वस्तुजालं हि चापरम्। मनवश्चोपदेष्टारः प्रपञ्चस्यास्य पौष्कर ॥ २८९ ॥
एवं प्रवर्तितं सर्वं भक्तानुग्रहकाम्यया। [3]पूर्णभावेश्वर पदात् सुपूर्णमय ? मुदीरितम् ॥२९०॥
[4]व्रतार्थमुपवासानां येन संवत्सरस्य च। संकल्पमुदकक्षेपपूर्वं कृतमकृत्रिमम् ॥ २९१ ॥
तस्य द्वादशमे मासे अनुयागावसानिकम्। द्वादश्यां विहितं सर्वमन्यथा वात्सरं फलम् ॥
विफलं नूनमायाति त्रयोदश्यां [5]समर्चनात्। इच्छयाभिमतायां वै एकादश्यां समाचरेत् ॥
त्रिवर्गफलसिद्ध्यर्थं भक्त्या तावत्फलं विना। एकरात्रादिकं विप्र व्रतं व्रतपरायणः ॥ २९४ ॥
सर्वभावेष्वसक्तत्वान्नदोषस्तस्य जायते। यजने चात्मयागे च त्रयोदश्यां विनोदयात् ॥ २९५ ॥
पूर्वप्रहरपर्यन्तकालाद्वा धर्ममिश्रितम्। ऊनाधिकं तु प्रहरं द्वादशाख्यं यदा द्विज ॥ २९६ ॥
अङ्गभावं त्रयोदश्यामुपयातं महामते। अनुद्यमेनेच्छया तु परिहृत्य विशेषतः ॥ २९७ ॥
स्वबुध्या च त्रयोदश्यामितिकर्तव्यतां चरेत्। प्रत्यवायो महांस्तस्य विहितं वैष्णवस्य च ॥२९८॥
अमन्त्रज्ञस्य देवानामधिकं द्विजतर्पणम्। मन्त्रज्ञस्यार्चनं होमं जपदाने स्वशक्तितः ॥ २९९ ॥
[6]प्रीतस्समाचरेद्यत्नं व्रतवांश्च [7]क्रिया परः। संपद्यतेऽखिलो येन मुख्यकल्पविधिस्सदा ॥३००॥
भक्त्या संप्रतिपन्नानां विना शाठ्येन मायया। व्रतिनां मुख्यतस्सम्यगनुकल्पं समं स्मृतम् ॥
सर्वस्य हृदयस्थो वै देवस्सर्वेश्वरो हरिः। सत्यार्थं वेत्ति वै भावं फलं यच्छति तत्समम् ॥

---

१. ग–घ—यमसयमतां स्थितम् २. सर्वत्र "परपीड" इत्यस्ति, क्वचित् 'परिपीडं' इति दृश्यते ३. क–ख—पूर्णभावेश्वरभवात् ४. क–क—भूतार्थम् ५. ग–घ—समापनात् ६. ग—अन्तस्समाचरेत्, पूतस्समाचरेत् इति च पाठः ७. क–ख—क्रिया विना

सुवर्णं रत्नमुदकं षड्रसानि तिलानि च। [1]आज्योपवीतातपत्रमुपानद्वस्त्रगोमहीः ॥ ३०३ ॥
स्रगन्धदीप[2]धान्यं च सत्फलं कामिकास्त्वमी। प्रदाय समुदायेन कामदास्ते भवन्ति च ॥
कामधेनुघटैस्तस्माद्बुधश्रवणवासरे। द्वादश्यां प्रीणनीयश्च निम्नगासागरक्षितौ ॥ ३०५ ॥
सर्वकामाप्तये देवस्सर्वसत्त्वहिताय च। सर्वद्वन्द्वविनाशार्थी पितॄणां तृप्तये घटम् ॥ ३०६ ॥
कामधेन्वाख्यदानेन अनेन परमेश्वरः। प्रयाति परमां प्रीतिं जगदुद्धरणोद्यतः ॥ ३०७ ॥
अवेक्ष्य देशकालादीन् गृहे वायतनेऽच्युतम्। श्रद्धयाभ्यर्चितं तं तु प्रदत्तं स्याद्यथाविधि ॥
[3]न चेत् किन्त्वङ्गभावं तु भावभक्तिवशात्तु वै। द्विजलं यत्र वा तीर्थे गङ्गायमुनसङ्गमे ॥३०९॥

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां लोकधर्मो नाम
एकत्रिंशोऽध्यायः ॥

(समुदित श्लोकसंख्या ३०९)

## अथ द्वात्रिंशोऽध्यायः

**पौष्कर उवाच**—

भगवन् भूतभव्येश नृणां सन्मन्त्रयाजिनाम्। तदर्चनपरित्यागाद्बुद्धिपूर्वात्तु किं भवेत् ॥ १ ॥

**श्रीभगवानुवाच**—

मन्त्रपूर्वं हि सङ्कल्पं कृत्वा मन्त्रसमर्चने। अनिर्वेदान्महाबुद्धे यावदायुष(ष्य)मेव च ॥ २ ॥
सन्दिष्टदेवतानां च कर्मणा मनसा गिरा। यत्नान्निर्वहणीयं तच्छक्त्या स्वविभवेन च ॥ ३ ॥
अस्वातन्त्र्यादसामर्थ्याज्जाते वै सूतकादिके। विधिवत् प्रार्थनापूर्वं गुरुमर्चापयेत्तदा ॥ ४ ॥
संयतं गुरुपुत्रं वा भ्रातरं सहदीक्षितम्। कनिष्ठमथवा ज्येष्ठमन्यथा कमलोद्भव ॥ ५ ॥
प्रायश्चित्तं भवेद्घोरं प्राक्संकल्प[4]परीक्षया। तदर्थमितरेषां वै मन्त्रमुद्रादिकं स्वकम् ॥ ६ ॥

१. **क-ख**—आज्योपवीता... २. **क-ख**—धान्यापस्सत् ३. **क-ख**—...भावभक्ति
४. परिक्षयात् इति स्यात्

नाख्येयमत्यये प्राप्ते सम्यक्सिद्धिपरैर्नरैः। प्रकाशयति यो मोहान्मन्त्रमुद्रादिकं [१]स्वकम् ॥७॥
इतरेषामभक्तानां तन्त्र(त्र)मन्त्रेश्वरो द्विज। सहसिद्धगणेनैव समभ्येति पराङ्मुखम् ॥ ८ ॥
दत्त्वा चैव महादुःखं तस्माद्यत्नेन याजकैः। स्वमन्त्रं गोपनीयं च इतिकर्तव्यतान्वितम् ॥ ९ ॥
मुक्त्वा गुरुं सुतं जायां तच्छिष्यं चाप्यकृत्रिमम्। नान्येषां [२]सन्निधौ कुर्यान्मन्त्रसन्तर्पणार्चने ॥
तत्रापि कमलोद्भूत इतिकर्तव्यतापरं(रः)। प्रोच्चरेन्मनसा मन्त्रं मन्त्रध्यानं तु गोपयेत् ॥ ११ ॥
तद्वन्मुद्राक्षसूत्रं च यथा वै सिद्धिभाग्भवेत्। एवमेव हि वै येन विना मन्त्रपरिग्रहात् ॥ १२ ॥
देवार्चां स्वगृहे भक्त्या [३]संस्कृत्य विनिवेशिताम्। तस्यार्चने नियोक्तव्यस्स्वसामर्थ्यादिके सति ॥
द्विजेन्द्रः पञ्चकालज्ञः षट्कर्मनिरतस्तु वा। संभवे सति चैतस्य वृत्तिं कुर्याच्च शाश्वतीम् ॥
शाश्वतं भवतो येन ऐहिकामुष्मिकं फलम्। अन्यथा नोपरोधेन न भयेन न मायया ॥ १५ ॥
देवमर्चापयेत् प्राज्ञो नित्येऽप्याकस्मिकेऽपि वा। [४]सुसंपूर्णफलप्राप्ते[५]स्सदद्धत्यममलेक्षण ॥ १६ ॥
तदर्थमर्चनं येन नित्यमङ्गीकृतं पुरा। [६]प्रत्यवायं हि तल्लोपात्तस्य तत्फलभाग्भवेत् ॥ १७ ॥
नावक्तव्यमतस्तस्माद्वृत्तिलोपं शुभेप्सुना। कादाचित्केतु वा नित्ये नियुक्तानां हि वार्चने ॥१८॥
बहिःप्रतिष्ठितानां च स्थापितानां तु वा गृहे। वृत्तिं भुङ्क्ते तु यां यस्य यन्निमित्तं महामने ॥
तन्निमित्तात् फलं तस्य सङ्कल्पादेव चाखिलम्। तस्मान्न लोपयेद् वृत्तिमाराधनपरायणः॥ २० ॥
मनसा मन्त्रमूर्तेर्वै अर्थिनां गृहमेधिनाम्। ज्ञात्वा हृदयसद्भावं द्वाभ्यां वै देवता द्विज ॥
विदधाति फलं सम्यक् प्रत्यवायं करोति वा। एवं ज्ञात्वा प्रयत्नेन शास्त्रसद्भावमब्जज ॥ २२ ॥
नोपेक्ष्या बुद्धिपूर्वाच्च सावलेपेन चेतसा। या काचिच्चातुरात्मीया मूर्तिर्वा वैभवी विभोः ॥२३॥
[७]सार्चा तु शैलकाष्ठोत्था पटे कुड्ये च चित्रिता। आत्मशक्त्यनुसारेण सूतकादौ सदार्चने ॥
लोपस्संरक्ष[८]णीयश्च ज्ञात्वा कालं कुलोत्थि(चि?)तम्। कृत्वा स्वस्वनिवृत्तिं च श्रद्धापूतेन चेतसा ॥
तावदर्चापयेद्यावत्कालमभ्येति निर्मलम्। क्षान्त्यर्थमर्चनं भूयस्स्नानपूर्वं समाचरेत् ॥ २६ ॥
हुत्वाग्निं विधिवद्भक्त्या गुर्वादीनां च दक्षिणा। [९]प्रायश्चित्तोऽन्यथा विप्रभवेदाराधकस्य वै ॥
अनर्चनात्तु देवानां कलितानां गृहान्तरे। यस्माद्व्यक्तिगतानां च देवानामर्चनं नृणाम् ॥ २८ ॥

१. **क-ख**—स्वयम् २. **क-ख**—सन्निधिम् ३. **क-ख**—संस्तुत्य ४. **क-ख**—कोशयोः 'सुसंपूर्ण' इत्यस्मादर्धात् प्राक् अर्धद्वय प्रमादपतितमस्ति यथा 'कादाचित्के तु वा नित्ये नियुक्तानां द्विजार्चने। बहिःप्रतिष्ठितानां च स्थापितानां तु वा गृहे' इति ५. **ग-घ**—संपूतममलेक्षण ६. **ख**—प्रत्यवायं भूतल्लोक पातनस्य तत्फलभाक्भवेत् ७. **क-ख**—सिद्धा तु ८. **क-ख**—णीयं च... **ख**—ज्ञात्वाकालं...लाञ्छितम् ९. **क-ख**—प्रायश्चित्तो...वेदाराध

शुभप्रद ह्येवमेव किं पुनः कमलोद्भव। विधिपूर्वं तु निश्शेषं सामग्रीभिस्समन्वितम् ॥ २९ ॥
[1]सह वै भोगसंपत्त्या भक्त्या सश्रद्धया द्विज। नीतिमार्गगतेनैव बुध्या तु सुविशुद्धया ॥३०॥
मन्त्रमुद्रासनध्यानैर्देवतानां यदर्चनम्। [2]तदर्थसिद्धिकृन्न् शश्वद्याजकानां यथास्थितैः ॥ ३१ ॥
एवं ज्ञात्वा नावलेपः कार्यस्संसारभीरुणा। अनर्चने तु देवानां काम्ये नैमित्तिकेऽब्जज॥ ३२ ॥
प्रत्यहं च विशेषेण तव विघ्नं यथा भवेत्। विप्रादीनां च भक्तानां विप्रयोगादिकान्तु वै ॥३३॥
दिव्यपित्र्योचितं स्नानं कृत्वा तदनु पौष्कर। प्राणायामं जपान्तं च [3]प्राधान्येनाभिवर्तिनाम् ॥
मन्त्राणां च महत्तेषां सिद्धान्ताख्यागमस्य च। प्राप्यते तदनुष्ठानात् समोत्कृष्टतरं फलम् ॥
तथा च कमलोद्भूत जगत्यस्मिन् हि दृश्यते। देवासुरमनुष्याणां व्यवहारं स्वभावजम् ॥ ३६ ॥
जात्युक्तैः स्वप्रणैर्युक्ता वर्णाद्याश्रमिणोऽखिलाः। पुराणस्मृतिपारज्ञा वेदवेदान्तवेदिनः ॥३७॥
स्वकर्मधर्मनिरता मुनयोऽपि महामते। न यान्ति परमां सिद्धिं विना मन्त्रपरिग्रहात् ॥ ३८ ॥
सैद्धान्तिकादनुष्ठानात्तद्विधाना च सेवनात्। किं पुनर्लोऽभमोहार्थं मानवा मन्दबुद्धयः ॥३९॥
ज्ञात्वैव यत्नमातिष्ठेन्मन्त्राराधनकर्मणि। [4]प्रसादने गुरूणां च सिद्धान्ताद्यवगाहने ॥ ४० ॥
तन्निष्ठानां यतस्सम्यक् कैवल्यममलेक्षण। अपरोक्षमतोऽन्येषां शुष्कतर्करतात्मनाम् ॥ ४१ ॥
ज्ञानकर्मरतानां च सिद्धयो विविधास्त्विह। सर्वथा यान्ति कैवल्यं शश्वद्देह[5]परीक्षया ॥ ४२ ॥

**पौष्कर उवाच—**

[6]नाथज्ञानानुविद्धस्य ज्ञातुमिच्छामि साम्प्रतम्। कर्मणोऽहं स्वरूपं च मन्त्रिणां यन्महर्द्धिदम् ॥

**श्रीभगवानुवाच—**

वाचकान्तानिविष्टं तु मन्त्रकृत्यादिकं हि यत्। प्रयाति चाङ्गभावं तु भोगजालं हि मन्त्रिणाम् ॥
[7]तत्तदादौ परिज्ञेयं नित्यमाराधकेन तु। शुद्धसंवित्स्वरूपं च प्रस्फुरन्तं स्वतेजसा ॥ ४५ ॥
विषयेन्द्रियभूताख्ये नानाकरणशक्तिभिः। [8]सुसंपूर्णं प्रबुद्धाभिर्न्यस्तभूताभि परस्परम् ॥ ४६ ॥
यच्चाभिमानिके रूपे भोगे व्यक्तिं व्रजन्ति च। तत्पुनर्भोगकैवल्यसिद्धये स्वयमेव हि ॥ ४७ ॥
प्रसिद्धं लक्षणेनैव वपुषा मन्त्रयाजिनाम्। समायात्यङ्गभावं च एवं नित्यं स्थिता स्थितिः ॥४८॥
सांप्रतं च प्रबुद्धैस्तु सा पद्मदललोचन। क्षेप्तव्या भावनापेक्षो [9]वस्तु तच्चासतो न हि ॥४९॥

१. **क-ख**—..सश्रद्धया २. **क-ख**—तदर्थ . द्यान ३. **क-ख**—प्राधान्येनाभव .. ४. **क-ख**—प्रसादेन ५. परिक्षयात् इति स्यात् ६. **क-ख**—नाथज्ञानां तु सिद्धस्य ७. **क-ख**—तत्तदन्तपरि ८. **ग-घ**—स्वसंपूर्ण ९. **ग-घ**—भावनापक्षे वस्तुतः

सत्वं स्याद्भावमन्त्रेण सद्भावं किन्तु साधनम्। आप्तवाक्यप्रधानानामागमैकरतात्मनाम्॥ ५०॥
[१]सम्यगच्युतभक्त्या वै निर्मलीकृतचेतसाम्। यथाजलत्वं वै वह्नेर्युक्तिभिर्नोपपद्यते॥ ५१॥
एवं जलस्य वह्नित्वं न कदाचित प्रजायते। यत्र वा मन्त्रिणा ताभ्यो(भ्यां)विपर्यासोऽभिदृश्यते॥
तदिन्द्रजालं वै मान्त्रं भक्तानां शुभवर्त्मनि। प्रेरकं कमलोद्भूत नानाप्रत्ययलक्षणम्॥ ५३॥
ज्ञानमूर्तिस्तु भगवान् भक्तानुग्रहकाम्यया। भुक्त्वा भोगात्मनांशेन भुनक्ति स्वयमेव हि॥ ५४॥
[२]मुक्तये याजकानां तु द्विविधं वस्तुसंग्रहम्। द्विविधेन तु भेदेन तस्मान्नित्यं समभ्यसेत्॥५५॥
ज्ञानयुक्तं हि वै कर्तृ ' कर्मैवं सुविलक्षणम्। यत्प्राप्तमाप्तवक्त्रात्तु आगमान्निश्चयीकृतम्॥५६॥
अभ्यर्थनादिना मन्त्रं यत्क्रमात्समुपागतम्। मुद्रान्वितं महाबुद्धे ह्यस्तित्वेनाप्यलङ्कृतम्॥५७॥
तत्प्रमादादबुद्धानामन्यकर्मरतात्मनाम्। वर्णाद्यैर्व्यत्ययीभूतं [३]विलुप्तं वा स्वरादिना॥ ५८॥
अधिकं वाब्जसंभूत तत्करोत्यशुभं सदा। मन्त्रिणामचिरादेव तत्रापि कमलोद्भव॥ ५९॥
अतिभक्तिप्रभावेन वाच्यस्यानेकरूपिणः। संमुखीकरणादीनां कर्मणा संप्रयोजितम्॥ ६०॥
तदनुग्रहसामर्थ्याद्वाञ्छितं संप्रयच्छति। यस्मात्सद्भक्तिभूतानां प्रपन्नानां क्रमं विना॥ ६१॥
प्रसादमेति मन्त्रेशस्त्वचिराद्भावितात्मनाम्। कि पुनर्वै क्रियाज्ञानसंपूर्णानां तु पौष्कर॥ ६२॥
भक्तिश्रद्धापराणां च बोधितानां च देशिकैः। विना गर्वोक्तिमिश्रैव वाक्यैश्चित्तानुरञ्जकैः॥६३॥
समुद्राणां च मन्त्राणामुपायं प्राग्यतो महत। परम्परागतं चैव शाश्वतं हि गुरुक्रमम्॥ ६४॥
ततस्सदास्तिकत्वं च तत्परिग्राहिणो द्विज। संयमं भक्तिपूर्वं तु सक्रियं तदनन्तरम्॥ ६५॥
ततश्चैवागमार्थं तु पश्चात्संवेदनं स्वकम्। बुध्वैवं भक्तिपूर्वं तु ह्युपायैर्विविधैः पुनः॥ ६६॥
आप्तस्सदागमज्ञश्च सेवनीयस्सदैव हि। नित्यं मन्त्रपरेणैव दृष्टादृष्टफलार्थिना॥ ६७॥
संभवे सति सम्यक्च प्रत्यहं तस्य पौष्कर। योगक्षेमादिकं सर्वं चिन्तनीयं स्वशक्तितः॥ ६८॥
[४]यस्मादस्मिन् हि संसारे गुरुत्वेन प्रवर्तितम्। ईश्वरेच्छावशाच्चैवमच्युतं परमेश्वरम्॥ ६९॥
तन्मुखेन महाबुद्धे यः प्रसर्पितुमिच्छति। [५]स्वमन्त्रं भक्तिमत्यर्थं तदादौ तस्य. . ॥ ७०॥
तत्पुत्रस्याथवा भक्त्या अनुयागविधौ सदा। निवेदनीयं पाकाग्रं परितुष्टेन चेतसा॥ ७१॥
आस्तां तावन्महाबुद्धे स्वगुरुं तत्सुतं तु वा। क्रमविद्यागमज्ञोऽन्य एकान्ती वा त्रयीमयः॥
कृताह्निकस्सुसन्तुष्टश्शान्तचित्तो ह्यनाकुलः। अभ्यर्थितोऽतिभक्तो वै चिरकालं महामते॥ ७३॥
स्वमन्त्रसाधनाख्यं वा द्विषडष्टषडक्षरम्। जितन्तसंज्ञं प्रणवमाद्यं चान्तं सबीजकम्॥ ७४॥

१. क-ख—. . .निर्मली २. क-ख—मूर्तये ३. क-ख—विपुल वा ४. ग-घ—तस्मादस्मिन् ५. ग-घ—समन्त्रं भक्तिमत्यर्थं तदा तत् ध्यानवाब्जज

एवमेकत्र संयोज्य[1]मूर्ध्वमङ्गारकूटवत्। साङ्गं पाणितले न्यस्य तद्विज्ञानादिना तनौ ॥ ७५ ॥
तदहङ्कारमलभ्य यस्य सानुग्रहं गृहे। भुनक्ति तदनन्तं वै जायते तस्य तत्क्षणात् ॥ ७६ ॥
मण्डलादौ तु मन्त्रेशो भोगैरिष्टस्तथाखिलैः। तर्पितश्चाग्निमध्ये तु आज्याद्यैर्न तथाब्जज ॥७७॥
समभ्येति परां प्रीतिं यथाचार्यशरीरगम्। तस्मान्निमित्तमाश्रित्य प्रतिपक्षस्य चान्तरे ॥ ७८ ॥
[2]तथामासस्य चाब्दस्य मासषट्कस्य वाब्जज। मध्येऽभ्यर्च्य विशेषेण स्वमन्त्रं गुरुसन्निधौ ॥
पितॄणां प्रीतये पश्चाद् भूतयेऽपि हि चात्मनः। प्रपूज्य देशिकेन्द्र(न्द्रं)स्तु कालं रात्रिक्षयावधि ॥
पादसंवाहनान्तैस्तु भोगैः पाद्यार्घ्यपूर्वकैः। प्रसाद्य च यथाशक्त्या मात्रावित्तं निवेद्य च ॥८१॥
अनुव्रज्य महाबुद्धे व्रजन्तं स्वगृहादिकम्। एवं संप्रतिपन्ना ये मन्त्राराधनकर्मणि ॥ ८२ ॥
[3]वर्णा द्विजेन्द्रपूर्वास्तु ब्रह्मचारिपुरस्सराः। भैक्षुकान्तास्तु वै सर्वे सिद्धिं समुपयान्ति च ॥

**पौष्कर उवाच—**

पुरा यस्य जगन्नाथ मन्त्रमूर्तिर्गृहान्तरे। एका वानेकभेदोत्था विद्यते बिम्बलक्षणा ॥ ८४ ॥
भक्त्या परिग्रहीता प्राक् स्वयं वा पूर्वजैर्द्विज। निवेशिता मन्त्रपूर्वं निक्षिप्ता वा परेण तु ॥
धनेनाप्तथवान्यस्माद्योग्यात्तस्करादिकात्। साम्प्रतं स्वगुरोर्लब्धा दृष्टादृष्टप्रसिद्धये ॥ ८६ ॥
चित्तप्रसादजनको मन्त्रस्संसारदुःखहृत्। स च तद्विनियुक्तस्तु साङ्गस्सपरिवारकः ॥ ८७ ॥
आराधकस्य भगवन् विहितं वा नवादिश।

**श्रीभगवानुवाच —**

स्वयं व्यक्तं हि यद्विप्र तथामरगणैर्द्विज। स्थापितं मन्त्रसिद्धैस्तु आकारं भगवन्मयैः ॥ ८८ ॥
तदधिष्ठितमन्त्राणां सह तस्य च योजना। [4]विहिता कमलोद्भूत नृणां सन्निधिसिद्धये ॥८९॥
एवं सपरिवारं च न स्वमन्त्रस्सदा गृहे। मन्त्राकृतौ तु चान्यस्मिन् योजनीयः पदादिषु ॥९०॥
पूजनीयं स्वमन्त्रेण लाञ्छनाङ्गान्वितेन च। बिम्बसंरुद्धमन्त्रं च तद्विमुक्तमपि द्विज ॥ ९१ ॥
सर्वा चैव स्वयं व्यक्तपूर्णानां हि महामते। निवेशनं हि मन्त्राणामन्योन्यानां गुणावहम् ॥९२॥
नित्यं योद्यतचित्तस्तु मन्त्राराधनकर्मणि। देहस्थं क्षपयेच्छेरं कर्मबन्धमशाश्वतम् ॥ ९३ ॥
समस्सर्वेषु भूतेषु मन्त्रेषु च विशेषतः। निषिद्धं तद्विनान्येषां स्वमन्त्रस्य नियोजनम् ॥ ९४ ॥
कस्य चित्कुत्र चित्सम्यक् यस्मान्मन्त्राकृतौ द्विज। प्रसीदति स्वमात्मानं शुद्धज्ञानोदयं विना ॥

---

१. क-ख—मूर्ध्वं .. २ ग-घ—तथा चाब्दस्य मासस्य ३. क-ख— ..ब्रह्मचारि
४. क-ख—विहिता वनलोद्भूत

न निषिद्धं स्वमन्त्रेण क्वचिदन्यत्र पूजनम्। प्राधान्येन स्वमार्गाच्च गृहे वान्यत्र मण्डले ॥९६॥
समाह्वनां च पूजार्थं मन्त्रतन्त्रार्चने सति। स्वमन्त्रेण न दोषोऽस्ति तद्वदायतनेषु च ॥ ९७ ॥
मन्त्रेण भिन्नमार्गाच्च प्रतिमामण्डलं तु वा। अधिष्ठितं यदा तत्र विहितं दर्शनं तु वै ॥ ९८ ॥
पुष्पदानं स्वमन्त्रेण व्यापकेनामलात्मना। चिन्मात्रतास्वरूपेण मन्त्राणां हि यतोऽब्जज ॥ ९९ ॥
अविशेषं हि सामान्यं शब्दब्रह्ममयं वपुः। ध्यानन्यासादिकैस्तेषां विशेषस्तु परस्परम् ॥ १०० ॥
जायते शबलं भीममभिचारफलप्रदम्। अनुग्रहपरं मन्त्रं शब्दब्रह्ममयं स्वकम् ॥ १०१ ॥
याज्ययाजकभावेन समभ्येति तथाऽब्जज। संरुद्धमपि यत्तत्र व्यक्तिशक्तिधिया विना ॥ १०२ ॥
शब्दब्रह्मात्मना स्वास्ते तदैक्याच्च बलं कुतः। [1]पटव्यक्तिद्वयेनैव विनैक्यं न भस्मो यथा ॥१०३॥
द्वाभ्यां शब्दस्वरूपाभ्यामेवमैक्यमनुग्रहात्। सुजन्म चैवं क्षोभस्य विशेषयजनं विना ॥ १०४ ॥
स्वगृहे मण्डले यागे दिव्याद्यायतनेऽपि च ॥

**पौष्कर उवाच—**

परं मार्गं न पश्यामि जगत्यस्मिञ्जगन्मय। वासुदेवात्मकं यस्मात्सर्वं स्थावरजङ्गमम् ॥ १०५ ॥

**श्रीभगवानुवाच—**

सत्यमेतन्महाबुद्धे यथासंचोदितं त्वया। किन्तु क्रियाप्रवृत्तस्य जन्तोर्भक्तिपरस्य च ॥ १०६ ॥
हृदयावर्जको(गो) यत्र विश्रामः परमार्थत। [2]तत्सन्मार्गो याजकस्य वैष्णवस्य हि सात्त्विकः ॥
स्वयमेव [3]प्रवृत्तस्य लोकानुग्रहकाम्यया। विभवव्यूहभावेन स्वच्छसत् षड्गुणात्मना ॥ १०८ ॥
तस्योपचर्यते येन आगमेनाथ कर्मणा। सन्मार्गं विद्धि तं विप्र शश्वद्ब्रह्मविभूतिदम् ॥ १०९ ॥
विभुर्विभवभावस्थ इच्छया वितनोति यत्। प्राकृतं क्षेत्रमाश्रित्य तद्गुणं देवतात्मकम् ॥ ११० ॥
तन्मायीयं च निश्शेषज्ञानाद्यैश्छुरितं गुणैः। गुणात्मकं तु तं विद्धि शबलं नातिनिर्मलम् ॥
तद्यज्ञकं हि यच्छास्त्रमितिकर्तव्यता च वै। असन्मार्गं तु तं विप्र विद्धि पूर्वव्यपेक्षया ॥११२॥
तस्मात्परपदप्राप्तेः कारणं परमं स्मृतम्। विभवव्यूहसंज्ञं तु शाश्वतं रूपमाच्युतम् ॥ ११३ ॥
क्षिप्रमेव प्रपन्नानां ज्ञानपूर्वेण कर्मणा। ददाति सत्पदप्राप्तिं कर्मिणां भावितात्मनाम् ॥ ११४ ॥
काम्यानां कर्मणां प्राप्तौ ह्यचिरेणैव पद्मज। उपायं नापरं मन्ये नित्यं भोगाभिलषिणाम् ॥
सुसूक्ष्मव्यूहविभवं मुक्त्वा सद्ब्रह्मयाजिनाम्। सांसारिकं फलं हेयं स्वर्गादिप्राप्तिलक्षणम् ॥११६॥
प्रार्थ्यमानं हि यज्ञाद्यैश्शश्वत्तस्मान्न चाप्यते। अत एव हि मायीये नाराध्यो देवतागणः ॥

१. ग-घ—घटव्यक्ति  २. ग-घ—तत्समार्गो  ३. क-ख—प्रमत्तस्य

सम्यक् संप्रतिपन्नैस्तु सन्मार्गे परिचोदिते। तस्मात्कमलसंभूत प्रयत्नेन सदैव हि ॥ ११८ ॥
कुर्यादाराधनं भक्त्या मन्त्राणां हि यथा क्षणम्। एषामनुग्रहाद् दुःखं त्रिविधं क्षयमेति च ॥
आधिभौतिकमाध्यात्ममधिदैवीयमब्जज ॥

**पौष्कर उवाच—**

आराधकानां भगवन् मन्त्राणां शश्वदर्चने। सर्वदा पत्रपुष्पाद्यैर्भोगैः किं फलमर्चनात् ॥१२०॥
विस्तरेणार्चनात्तेषां बहुभिः कुसुमादिकैः। किं फलं याजकानां तु अत्र मे संशयो महान् ॥

**श्रीभगवानुवाच—**

फलसाम्यं द्विजश्रेष्ठ भावभक्तिवशात् स्थितम्। दरिद्राणां च भक्तानां फलपुष्पादिना विना ॥
यत्फलं तद्द्विजाढ्यानां निरन्नानां तु चार्चनात्। सदाढ्यानां च भक्तानां होमाद्यैरर्चनात् फलम्॥
यत्तद्विद्धि दरिद्राणां भक्तानां कुसुमादिकैः। क्षणस्य च समं ज्ञेयं सदाहोरात्रलक्षणम् ॥१२४॥
नृपाणां च दरिद्राणां कालं यतक्रियाश्रितम्। तत्रापि कमलोद्भूत भूतार्थमवधारय ॥ १२५ ॥
यथालब्धेन शुद्धेन भोगजालेन वै सह। कर्तव्या धारणा ध्यानं मन्त्राणां यत्र पौष्कर ॥
समुद्राणां च यागस्य विस्तरान्नित्यमेव हि। तद्याजकानां यजनमचिराद् भुक्तिमुक्तिदम् ॥१२७॥
संक्षिप्तं धारणाद्यैर्यत्तत्कृतं चाप्यभोगदम्। संभोगैर्धारणाद्यैर्यत्सङ्कटं तच्चिरेण तु ॥ १२८ ॥
विदधाति च भक्तानां भोगहीनं परं पदम्। तस्माच्छ्रेयोऽर्थिनां नित्यं भुक्तिमुक्तिफलाप्तये ॥
निर्व्याकुलधिया भक्त्या कालांशमवलम्ब्य वै। विमुक्तमन्यैर्व्यापारैर्विधिवद्धृदये यथा ॥१३०॥
सुसंपूर्णं तु यजनं धारणाद्यैस्सुविस्तृतैः। भोगैर्यद्यपि संपूर्णैस्सम्पत्तिस्सह वै नृणाम् ॥ १३१ ॥
तथापि कर्मनिष्ठानामाधिक्यं चास्ति पौष्कर। [1]भोगापवर्गहृत् शाठ्यात् तन्निरासात् कृते स्फुटे ॥
जायते याजकानां तु नातोऽस्माहं परित्यजेत्। द्रव्यसंपद्विना नित्यं मन्त्राराधनकर्मणि ॥ १३३ ॥
परं हि यस्य वा भावो भोगवृन्दस्य पौष्कर। भोगाप्तिफलनिष्ठस्य प्रथमं चाकृतात्मनः ॥१३४॥
न पुनर्मोक्षनिष्ठस्य कर्मणश्शाश्वतस्य च। पुरुषार्थप्रदस्याशु खण्डनं सद्विवेकिनाम् ॥ १३५ ॥

**पौष्कर उवाच—**

संसारिणां हि भक्तानां नानाकर्मरतात्मनाम्। पुत्रदारादिभरणे नित्यं व्याकुलचेतसाम् ॥ १३६ ॥
विस्तरेणार्चने तेषां कथं संपद्यतेऽच्युत। अनर्चनात्त्वयोद्दिष्टफलं वैकल्यमुत्तमम् ॥ १३७ ॥

१. क-ख—'भोगापवर्ग' इत्यादि अर्धचतुष्टयं लुप्तम्

**श्रीभगवानुवाच—**

क्रमयुक्तं हि यत्कर्म तच्च श्रेयस्करं नृणाम्। तस्मात्तन्न परित्याज्यं संक्षिप्तमथ विस्तृतम् ॥१३८॥
मुख्यकल्पं हि विस्तारमनुकल्पमतः परम्। समत्वं घटते केन हेतुना कमलोद्भव ॥ १३९ ॥
तत्रापि चाशठानां च भक्तानां भावितात्मनाम्। विहितं पत्रपुष्पाद्यैस्सभोगैर्वाग्भिरर्चनम् ॥
कर्मणामनुसन्धानं विना कालान्तरेण तु। क्ष्माजलानलवाय्वाख्य नाभसीयं महामते ॥ १४१ ॥
धारणापञ्चकाच्चैव संक्षिप्तं विहितं द्वयम्। दहनाप्यायनाख्यं यदादेहात् सर्वशुद्धये ॥ १४२ ॥
परापरस्वरूपाच्च ध्यानादेकं परं महत्। हृन्मन्त्रं सर्वमन्त्राणामुपचारक्रियाविधौ ॥ १४३ ॥
[1]कर्मणा समनस्कं च प्रणवाद्यं महामते। एका ह्याराध्यमुद्रा वै योगमन्त्रस्य सा स्मृता ॥
स्मरणान्नेत्रयोर्मध्ये [2]स्वोच्चारं निष्कलस्य तु। नतिप्रणवगर्भाभिः स्वसंज्ञाभिर्यदर्चनम् ॥ १४५ ॥
विधिवन्मन्त्रमूर्तीनां तत्परं क्षिप्रसंज्ञितम्। बीजैर्विशेषिताभिस्तद्द्वितीयं सूक्ष्मलक्षणम् ॥ १४६ ॥
यल्लक्षणाभूतैः पिण्डैः सह संज्ञाभिरब्जज। जपान्तमखिलं कर्म मन्त्राणां तद्बृहत् स्मृतम् ॥
क्षिप्रमाद्याच्च कैवल्यं किञ्चित्कालान्तरेण तु। द्वितीयादब्जसंभूत बुद्धिपूर्वक्रमेण तु ॥ १४८ ॥
ज्ञानादिगुणषट्कं च इहैवाद्यं प्रयच्छति। अणिमाद्यष्टकं चैव द्वितीयममलेक्षण ॥ १४९ ॥
समस्तभुवनैश्वर्यं तृतीयमचिरात्तु वै। साम्यं निश्रेयसावाप्तेस्सर्वेषां किन्तु पौष्कर ॥ १५० ॥
क्षिप्रं लक्षणपूर्वेण कालेन त्रिविधेन तु। महत्त्वैव हि मन्त्रस्य स्वसंज्ञाख्यस्य यद्यपि ॥ १५१ ॥
तथाऽपि कमलोद्भूत क्षिप्रपूर्वादिकेऽर्चने। बीजं वा पिण्डमन्त्रं च प्रणवादनुसंस्मरेत् ॥१५२॥
आराध्य मन्त्रनाथस्य हृदादीनां तथैव च। अन्येषामन्तरङ्गाख्यं मन्त्राणां कमलोद्भव ॥ १५३ ॥
प्रधानलक्षणानां च कमलासनवर्तिनाम्। न विरोधोऽस्त्यतोऽन्येषां बीजैः पिण्डैर्विनाब्जज ॥
वज्रलाञ्छनलोकेशतदस्त्राधारवर्तिनाम्। तथासनाख्यविघ्नेशपूर्वाणां द्वारवासिनाम् ॥ १५५ ॥
ब्रह्मचारिगृहस्थस्य स्वतन्त्रस्य यतेरपि। किं पुनस्तु गृहस्थस्य व्यापारनिरतस्य च ॥ १५६ ॥
एतद्वै नैष्ठिकानां तु तच्चित्तनिरतात्मनाम्। साधकानां सवित्तानां हितमेकान्तवासिनाम् ॥१५७॥
भक्तिश्रद्धापरस्सम्यग्गृहीत्वा यस्समाचरेत्। ददाति तत्र मन्त्रात्मा पूर्वोक्तं द्विविधं फलम् ॥
सह साधकसिद्धीभिर्निर्विघ्नेन महामते ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां आराधनलोपविचारो नाम
द्वात्रिंशोऽध्यायः ॥
(समुदितश्लोकसंख्या १६०)

१. ग-घ—कर्मणा सनमस्कं च   २. क-ख—स्वोच्चरन् निष्क

# अथ त्रयस्त्रिंशोऽध्यायः

**पौष्कर उवाच—**

नवमूर्तेः परिज्ञातं पूर्वमाराधनं मया। नानात्वे[1]नापवर्गार्थं न ज्ञातं चतुरात्मनः ॥ १ ॥

**श्रीभगवानुवाच—**

अनुज्झितस्वरूपस्य देवस्य चतुरात्मनः। केवलस्यार्चनान्मोक्षं भवते तद्द्विधार्चनात् ॥ २ ॥
नानाफलाप्तये ब्रह्मन्नानारूपधरस्य च। नानात्वेनार्चनं भूय शृणु सम्यग्यथास्थितम् ॥ ३ ॥
व्यापकं परमात्मानमादिदेवमधोक्षजम्। प्रागर्चनीयं सर्वत्र पूजान्ते चापि मध्यतः ॥ ४ ॥
ततः प्रभवयोगेन प्राक्पत्रादि समर्चयेत्। चतुष्कं संकर्षणाद्यं क्रमान्नारायणान्तिम(क)म् ॥ ५ ॥
पुनरप्ययययोगेन वन्ध्यार्धांशपदावधि। नारायणाद्यं यष्टव्यं सङ्कर्षणान्तमेव हि ॥ ६ ॥
एवमा[2]ग्नेयपत्रे तु प्रद्युम्नाद्यं चतुष्टयम्। शब्दब्रह्मादिदेवान्तमर्चनीयं सदैव हि ॥ ७ ॥
दक्षिणे त्वनिरुद्धाद्यं गरुडासनपश्चिमम्। विहितं चैव विन्यासं प्रभवाप्ययलक्षणम् ॥ ८ ॥
नारायणनृसिंहान्तं रक्ष पत्रेऽर्चयेत्तत। प्रत्यग्दिक्सं[3]स्थिते पत्रे ब्रह्माद्यं क्ष्माधरान्तिमम् ॥ ९ ॥
[4]सङ्कर्षणाद्यमानान्तं विष्ण्वाद्यं मारुतेऽम्बुजे। नृकेसरि वराहं च ज्ञानाद्योदक्पुरुदक् ॥ १० ॥
त्रयं सङ्कर्षणाद्यं यत् ईशाने क्ष्माधरादिकम्। प्रभवेनाप्ययेनैव माननीयमत क्रमात् ॥ ११ ॥
[5]नवसंख्यमिदं विप्र प्रथमं यत्प्रकीर्तितम्। तदीयं जायते तस्य प्रभावं तत्क्रमार्चनात् ॥ १२ ॥
... . नवमूर्तिमयं महत्। चातुरात्म्यचतुर्वर्गफलदं भावितात्मनाम् ॥१३॥
नानाफलाप्तिरचिराज्जायते च फलार्थिनाम्। स्वातन्त्र्येणार्चनान्नित्यमेतेषां चतुरात्मनाम् ॥ १४ ॥
यस्य यस्य चतुर्मूर्तेः प्रथमं यत्प्रकीर्तितम्। तदीयं जायते तस्य प्रभावं तत्क्रमार्चनात् ॥ १५ ॥
एतावदुक्तं हि फलं सन्निवेशवशात्तु वै। यतः प्रतिहतं वीर्यमैश्वर्यं प्रभवाप्यये ॥ १६ ॥
तं विप्र मन्त्रमूर्तीनां मन्त्रमप्रतिमप्रभम्। अनन्तं स्वप्रकाशत्वमनौपम्यं जगत्प्रभोः ॥ १७ ॥
परमेश्वरमूर्तीनां परिज्ञानवशात् सति। अनादिनिधनोऽनन्तः कर्मिणां प्रतिपत्तये ॥ १८ ॥

१. **क-ख**—नापवर्गस्थम् २. **क-ख**—ग्नेयप. प्रद्यु ३. **क-ख**—स्थिते . ब्रह्मा
४. **क-ख**—"सङ्कर्षण" इत्याद्यर्धत्रयं लुप्तम् ५. **ग-घ**—इत्याद्यर्धद्वयं लुप्तं, प्रत्युत तत्स्थाने श्लोकान्तरमस्ति "यथा नवसंख्यमिदं विप्र नवमूर्तिमयं महत्। चातुरात्म्यं चतुर्वर्गफलदं भावितात्मनाम् ॥" इति

तदुत्तारणसिध्यर्थं व्यूहतामागतस्स्वयम्। प्राणेच्छाशब्दकालाख्यचतुरात्मतया नव॥ १९ ॥
अविशेषस्वरूपस्य देवस्यैव महात्मनः। नित्यसन्निहिताशेषशक्तेर्नित्योदितस्य च॥ २० ॥
शब्दवित्संभवानन्दविशेषैर्गमितस्य च। इदमुक्तं मया योगं भविनां भवशान्तये॥ २१ ॥
अहेयमप्यभिन्नं च प्रपञ्चं परमात्मनः। सत्यरूपस्य वै सम्यक् क्षोभं निश्रेयसप्रद(म)म्॥
यस्य सांसारिकी मायाचक्रमिच्छावशात्पुनः। निर्गता यत्र मुह्यन्ति ऋषयस्सामरा नराः॥२३॥
यावन्नानुगृहीता वै देशिकव्यक्तिगेन च। षाड्गुण्यमूर्तिनानेन परेण चतुरात्मना (नः)॥ २४ ॥
अस्याराधनकाले तु बहिर्वा हृदयाम्बरे। कदम्बपुष्पवद्व्यक्तिं संस्मरेत् षड्गुणोज्वलाम्॥ २५ ॥
[1]बह्वात्मना चार्चकेन चतुर्वर्णमयेन च। स्वरेण वाक्षरेणैव केवलेन सबिन्दुना॥ २६ ॥
[2]बाह्योपचारनाम्ना तु सुप्रसिद्धेन केन चित्। मुख्येनाभिमतेनैव मनसस्तुष्टिदेन च॥ २७ ॥
न्यस्याङ्गानि स्वकान्यस्य प्राक् संपूर्णगुणानि च। स्वमन्त्रैरर्चनेनैव स्थानभेदं विनाब्जज॥२८॥
तस्मिन् कदम्बकुसुमसदृशे मन्त्रगोलके। द्वादशाक्षरमन्त्रेण त्वभिन्नेन तु साम्प्रतम्॥ २९ ॥
व्यक्तिमापाद्य वै तस्यां पुनर्वर्णक्रमेण तु। अङ्गोपाङ्गस्थितिं कुर्यात् स्थानेषु हृदयादिषु॥ ३० ॥
हृदि मूर्ध्नि शिखायां च स्कन्धयोः करमध्यतः। नेत्रयोरुदरे पृष्ठे देशे बाहुद्वये ततः॥ ३१ ॥
ऊरुभ्यां जानुयुग्मे च पादयोस्तदनन्तरम्। तत्र प्रणवपूर्वं तु षड्वर्णास्त्वाङ्गिका मता॥ ३२ ॥
षडुपाङ्गाभिधास्त्वन्ये एतेषां लक्षणं शृणु। [3]यत्सुप्रतिष्ठितं शुद्धं सामान्यं[4] यदनावृतम्॥३३॥
प्रबुद्धं भास्वरं नित्यं ज्ञानं साक्षात्तदाच्युतम्। स्वस्य शक्तिसमूहस्य बलाद्यस्याखिलस्य च॥३४॥
उदयस्थितिसंहारकारणेऽङ्गात्मना पुनः। विशेषतां समायाति स्वरूपमपि चात्यजन्॥ ३५ ॥
मन्त्रेशमन्त्रशक्तीनामनन्तानां तु तद्द्विज। नानासामर्थ्यवर्णानां हृदयं रत्नदीपवत्॥ ३६ ॥
आत्मप्रकाशकं चैव बलादीनां तथा च तत्। सर्वातिशायि चैश्वर्यं यद्गुणं पारमेश्वरम्॥३७॥
तच्छिरस्सर्वमन्त्राणां श्रीमद्भोगापवर्गदम्। या भूरिशक्तिभिः पूर्णा शक्तिर्वै पारमेश्वरी॥ ३८ ॥
ऊर्ध्वतेजोवहा शुद्धा विद्धि [5]मान्त्री शिखा तु सा। धैर्यं यन्नापरं प्राणादाच्युतं धृतिलक्षणात्॥
तदेव कवचं विद्धि मन्त्राणां हि बलात्मकम्। यदप्रतिहतं वीर्यमैश्वर्यं प्रभवाप्ययम्॥ ४० ॥
तद्विप्र मन्त्रमूर्तीनामस्त्रमप्रतिमप्रभम्। यदनन्तप्रकाशत्वमनौपम्यं जगत्प्रभोः॥ ४१ ॥
तन्नेत्रं तत्परिज्ञानात् धासाच्चालक्ष्यते परम्। हृदा सह प्रलीनं च तत्केषां चिन्महामते॥४२॥
स्वकमुज्झित्य वै क्षेत्रं ज्ञानमुद्दीपयेद् स्थितम्। मन्त्राणां नेत्रमन्त्रं तु ईश्वरेच्छावशाद् द्विज॥

१. क-ख—बह्वर्चनात्मकेन २. ग-घ—सहोपचार नाम्ना तु ३. क-ख—यत्प्रतिष्ठितम् ४. क-ख—सदनामृतम् ५. क-ख—मान्त्र शिखा तु वा

क्वचिदङ्गचतुष्कस्य अन्तस्था (ङ्ग') जनवत्प्रभा। वर्तते मूर्ध[1]पूर्वस्य रत्नेष्विव उपाश्रयम् ॥४४॥
वाचकेन विना तस्मात्तदीयाज्ञामयप्रभा। [2]भगवत्कर्मकुशलैः परिज्ञेयार्चना ताः ॥ ४५ ॥
इत्याङ्गिकी स्थितिस्तावत् सर्वत्र न्यासकर्मणि। प्रकाशिताऽजसंभूत त्वोपाङ्गं निश्चयं शृणु॥
क्रोडीकरोति वै येन ज्ञानधर्मेण सर्वदा। बहिर्वा विषयं स्वल्पमुपाङ्गमुदरं च तत्॥ ४७ ॥
संसिद्धमुपचराद्वै अन्येऽप्येवं महामते। उपायधर्मवश्यस्तु सिद्धिमोक्षवशात् पुनः ॥ ४८ ॥
पृष्ठतस्सर्वदाने च ऐश्वर्यस्य फलात्मनः। पृष्ठसंज्ञामुपाङ्गं तद् द्वितीयममलेक्षण॥ ४९ ॥
व्याप्तकं हि यदुल्लासं विभोश्शक्त्यात्मनो द्विज। सुतीक्ष्णमनि[3]श्सौम्यं च तदुपाङ्गं भुजाभिधम्॥
विभूतिशक्तेर्व्यक्तस्य नानावीजस्य यन्महत्। रसं वीर्यमयं क्षेत्रमूरुसंज्ञं तदात्मकम्॥ ५१ ॥
[4]यत्सर्वज्ञस्य शक्तेर्वै विद्याविद्यात्मकं वपु। जान्वाख्यं तदुपाङ्गं वै पञ्चमं परिकीर्तितम्॥
आच्युतस्थितिशक्तिर्यत् स्वगुणं हि विलक्षणम्। सन्ध्यारूपमजाक्ष तत्पादाह्वमुदाहृतम्॥५३॥
सृष्टिसंस्थितिसंहारस्थामे स्वात्मनि वा प्रभोः। द्वादशाक्षरपूर्वाणां पूर्वाङ्गोपाङ्गकल्पना॥ ५४ ॥
सा पुनः स्वल्पवर्णानामधिकाक्षरवर्तिनाम्। हीनातिरिक्तरूपापि तदङ्गा परमेश्वर॥ ५५ ॥
एवं भजन्ति मां नित्यं प्रक्रियार्थं तु वै पुनः। स्वक्षेत्रेष्वर्चयेत्ताम्रा नतिना प्रणवेन तु॥ ५६ ॥
वर्णाधिकानां मन्त्राणामुपाङ्गेष्विदमाचरेत्। सह द्वादशभावैन वर्णेन समुदीरणा॥ ५७ ॥
सामान्यशब्दभावेन [5]स्यादेव ह्यस्मयी स्थिता। अकारादिस्वरेणैव कादिना वा सबिन्दुना॥
स्वरव्यञ्जनमिश्रेण पिण्डीभूतेन पाणिना। यत्र द्विजेन्द्र विहितं व्यक्तिदानं पुराणिषु॥ ५९ ॥
अङ्गो[6]पाङ्गमयी व्याप्तिस्सर्वव्या वान्यलक्षणा। ज्ञानाङ्गोपाङ्गनिर्मुक्ता मन्त्रज्ञानप्रभात्मिका॥६०॥
[7]या परा प्रकृतिर्वर्णा चिद्रूपा निर्मला परा। पूरिताध्यक्षभावेन निष्कलेन महात्मना॥ ६१ ॥
शरीरमिव जीवेन स्थूलसूक्ष्माद्विलक्षणम्। स्थूलं भूतमयं तत्र सूक्ष्मं पुर्यष्टकाभिधम्॥ ६२ ॥
देहस्थमात्मतत्त्वं तु भोगं विषयजं यथा। भुनक्ति तद्वदादत्ते पूर्णव्यक्तिगतः प्रभुः॥ ६३ ॥
सर्वथा तं स्वमन्त्रेण मन्त्रेशं मूर्तिसंस्थितम्। भोगैर्जपैस्तथा स्तोत्रैर्विविधैर्वहितर्पणैः॥ ६४ ॥
दानैर्विशेषयागैस्तु पितृतर्पणपश्चिमैः। नेतव्यमतुलां प्रीतिं प्रयोगैः प्रतिवाचकैः॥ ६५ ॥
मन्त्रेशस्यार्चनं कुर्यात् क्रमात्तदनु पौष्कर। तन्मूर्तिवाचकादीनां मन्त्रेशानां हि माननाम्॥६६॥
अन्तरङ्गाङ्गयुक्तानां लाञ्छनानामपि द्विज। भोगभूमौ तु तन्मूर्तौ किन्तु [8]भोगावनेस्तु ते॥

१. क–ख—पूर्वस्य मा उपाश्रयम् २. ग–घ—भगवत्कर्मकुशाल परिज्ञेयार्चनोज्झिताः ३. क–ख—सौम्य च ४. 'सर्वज्ञस्य सशक्तेर्वै' इति वा योजयितु अवकाश. समुन्मिषति ५ क–ख—स्यादेवस्यमयि ६. क–ख—पाङ्गमयस्याप्ति. ७. क–ख—यावरा प्रकृति. ८. क–ख—भोगावने कृते

यथोक्तलक्षणास्सर्वे ध्यातव्यास्तु यथाक्रमम्। मन्त्रमूर्तौ सदेहे च प्रस्फुरत्किरणोज्ज्वलाः ॥६८॥
या परा प्रकृतिर्मान्त्री वैश्वरूप्यात्तु सा पुनः। नानानामाक्षरत्वेन नानामूर्तित्वमेव च॥ ६९ ॥
अतो न विहितं विप्र मूर्तिदानं पृथक्पृथक्। मूलमन्त्रवदन्येषां मन्त्राणां पृथगक्षरैः ॥ ७० ॥
कारणान्निर्गताः केचिद्व्यक्तिशक्तिगुणैर्युताः। पृथक् व्यक्तिमयाश्चान्ये मन्त्रनाथास्तदिच्छया ॥७१॥
एकस्सर्वेश्वरोऽनन्तो जीवानामनुकम्पया। नानामन्त्रस्वरूपेण संस्थिति स्वेच्छया यथा ॥ ७२ ॥
प्रकृत्येका तथा बह्वी ह्यात्मीयानां महात्मनाम्। लोकनाथेच्छया विप्र बहुधा संव्यवस्थिता॥ ७३ ॥
या परा प्रकृतिर्मान्त्री वासुदेवाख्यलक्षणा। षाड्गुण्यविग्रहा सर्वशक्तितत्त्वगुणान्विता ॥ ७४ ॥
कोशभूतत्वमापन्ना स्वयमानन्दलक्षणा। [1]प्रकाशैकस्वभावे तु सूक्ष्मे स्वे मन्त्रविग्रहे ॥ ७५ ॥
जपात्संस्मरणाद्यस्य स्वव्यक्तिस्थस्य पूजनात्। तदभिन्नं परं शान्तं परमाप्नोति तद्व्रती॥ ७६ ॥
एवमेकत्वमापन्नं योऽर्चयत्यच्युतं विभुम्। नित्याकृतधरस्तस्य भोगमोक्षौ करस्थितौ॥ ७७ ॥
शुद्धसंवित्स्वभावानां ज्ञानादिगुणिनां तु वै। स्वमन्त्रशक्तिव्यूहानां व्यक्तये परमेश्वरः॥ ७८ ॥
स्वेच्छया शब्दशक्ति स्वामनभिव्यक्तलक्षणाम्। प्रकाश्य चाब्जसंभूत यस्यां मन्त्रमयं वपुः॥
ते सर्वज्ञ[2]गुणैश्चाथ मन्त्रैस्संप्रोक्तलक्षणाः। अनुग्रहार्थं भविनां निबध्नन्ति स्थिति स्थिराम्॥
लिपिव्यूहे तु विविधैर्बीजपिण्डपदात्मिके। केवलेऽपि च संमिश्रे भूरिसंख्ये जपात्मके॥ ८१ ॥
ज्ञशुद्धिश्रियधिष्ठातृवशादमरपूजिता। यस्योपचारमन्त्रत्वमामूलादुपगीयते॥ ८२ ॥
शब्ददेहाः पुनस्त्वेते मन्त्रा मननधर्मिणः। अपरिच्युतरूपाश्च नानात्वमुपयान्ति च॥ ८३ ॥
नानाकारवशाच्चैव नानासत्त्ववशादपि। श्रद्धाभक्तिवशान्नाना नानाफलवशात् पुनः॥ ८४ ॥
नानाजातिवशाच्चापि नानादेशवशात् पुनः। [3]नानाकालवशाद्ब्रह्मन् नानासाधनसंभ्रमैः॥ ८५ ॥
मोक्षैकनिरतानां च नराणामात्मसिद्धये। विषयाक्षिप्तचित्तानां भूतये भविनामपि॥ ८६ ॥

## पौष्कर उवाच—

त्वयोक्तं भगवद्यागं शुद्धसत्त्वस्य कर्मिणः। जितेन्द्रियस्य भक्तस्य मन्त्रसिद्धस्य चाच्युत ॥८७॥
योगं तत्त्वजयार्थं वै ज्ञातुमिच्छाम्यहं पुनः। विधिवद्यत्परि[4]ज्ञानात् मन्त्रज्ञो लभते स्थितम्॥
निवाताचलदीपाभे समाधौ पारमेश्वरे॥

## श्रीभगवानुवाच—

प्रधानयोगमुक्तं ते कर्मयोगादनन्तरम्। तद्गार्हस्थ्यस्य च मुनेर्विहितं नान्ययाजिनः॥ ८९ ॥

---

१ ग–घ—अप्रकाशैकभावे तु २. ग–घ—गुणैर्मन्त्रैर्यथा सप्रोक्त ३. क–ख—नानाजाल ४. क–ख—परिज्ञान मन्त्रज्ञो

तथा परमहंसस्य लोकबाह्यस्थितस्य च। तत्त्वयोगमतो वक्ष्ये भूमिकाभिन्नलक्षणम् ॥ ९० ॥
शुद्धयेऽखिलतत्त्वानां कृतदीक्षस्य पौष्कर। अशक्त्यासाक्षात्तु करणे नानासिद्धिव्यपेक्षया ॥ ९१ ॥
अपवर्गाप्तये चैव ज्ञानावरणशान्तये। शुद्धसंवित्स्वभावेन परमात्मनि तिष्ठति ॥ ९२ ॥
चित्प्रकाशस्वरूपेण मन्त्रात्मनि महात्मने। विभवव्यूहयोगेन कर्मणाच्छाद्य संस्थित ॥ ९३ ॥
व्याप्तः परेण विभुना सर्वशक्त्यात्मकेन तु। [1]यमाच्छाद्य स्थितस्सम्यग्बोध्यं तं सर्वदाऽब्जज ॥
असङ्कीर्णमसंख्यं च वासनाशतवासितम्। गुरुणानुगृहीतस्य मन्त्रैकनिरतस्य च ॥ ९५ ॥
समग्रं तत्त्वजालं तद्विनिवर्तति नान्यथा। अतस्तु लब्धलक्षेण कर्मतन्त्ररतेन च ॥ ९६ ॥
नित्यं तत्त्वजयं कार्यं स्वरूपप्राप्तये तु वै। व्यापकस्सर्वशक्त्यात्मा समाराध्य विभाव्य च ॥
तत्त्वाधिष्ठातृभावेन आपादान्मस्तकावधि। ज्ञातव्यं स्थानभेदेन दीक्षायां कथितं यथा ॥ ९८ ॥
कदलीपुटवच्चाथ ततो मोऽक्नाद्द्विज। तज्जयार्थं समभ्यस्य योगमेवं त्रिधामलम् ॥ ९९ ॥
किन्तु चाभ्या(भ्य?)समानस्य मोहमायाति साम्प्रतम्। निद्रालस्यश्रमश्वासशून्यदृष्टित्वमब्जज ॥
[2]षट्कोशलक्षणं विद्धि सविघ्नं न तदात्मना। निश्चयात्तज्जयेदेतदभ्यासाज्जगतदपि ॥ १०१ ॥
प्राणादीनां तु वायूनां कृत्वा तु विजयं पुरा। गुप्तासनोपविष्टस्तु गुर्वङ्घ्रिं [3]वन्दयेद्धिया ॥
व्यापकत्वेन चाराध्य न्यस्त्वाकारशरीरगम्। ततस्तादात्म्यमालम्ब्य चित्तं बाह्यस्थ[4]माहरेत् ॥
हृत्पुण्डरीकमध्ये तु त्रिधाम भुवनोदरे। प्रणवेनापरं ब्रह्म सर्वशक्तिमयं द्विज ॥ १०४ ॥
अभ्यस्याभ्यासयोगेन प्रथमं भावयेत्ततः। कुर्यात्तत्त्वजयाभ्यासं विधिनानेन वै द्विज ॥ १०५ ॥
प्रणवाद्यन्तरुद्धेन हृदा [5]संज्ञापरेण वा। सहस्ररश्मिं ध्यायेद्वै तत्त्वजालं पृथक् पृथक् ॥ १०६ ॥
जपाद्विलयमायाति [6]तत्वज्ञानं शनैश्शनैः। आधारं प्रणवं शब्दं हृन्मन्त्रस्तन्मयं ततः ॥१०७॥
तत्त्वतो भवहृच्छब्दं तत्संज्ञं प्रणवोदरे। स्वात्मानं प्रणवं शब्दमात्मानन्दमयं हरौ ॥ १०८ ॥
एवं क्रमेण क्ष्मादीनां तन्मन्त्राणां जयं द्विज। कुर्यात् स्वकरणैश्च इन्द्रियाणां पराजयम् ॥
इति त्रिदशकं जित्वा तत्त्वानां चाव्ययेन तु। ततो मनस्त्वहङ्कारं बुद्धिं गुणगणं क्रमात् ॥
तमोरजस्सत्त्वसंज्ञं ध्यात्वा जप्त्वा परित्यजेत्। सूक्ष्मं सङ्घातसंज्ञं तु स्वगुणेभ्यो विलक्षणम् ॥
साक्षात्कृत्वाथ सन्त्यज्य अव्यक्तं च जयेत्ततः। कारणं यत्प्रपञ्चस्य अस्योक्तस्यापरस्य च ॥
नानामतिनिविष्टस्य स्वविकल्पोत्थितस्य च। कालतत्त्वमतश्चिन्त्यं भूतभव्यभवात्मकम् ॥ ११३ ॥
शुद्धिकृद्यदनन्तस्य सदसल्लक्षणस्य च। प्रपञ्चस्य महाबुद्धे ध्यात्वैवं त्रितयं त्यजेत् ॥ ११४ ॥

१. ग-घ—मयाच्छाद्य २. क-ख—विटकोश ३. क-ख—वन्दयेत् द्विधा ४. ग-घ—माहरेत् ५. ग-घ- संज्ञापदेन वा ६ तत् तु अज्ञानं इति पदविभाग. क-ख—तावत् ध्यानम्

उपायलक्षणं धर्मं चतुस्संख्यं हि लक्षणम्। ज्ञानक्रियेच्छाप्राणाख्य[1]शक्तिसंज्ञं हि शाश्वतम् ॥
साक्षात्कुर्याज्जपाद्ध्यानात् योगाभ्यासादथोर्ध्वतः। उपादेयमतो ब्रह्मन् समूहं ध्यापकं ध्रुवम् ॥
[2]सप्तसंज्ञं पदं दिव्यं ध्यातव्यं कर्मशान्तये। शब्दब्रह्मावसानं च ज्ञातव्यं च सदोदितम् ॥
शब्दब्रह्मस्वरूपस्य परस्य परमात्मनः। अमूर्तस्य च तन्मूर्तेः स्थितिस्सा षड्गुणात्मिका ॥११८॥
शब्दब्रह्म समभ्यस्य गुणषट्कादनन्तरम्। अनुच्चार्यमवर्णं तं निरावरणमस्वरम् ॥ ११९ ॥
सद्ब्रह्मवाचकं तद्वै वाङ्मयातीतमच्युतम्। स्वरव्यञ्जन[3]रूपाश्च सर्वेषां मूर्तिवाचकाः ॥ १२० ॥
स्वविशेषाच्च बहवो दशलक्षणलक्षिताः। अक्षरस्वरवर्णाग्र्यघोष(षो)रावस्वरात्मकाः ॥ १२१ ॥
[4]ध्वनिः कूटस्तथा स्फोटविसर्गान्ता सहामने। एभ्यस्सङ्कीर्णरूपाभ्यो यत्ने वाक्यतरात्मना ॥
आमोक्षात् सर्वसिद्धीनां प्रदाता सिद्धिभाग्भवेत्। ध्याता तस्मिन् हि निष्णातः परं ब्रह्माधिगच्छति ॥
सम्यग्वेत्ति तदाभ्यासात् स्वाराध्येनानुरञ्जनात्। विलक्षणं च तद्ध्यानं ध्यानाध्यात्मकमब्जज ॥
प्रकाशानन्दरूपे च नानाभूतं हि यद्बहिः। ते [5]त्वद्वे सच्छब्दनाथस्य ऊर्मिस्सूक्ष्मतमामला ॥
यया सह समं याति तत्त्वज्ञस्त्वव्यये पदे। आत्मलाभमतः प्राप्य परस्मात् परमेश्वरात् ॥१२६॥
ज्ञानकर्मरतानां च श्रद्धासंयमसेविनाम्। आस्तिकानां जिताक्षाणां सद्भक्तानां सदा भवेत् ॥
नैतद्वाच्यमभक्ताय नास्तिकाय कदाचन। न कुतर्कमतिष्ठाय कर्मब्रह्मोज्झिताय च ॥ १२८ ॥
आप्रमातान्निशान्तं च व्यापारं पारमेश्वरम्। लोकातीतास्तु ये विप्रास्तेषां तद्धृदयंगमम् ॥
लौकिकव्यवहारस्था बहवोऽन्ये च नश्वराः। शून्यब्रह्मैकनिष्ठाश्च वाक्प्रपञ्चधियान्विताः ॥१३०॥

**पौष्कर उवाच —**

तत्त्वग्रामस्य भेदैश्च हेयोपादेयलक्षणम्। ज्ञातुमिच्छामि विधिवत्तन्ममाचक्ष्व शाश्वत ॥ १३१ ॥

**श्रीभगवानुवाच —**

यथा क्षीरस्य वै स्नेहं भेदेन न तु वर्तते। [6]एवं हि विद्धि सर्वेषां तत्वानां परमेश्वरः ॥
एकत्वेन पृथक्त्वेन समाधौ प्रोक्तमभ्यसेत्। केवलं हि यथापूर्वमुद्दिष्टं च तदाप्तये ॥ १३३ ॥
आक्षितेः करणग्राममिन्द्रियाग्र्यगणान्वितम्। उत्तमव्यक्तपर्यन्तं प्रपञ्चं तदनश्वरम् ॥ १३४ ॥
[7]नानामूर्तिसमाख्यं च भोगक्षेत्रं हि कर्मिणाम्। सुखदुःखगुणोपेतं मोहमायामयं दृढम् ॥१३५॥

१. **क-ख**—शक्तिसंज्ञं ह्यशाश्वतम् २. **ग-घ**—सप्तसंख्यम् ३. **क-ख**—रूपश्च—वाचकः ४. **क-ख**—ध्वनिः फट् कू...तथा ५. **क-ख**—तद्वै . नाथस्य ६. **ग-घ**—एवं हि सिद्धिसर्वेषां तत्वाना पारमेश्वरम् ७. **ग-घ**—नानामूर्तिमसख्य च

अज्ञानं तु तदासक्तेर्वर्धने च क्षणात् क्षणम्। ज्ञानाद्विलयमायाति तस्मान्नित्यं हि तद्द्विज ॥
हेयभावनया चिन्त्यमुपायं यद्यपि स्फुटम्। सिद्धीनामात्मलाभे तु तत्राप्यस्थिरमेव तत् ॥१३७॥
सारमादाय वै तस्मात्साधनं योगसिद्धये। मनोबुद्धिरहङ्कारस्सत्त्वं सत्त्ववतां वर ॥ १३८ ॥
चतुष्कमिदमव्यक्तं ब्रह्मप्राप्त्या निवर्तते। अथोपकरणं दिव्यं पञ्चशक्त्योपलक्षितम् ॥ १३९ ॥
कालज्ञानक्रियाख्येच्छाप्राणसंज्ञं महामते। अहेयमपरं नित्यं कर्मण्यानां च सिद्धिकृत् ॥ १४० ॥
तत्त्ववृन्दस्य विजये गुणषट्कोपलब्धये। चातुरात्म्यपरिज्ञाने शब्दब्रह्मागमे तु वै ॥ १४१ ॥
प्रकाशानन्दलाभे तु निर्विकल्पपदाप्तये। नवप्रकारेणानेन प्राक्प्रासेन गुणैर्भुवात् ॥ १४२ ॥
प्राक्तनेनाच्युतीयेन साध्यसाधनवस्तुना। तत्राप्ति यत्नचाप्नोति साक्षात्कारात्तु साधकः ॥१४३॥
सिद्धध्यानं जयात् स्वं स्वं फलं यच्छति वै सदा। एतस्मात्कारणात् साध्यं साध्यस्यान्यस्य साधनम् ॥
तच्च ज्ञानादिकं षट्कं ब्रह्मणश्चविलक्षणम्। अणिमाद्यष्टकं चैवमतोऽन्यं रोचते हि यत् ॥
प्रभवः प्रलयश्चैव ऐश्वर्यं सर्वतोमुखम्। आध्यात्मनाधिदैवत्यमाधिभूतात्मना द्विज ॥ १४६ ॥
तत्त्वाभ्याससमाप्तौ तु ज्ञातव्यं तत्त्वचिन्तकैः। शब्दब्रह्मपदादेव क्षित्यन्ते तत्त्वसंग्रहे ॥१४७॥
अध्यात्मं परमं ब्रह्म सामान्यं विद्धि सर्वदा। ज्ञातव्यमधिदैवं च सेश्वरं प्रणवं तथा ॥ १४८ ॥
स्वं स्वं स्वभावं सर्वस्य स्थूलसूक्ष्मपरात्मकम्। विज्ञेयमधिभूतत्वं साक्षात्कमललोचन ॥ १४९ ॥
सामान्यमेतत्सर्वत्र ध्येयमध्यात्मपूर्वकम्। सविशेषमथो वक्ष्ये शृणुष्वैकाग्रमानसः ॥ १५० ॥
निस्तरङ्गं परं ब्रह्म शब्दब्रह्मण्यकृत्रिमे। अध्यात्मं द्विज बोद्धव्यं मन्त्रकोट्या ह्यनेकधा ॥१५१॥
अधिदैवत्यभावेन तस्मिन्नेव [1]सदा स्थिता। अधिभूतं तु बोद्धव्यं [2]तद्व्याप्तत्त्वचयं तु यत् ॥
अध्यात्मगुणषट्काख्यं शब्दब्रह्म यथोदितम्। चातुरात्म्यं परिज्ञेयमधिदैवमनाकृति ॥ १५३ ॥
शक्तिव्यूहमसंख्यं [3]यद्गुणेभ्य प्रवदन्ति तु। तद्विशेषस्वरूपं च अधिभूतं तु विद्धि तत् ॥
प्राणशक्तेस्तु चाध्यात्मं षाड्गुण्यमखिलं हि यत्। अधिदैवतमच्छाशो वासुदेवस्सनातनः ॥
[4]अधिभूतमपानाद्या वायवो विश्वधारकाः। इच्छाशक्तेः परत्वेन स्थितं ज्ञानबलद्वयम् ॥१५६॥
ज्ञेयं तदधिदैवं च [5]परस्सङ्कर्षणः प्रभुः। सामर्थ्यमधिभूतं च सर्वतत्त्वाश्रितं हि यत् ॥१५७॥
द्वयमैश्वर्यवीर्याख्यमध्यात्मं विद्धि पौष्कर। क्रियाशक्तेस्तु दैवत्यं प्रद्युम्नः परमेश्वरः ॥ १५८ ॥
महत्प्रकाशप्रसरमधिभूतं सदोदितम्। तेजश्शक्तिर्द्विजाध्यात्ममव्यक्तममलेक्षण ॥ १५९ ॥
अर्केन्दुवह्नित्रितयं दैवतं परिकीर्तितम्। गुणत्रयमसङ्कीर्णमधिभूतं महामते ॥ १६० ॥

---

१. ग-घ—सदाद्विज, इति च  २. ग-घ—तत्वात् तत्व  ३. क-ख—यद्गुणा... प्रवदन्ति तु  ४. ग-घ—अधिदैवमपानाद्या, इति च क्वचित्  ५. क-ख—सङ्कर्षणोऽच्युत. प्रभु.

गुणत्रयस्य चाध्यात्मं सङ्घातकरणं स्वकम्। सत्त्वस्य दैवतं वह्नी रजसस्त्वमृतात्पदम् ॥१६१॥
तमसस्तपनो[1] विष्णोः सत्व. धिभूतता। रजस्यरागो विज्ञेयमधिभूतं महामते॥ १६२ ॥
महामोहं हि तमसस्त्वधिभूतं प्रकीर्तितम्। अध्यात्मं चेतनो बुद्धेर्धर्मं मदधिदेवता॥ १६३ ॥
स वै राग[2] द्विजैश्वर्यमधिभूतं तदात्मकम्। अहङ्काराख्यतत्त्वस्य बुद्धिरध्यात्ममब्जज ॥ १६४ ॥
अधिदैवं परिज्ञेयं कालवैश्वानरो महान्। महत्त्वमधिभूतं च मनसोऽथ निरुच्यते॥ १६५ ॥
अध्यात्मं तु अहङ्कारो नृवराहः प्रजापतिः। विज्ञेयमधिदैवं च सङ्कल्पमधिभूतता॥ १६६ ॥
पञ्चानामिन्द्रियाणां तु अध्यात्मं च मनः स्मृतम्। कालात्मदैवतं विद्धि अधिभूतं सुखादिकम् ॥
वागादीनां द्विजाध्यात्मं व्यूहमिन्द्रियकं तु यत्। अधिदैवं तु बोद्धव्यं विश्वरूपाख्यमच्युतम् ॥
व्यापारमधिभूतं च अष्टयोन्यात्मकं हि यत्। तन्मात्राणां समूतानामध्यात्ममममलेक्षण ॥१६९॥
सुसूक्ष्मं करणव्यूहमधिदैवं निबोधतु। वैभवं भगवद्व्यूहं विचित्रं विद्धि पद्मज॥ १७० ॥
बोद्धव्यमधिभूतं च तत्त्वभूमिजयैषिणाम्। उक्तमध्यात्मपूर्वं यत्त्रितयं योगसिद्धये॥ १७१ ॥
प्रभावेन क्रमेणैव तत्पुनश्चतुरानन। आप्ययेन क्रमेणैव अभ्यस्तैस्सर्वयोगिनाम्॥ १७२ ॥
[2]आ (क्षिनेः?) सर्वशतयात्मा पदपर्यन्तमाच्युतम्। [3]तत्त्वबुद्धनिरासार्थं योगाभ्यासमिदं स्मृतम्॥
भवेत् तत्वजयात् भिन्नं फलं तत्त्वं फलार्थिनाम्॥

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां तत्त्वसमाख्यानं नाम

त्रयस्त्रिंशोऽध्यायः ॥

(समुदित श्लोकसंख्या १७४)

१. ग-घ—विष्णु स्त्वास्मात्वधिभूत तथा २. क-ख—आक...सर्व ग-घ— आक्षिन्तः सर्व ३. ग-घ—तत्वबन्धनिरासार्थम्

# अथ चतुस्त्रिंशोऽध्यायः



**श्रीभगवानुवाच—**

क्षेत्रे वायतने दिव्ये तीर्थोद्देशेन संकुले। क्षुद्रप्राणिविमुक्ते च वने तूपवने शुभे ॥ १ ॥
भूगृहे वा गिरेः शृङ्गे गुप्ते देवगृहान्तरे। स्वास्थ्यं मत्वैकदेशे वा गोष्ठे द्विजपरिग्रहे ॥ २ ॥
अर्धरात्रादतिक्रान्ते काले कमलसंभव। स्वमन्त्रस्याग्रतस्त्वेव तत्त्वाभ्यासं समाचरेत् ॥ ३ ॥
तत्र श्रमजये लब्धे दत्त्वार्घ्यं मन्त्रमूर्द्धनि। घण्टाशब्दसमोपेतं धूपं दत्त्वा महामते ॥ ४ ॥
स्तुत्वा प्रदक्षिणीकृत्य शुचिस्थाने तु सान्तरे। कृष्णाजिनप्रच्छिन्ने कुतपे कम्बले तु वा ॥५॥
निद्रां सन्त्यज्य वै ब्रह्मन् पावने शयने स्थितः। ब्राह्मे मुहूर्ते चोत्थाय पञ्चाङ्गं स्नानमाचरेत् ॥
प्लवने वाप्सु मध्ये वा सन्ध्यां कृत्वा यथाविधि। तस्याग्रतश्चोपविश्य निर्मलं दर्पणं द्विज ॥७॥
दर्शयित्वोपसंहृत्य मन्त्रं हृत्कमलोदरे। नित्यप्रतिष्ठितं मन्त्रं विना स्थल[१]जलात्मकान् ॥ ८ ॥
मन्त्रान् क्रियाङ्गसंरुद्धान् संहृत्य तदनन्तरम्। शेषमर्घ्यादिकं सर्वं भुक्तपूर्वेण वै सह ॥ ९ ॥
पाणिना तोयपूर्णेन विष्वक्सेनाय चार्प्य च। प्राग्वदम्भसि निक्षिप्य समाहृत्य तदाखिलम् ॥
स्वदेहादुपसंहारमन्त्राणामपि चाचरेत्। मनसात्मनि विप्रेन्द्र कुर्याद्भोगार्जनं ततः ॥ ११ ॥
भगवद्यागसिध्यर्थं शुद्धेन द्रविणेन च। याचयित्वा च पात्रेभ्यो वैष्णवेभ्यो हि नान्यथा ॥१२॥

**पौष्कर उवाच—**

अत्यर्थेन जगन्नाथ भूयोभय[२]प्रशंससि। भोगेभ्यो धूपदानं च घण्टाध्वनिसमन्वितम् ॥१३॥
महत्तां ज्ञातुमिच्छामि प्रमाणं लक्षणं तथा। यथावद्धूपघण्टाभ्यां धूपाग्नेर्धारकस्य च ॥ १४ ॥
स्वरूपं धूपधूमस्य लक्षणं प्रत्यु[३]दीर्यताम् ॥

**श्रीभगवानुवाच—**

शब्दब्रह्मैकदेहाया: लक्षणं कमलोद्भव। प्रमाणमतिशुद्धं च सप्रमेयं निबोधतु ॥ १५ ॥
[४]सममर्धसमं ज्येष्ठमायाम(धम?)मथ मध्यमम्। तत्त्रिभागसमं विद्धि चतुर्थांशं तु कन्यसम् ॥
त्रिभागेन तदुच्छ्रायाद्द्वा[५]दशांशान्वितेन तु। प्रमाणेन तु विस्तारं त्रिविधं तु विधीयते ॥१७॥

---

१. क-ख—जलाग्निकान्   २. क-ख—भय प्रशस्यते   ३. क-ख—प्रत्युदीर्यते
४. क—ख...मध्यमम्  ख—स्व . शमाशक्तुमज्येष्ठमायाममथमध्यमम्  ग-घ—स्वशमार्धशमज्येष्ठमाया-
ममथमध्यमम   ५. दशार्शा ञ्जतेन (पाठा तरम)

कृत्वा सूत्रपरिच्छिन्नं प्राक्प्रत्यग्दक्षिणोत्तरम्। चतुरश्रायतं क्षेत्रमेवमापाद्य वै पुरा ॥ १८ ॥
तिर्यगूर्ध्वगतैस्सूत्रै[1]र्भङ्क्त्वा संपूर्यते[1] ततः। तत्र पञ्चोर्ध्वसूत्राणि दद्यादेकादशानि च ॥ १९ ॥
भुजाख्यानि च वै यानि विभागमथ मे शृणु। सार्धैस्तु पञ्चभिर्भागैश्शङ्खक्षेत्रं विधीयते ॥२०॥
तत्र चक्रं च कमलं सर्वेदृश्यं प्रकल्प्य च। [2]शङ्खं कमलसंभूत मुक्ताहारादिकं क्रमात् ॥२१॥
वलयत्रितयान्तस्थं मुक्ताहारं सुवर्तुलम्। भागार्धेनाग्रतः कुर्यात्त्यक्त्वार्धार्धं तदूर्ध्वतः ॥ २२ ॥
शिष्टेनांशेन महता भागार्धेन तदूर्ध्वतः। नाभिक्षेत्रान्वितं चक्रं द्वादशारं विधीयते ॥ २३ ॥
केवलं कर्तरीभिर्वा मिश्रं क्ष्माभिश्रितैर्वशात्। षोडशारं तु वा विप्र [3]शतशृङ्गं मनोहरम् ॥
सांशेनाथोर्ध्वभागेन कर्णिकाकेसरान्वितम्। चतुर्विंशद्दलं पद्ममापाद्य कमलोद्भव ॥ २५ ॥
[4]चक्रनाभेर्दलाग्राणां [5]वर्जयित्वान्तरं धिया। यथाभिमतमानं च सुश्लक्ष्णरचनोज्झितम् ॥ २६ ॥
दलमध्यनिविष्टं च किञ्जल्कनिचयं शुभम्। कुर्याद्वा कर्णिकालग्नमुच्छ्रितं च सुसंहतम् ॥ २७ ॥
ऊर्ध्वे भागद्वयेनाथ भागेन शुभलक्षणम्। कर्णिकावनिविश्रान्तमर्धदृश्यं च शङ्खराट् ॥ २८ ॥
भुवनावलियोगेन वल्लीभूतेन भूषितम्। ओङ्कारावर्तरूपेण कुम्भं तस्यांशसंमितम् ॥ २९ ॥
कुम्भोदर्यथ चार्धेन भागेन तु शनैश्शनैः। कलशं कु(क्र)शतां[1] नीत्वा च्छिद्रदेशावधेः क्रमात् ॥
शङ्खकुम्भावधेर्विप्र [6]शातनीयं च दिग्द्वयात्। मत्स्यवलाञ्छनं चैव अर्धमर्धं पदद्वयात् ॥ ३१ ॥
चतुरंशार्धविस्तीर्णा प्रथमा भुवनावली। द्वितीया विरता चान्या तृतीया भागसंमिता ॥ ३२ ॥
[7]आ अग्रात् स्वधिया सर्वं पद्मपर्यन्तं कमलोद्भव। [8]अनुपानवशान्मध्यं क्षामं क्षेत्रं विधीयते ॥
शङ्खोपरि यथा कार्यं तथा तदवधारय। सार्धभागचतुष्केण तदुच्छ्रायं महामते ॥ ३४ ॥
विस्तारं सार्धभागेन गदायां विहितं तु वै। मुष्टिसंज्ञं तु यत्पीठं [9]कुर्याद्भागोन्नतं द्विज ॥३५॥
चतुरश्रं तु वा श्लक्ष्णं चित्रकर्मविभूषितम्। वृत्तायां चतुरश्रं तु तुर्याश्रे वर्तुले स्मृतम् ॥ ३६ ॥
तुल्यरूपं हि वा ब्रह्मन् करग्राहं च तत्र यत्। तत्त्वषडाग्रं(श्रं)तु वा वृत्तं सामान्यं सर्वतः स्मृतम् ॥
मुष्टेरूर्ध्वगतं कुर्याद्गदास्तम्भं च पूर्ववत्। विद्धि तं [10]सप्तपर्वं तु ग्रन्थिका[11]शुक्तिभिर्युतम् ॥
मुक्तावलिगणोपेतं तीक्ष्णाश्रं (ग्रं) चतुरश्रकम्। वलयाकृतिरूपेण युक्तं तारागणेन च ॥ ३९ ॥
शुक्तिवृन्दसमेतेन वर्तुलं वा समाप्य च। रचनारहितं श्लक्ष्णं केवलं चतुरश्रकम् ॥ ४० ॥
अष्टाश्रं च सुवृत्तं वा स्वप्रमाणेन लक्षितम्। कुर्यादेवं गदास्तम्भमथ तन्मस्तकोपरि ॥ ४१ ॥

---

1. **क–ख–ग–घ**—भूत्वा सपूर्य 2. **ग–घ**—शाखाकमल 3. **ग–घ**—श्रितशृङ्गम् 4. **क–ख**—चक्रारमंडला 5. **क–ख**—वर्जयित्वा 6. **क–ख**—शातनीयं च 7. **क–ख**—अग्रात् स्वधिया 8. सर्वत्र—अनुतापवशात्, इति 9. **क–ख**—भोगोन्नतम् 10. **क–ख**—सप्त पूर्वं तु 11. **क–ख**—शक्तिभि

भागद्वयोन्नतं कुर्याद्द्विभुजं वा चतुर्भुजम्। प्रागुक्तं प्रविभक्ताङ्गं पक्षमण्डलमण्डितम्॥ ४२॥
तत्पक्षविस्तृतं कुर्याच्चतुर्भागसमं द्विज। त्रिभागवितनं चाथ पुच्छपक्षद्वयं हि यत्॥ ४३॥
तत्समं विततं चैव मुखराणियुगं नु वै। विधेयं कमलोद्भूत तस्य संपुटवद्यथा॥ ४४॥
पक्षवत्प्रसृतं खस्थं वेदाध्ययनचिह्नितम्। मन्त्रजातरतं चैव विधेयं वा सविस्तरम्॥ ४५॥
प्रतार्य विधिनानेन स्वयं क्षितितले ततः। शिल्पिजश्चैव द्रष्टव्यं प्रमाणेनाकृतैस्सह॥ ४६॥
न्यूनत्वमतिरिक्तं वा अतो [1]हेतोस्तदग्रतः। पूरयेद्वर्धयेनैव स्वधिया कर्मणा स्वयम्॥ ४७॥
चलन्तं गर्भमानेन तीक्ष्णलोहेन निर्भिनम्। भागार्धेनाधिकं क्षेत्रात् शब्दव्यञ्जकमब्जज॥४८॥
एतावदाद्यं विहितं निर्माणं तैजसं महत्। व्यक्तं यत्राश्रितं कालं नाभिस्थं कमलोद्भव॥ ४९॥
तत्र चाक्षपरावृन्दं [2]स्वकं द्वादशकं स्मृतम्। तमेव षोडशारं च वर्णैस्सह नपुंसकैः॥ ५०॥
वर्णानां त्रिविधं रूपं सर्वेषां कमलोद्भव। संस्थितं वैखरीनिष्ठं पश्यन्ती पूर्वमब्जज॥ ५१॥
अराश्रितद्विषट्कारे वाक्स्वरूपं परं हि यत्। तत्रैव षोडशारे च तत्रैवाक्रतरीपु च॥ ५२॥
मध्यमाख्यस्वरूपेण नियमेन हि वर्तते। अत ऊर्ध्वं चतुर्विंशत्संख्यं वर्णगुणं हि यत॥ ५३॥
दलजालं हि यत्पद्मं परिज्ञेयं महामते। सकारसंज्ञं यद्वर्णं विद्धि सा पद्मकर्णिका॥ ५४॥
शङ्खं यकारवर्णं तु समुद्दिष्टं गदाग्रहे। रादयस्सस ये वर्णा हान्ता पर्वगदात्मकाः॥ ५५॥
क्षान्तं पतत्रिराड्विद्धि एवं कमलसंभव। शब्दब्रह्मस्वरूपं च घण्टाविग्रहलक्षणा॥ ५६॥
विज्ञेया भगवच्छक्तिः षाड्गुण्यान्तर्गता हि सा। तेजोगणसमोपेता तेजस्तद्रूप्यरूपधृक्॥ ५७॥
घण्टाख्यमेतद्वै विद्धि अध्यर्क्षाय गुणद्वयम्। शब्दब्रह्मत्वहेयं यद्धृदयाकाशमध्यगम्॥ ५८॥
नित्योदितमनौपम्यं मनसा (ग्या,)दगोचरम्। उपदेष्टुमतोऽन्येषामभक्तानां न युज्यते॥ ५९॥
परस्वरूपमन्त्राणामेतल्लक्षणमब्जज। दशप्रकारे यच्छब्दे विसर्गान्तेऽक्षरादिके॥ ६०॥
नानामन्त्रस्वरूपे च वर्तते वर्णविग्रहे। भोगमोक्षप्रदे मन्त्रे य आसस्सद्गुरोर्मुखात्॥ ६१॥
पञ्चस्थानगतं ज्ञेयं भक्तैर्दिव्यक्रियापरैः। बहिस्थं प्रतिमादौ तु [3]जिह्वाग्रे हृत्कुशेशये॥ ६२॥
धूपधूमशिखायां च घण्टाशब्दे सुलक्षणे। स्वरूपं ज्योतिरेषां तत् भासयत्संस्थितं हृदि॥ ६३॥
मध्यमेन स्वरूपेण अभ्युच्छिन्नं महामते। धूपधूमाश्रितं विद्धि वैखरीविग्रहं पुनः॥ ६४॥
घण्टायां चाल्यमानायामच्छिन्नमनुभूतये(यते)। अस्यामाश्रित्य ये संस्था ज्ञातव्यास्तु सदैव हि॥
नित्यमर्चनकाले तु साधकैस्सिद्धिलालसैः। कालवैश्वानरोपेतमनन्तं शब्दचोदके॥ ६६॥
मुक्ताहाराश्रितं शङ्खं घण्टाया वदने स्थितम्। संस्थितं च महाबुद्धे तदूर्ध्वे गगनाश्रितम्॥

१. क-ख—हेतोस्तदेऽग्रत. २. ख—स्वर चादशकम् ३. क-ख— ..सोऽग्रे हृत्कुशेशये

चक्रं यस्मिन्नरोद्देशे द्वादशात्मा स्थितो रविः। मासात्मना पुनस्तैव कर्तरीष्ववतिष्ठति ॥ ६८ ॥
षोडशात्मकलात्मा वै कलादेहस्तु चन्द्रमाः। सर्वेषु वृत्तक्षेत्रेषु वरुणस्स्वयमेव हि ॥ ६९ ॥
तत्त्वसंवलिताव्यक्तपद्मपत्राश्रितस्तु वै। जीवः कमलकिञ्जल्के कर्णिकाश्रित ईश्वरः ॥ ७० ॥
शङ्खाहितश्च प्रणवो विद्यां विद्धि गदाश्रिताम्। प्राणाधिदैवं गरुडमित्येवं देवतागणम् ॥ ७१ ॥
ध्यात्वाभ्यर्च्य पुराघ्यैर्धूपयित्वा यथाविधि। पीठप्रतिष्ठितां कृत्वा कालेषु कमलोद्भव ॥ ७२ ॥
संचालनीया वैवेषु तानि मे गदतः शृणु। गणेशपीठगभ्यर्थदेवानामर्चने ततः ॥ ७३ ॥
आहुतीकालमन्त्राणां धूपदाने विशेषतः। जपस्तुत्यवसानाभ्यां प्रवृत्ते चाग्नितर्पणे ॥ ७४ ॥
पूर्णाहुतिप्रदाने च मन्त्राणां च विसर्जने। विष्वक्सेनार्चनाकाले तत्पूजाप्रनिपादने ॥ ७५ ॥
नातोऽन्यथा स्यात् विहितं चालनं सिद्धिमिच्छता। प्रमाणं लक्षणोपेतं सप्रमेयं सदैवतम् ॥
यथावदरविन्दोत्थ मुख्यमित्युदितं स्फुटम्। मुख्याभागानि चान्यानि रूपाण्यस्य निबोध मे ॥
यथोक्तं त्रिविधं मानं विस्तारायामसंज्ञितम्। चक्रादिगरुडान्तेन यथासंख्योदितेन तु ॥ ७८ ॥
संचाल्याभिमतेनैव योग्यस्थानाश्रितेन च। [1]पादनीरचनां विप्र सर्वासां च विधीयते ॥ ७९ ॥
पद्मं कुर्यात्तदूर्ध्वे तु प्रफुल्लं चोर्ध्वकर्णिकम्। विततं दीर्घपत्रं तु किञ्जल्कनिचयान्वितम् ॥८०॥
तत्कर्णिकाश्रितं कुर्यात् शङ्खाद्यं त्रितयं हि यत्। वक्त्रसूत्रसमीपे तु चक्रं वा केवलं द्विज ॥
[2]कृत्वा पद्मान्वितं पश्चात् शङ्खं पूर्वं हि तत्त्रयम्। यथोदितं च संपाद्य सर्वं गरुडपश्चिमम् ॥
विमुक्तचक्रपद्मस्य क्षेत्रस्योपरि पद्मज। शङ्खं गदां खगेन्द्रं च संपाद्य चतुराननं ॥ ८३ ॥
कवाटोपरि पद्मं तु दीर्घच्छदमधोमुखम्। शङ्खचिह्न[3]विनिर्मुक्तं गदानालखगान्वितम् ॥ ८४ ॥
समानेन समूमेवं शङ्खं कृत्वा यथोदितम्। गदा कार्या तदूर्ध्वे तु पन्नगारिसमन्विता ॥८५॥
कुर्याद्वा गरुडोद्देशे ऊर्ध्ववक्त्रं च हेतिकम्। कमलं वा स्ववक्त्रं तु तदुद्देशे विधीयते ॥ ८६ ॥
शङ्खं च दक्षिणावर्तं वलित्रितयभूषितम्। एकैकमेवमापाद्य शङ्खचक्राम्बुजोज्झिते ॥ ८७ ॥
सुश्लक्ष्णवर्तुले क्षेत्रे मुक्तातारगणानने। निर्मुक्तलाञ्छना घण्टा विघ्नानामाश्रया भवेत् ॥ ८८ ॥
लाञ्छिनेनान्विता विप्र विघ्नविद्राविणी हि सा। अतः सलाञ्छना कार्या नूनं भर्तृफलाप्तये ॥



इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां धूपघण्टालक्षणं नाम
चतुस्त्रिंशोऽध्यायः ॥
(समुदितश्लोकसंख्या ८९॥)

१. **ग–घ**—पादनीरचनाम २ **ग–घ**—कृत्वा पद्मोज्झितम् ३. **ग–घ**—"विनिर्मुक्तम गदानाल" इत्यारभ्य "कृत्वा यथोचितम्" इत्यन्त लुप्तम्

# अथ पञ्चत्रिंशोऽध्यायः

**श्रीभगवानुवाच —**

इत्युक्तं धूपघण्टाया लक्षणं लक्ष्मिवर्धनम्। यस्यां [1]सञ्चाल्यमानायां धूपदानावधौ द्विज ॥ १ ॥
[2]सन्निधिं भजते शश्वन्मन्त्र आराधकस्य च। अथाङ्गुलैस्स्वकैः कुर्यादग्वमानमयैस्तु वा ॥ २ ॥
चतुर्विंशतिभिर्ब्रह्मन् धूपं दाहकमुत्तमम्। आयामेनाथ शिल्पीयैर्यवगुद्धैस्तु पूर्ववत् ॥ ३ ॥
स्वचतुर्थांशमानेन तद्वक्त्रमनलाश्रयम्। चतुरश्रं समापाद्य वृत्तं वाष्टाश्रमब्जज ॥ ४ ॥
अस्याष्टाश्रस्य वै मध्ये कुर्याच्चक्रं तु साम्बुजम्। कमलं वा महेन्नीशं स्वस्तिकं वा नलग्र(लंगृ)हम्? ॥
युक्तमुष्णीषपट्टेन निर्देशात्तु कम्बुना। चतुरश्रस्य वृत्तस्य तच्चक्रस्याथ मे शृणु ॥ ६ ॥
लक्षणं हि यथावस्थं सविशेषं महामते। चतुरश्रं समापाद्य क्षेत्रं वा वर्तुलं समम् ॥ ७ ॥
तदन्तरेऽब्जमब्जोत्थ नलिनीनालराजितम्। केवलं तु सनालं वा विधिवद्भागभाजितम् ॥ ८ ॥
आमध्यादष्टधा तं वै कृत्वा वै सुसमैः पुरा। भ्रमं दद्यात् षडंशेन कर्णिकाकोटरात्तत ॥ ९ ॥
भ्रमन्तं कर्णिकाग्वातं निम्नतां च नयेद्द्विज। तन्मानं गोलकार्धेन जानीयात्सुदितं यथा ॥१०॥
तृतीयांशेन षड्भागात् परितः कर्णिकोच्छ्रिति। किञ्जल्कैस्तु सुसंवीतं तन्मानेनोपलक्षितैः ॥
सप्तमांशात्तु यच्छिष्टं बहिः केसरसन्ततेः। भागद्वयं तु वै येन दलजालं समाप्य च ॥ १२ ॥
यथाभिमतसंख्यं च एवं भागेन तद्बहिः। मुक्ताजालसमोपेतं चक्रमापाद्य पूर्ववत् ॥ १३ ॥
अष्टमांशाच्चतुर्थांशं भागमादाय वै द्विज। क्षेत्रस्य चोक्तमानस्य वेद्यर्थमनुयोज्य च ॥ १४ ॥
वेद्याः कोणचतुष्के तु (च) कुर्याच्छङ्खचतुष्टयम्। चतुरश्रस्य या प्रोक्ता वेदिका शङ्खभूषिता ॥
स्थितिर्निषा च विहिता वृत्तक्षेत्रस्य पद्मज। पद्मपृष्ठाद्विनिष्क्रान्त यथाभिमतवर्तुलम् ॥ १६ ॥
वेदिकावनिपर्यन्तं चक्रनेम्यवधि तु वा। वस्त्राकारं सुवृत्तं वा तदुद्देशात्तु तं पुन ॥ १७ ॥
वेदिसन्धारणार्थं तु प्रोच्छ्रित पङ्कजद्वयम्। तन्मध्ये लक्षणोपेतं स्थितं पद्मासनादिना ॥ १८ ॥
कुर्यादाग्नेयमाकारं तत्पादयुगलं तु वै। प्रसारितं खवक्त्रं च प्रोच्छ्रितं [3]श्रोत्रदेशगम् ॥ १९ ॥

---

१. **क-ख**--सञ्चाल्य . २ अत्र **क-ख**--कोशयो ग्रन्थानुक्रमविपर्यासोऽस्ति यथा "धूपदानावधौ द्विज" इत्यनन्तर "अष्टपत्र समापाद्य" इत्यारभ्य "एतत्प्रासादयुक्तस्य वृत्तपीठानन-स्य च" इत्यन्तान् पञ्चविंशति श्लोकान विलिख्य "सन्निधिं भजते" इत्यादिग्रन्थः प्रमादाल्लिखितो दृश्यते
३. **क-ख**—श्रोत्रदेशिकम्

नालवसाने संपाद्य कर्णिकाकमले द्विज। अर्धप्रफुल्लै रचितैः पद्मपत्रैस्तथागतैः॥ २० ॥
तन्मूले साधिकां कुर्यात्तद्विस्तारां महामते। क्ष्माक्षेत्रं स्वस्तिकोपेतं सुषिरं सुदृढं तु वा॥ २१ ॥
पृष्ठदेशेऽथ पद्मस्य मरुत्क्षेत्रं सबिन्दुकम्। कुर्यादाधारभूतं च क्ष्माक्षेत्रस्योन्नतेस्समम्॥ २२ ॥
सार्धं क्ष्माव्यासविस्तारं तत्समं द्विगुणं तु वा। चक्रनेम्याश्रितं चैव प्रलीनं तच्च सुस्वनम्॥२३॥
आद्यं वा किङ्किणीजालं विघ्नविद्रावणं परम्। इत्येवं सविशेषं हि लक्षणं समुदाहृतम्॥ २४ ॥
मान्त्रस्य धूपपात्रस्य सामान्यमथ मे शृणु। वृत्तस्याभ्यन्तरे पद्मं कर्णिकाकेसरान्वितम्॥ २५ ॥
अष्टपत्रं समापाद्य व्योमवृत्तविभूषितम्। मुक्तासूत्रान्वितं वाथ एवमेव सवेदिकम्॥ २६ ॥
अन्तरा द्वादशारेण साम्बुजेनाथ वा. . । विचित्रपत्रविततं कुर्यात् पृष्ठावधेस्ततः॥ २७ ॥
प्रफुल्लपत्रस्थाने तु उष्णीषांशुकभूषितम्। वक्त्रविश्रामभूतं च आधारवलयान्वितम्॥ २८ ॥
शुद्धं सुश्लक्ष्णनालं च नलिनीरचनोज्झितम्। एवमभ्यूह्यमाकारं मानेनाभिमतेन तु॥ २९ ॥
सर्वलोहैस्स्वशक्त्या तु कृतं यच्छति वै सुखम्। मन्त्रिणां सुगृहस्थानां भक्तानां कमलोद्भव॥
वक्ष्ये समुद्गाख्यस्य लक्षणं तन्निबोधतु। विस्तारोद्दिष्टमानेन सुषिरं वृत्तसंपुटम्॥ ३१ ॥
सुसमं प्राक्समापाद्य समुद्गकमिवाब्जज। [1]सनालं च नयेत्कसुपरिष्टाच्च मध्यतः॥ ३२ ॥
प्रफुल्लकमलेनैव अधोवक्त्रेण पद्मज। द्वितीयमूर्ध्ववक्त्रेण स्थगितं पङ्कजेन तु॥ ३३ ॥
सच्छिद्रं बीजसङ्घेन युक्तमूर्ध्वस्थितं हि यत्। नालमापाद्य मूलाद्वै विततेन गजाङ्घ्रिणा॥
नालदेशगलाद्वाभ्यां स्थित्यर्थं विनियोज्य च। एवं प्रफुल्लरूपाणां लक्षणं समुदाहृतम्॥ ३५ ॥
[2]प्रार्थितानामिदानीं वै लक्ष्म शृणु यथागतम्। प्रागायामाच्चतुर्थांशं वैतत्येन महामते॥ ३६ ॥
चतुरश्रायतं क्षेत्रं निक्षिप्य वसुधातले। अष्टधाथ तमायामं सुसमं संविभज्य च॥ ३७ ॥
चतुर्धा विस्तृतेश्चैव कुर्यात्तदनु पद्मज। अष्टभागोन्नतं पीठं प्रागुक्तरचनान्वितम्॥ ३८ ॥
पादाद्युष्णीषपर्यन्तं यथाविस्तारविस्तृतम्। पीठार्धेनोच्छ्रितं चैव विस्तारात् त्र्यंशसंमितम्॥३९॥
कमलं पीठमध्ये तु कुर्याद्द्वितयकर्णिकम्। अष्टपत्रं सकिञ्जल्कं व्योमवृत्तविभूषितम्॥ ४० ॥
विस्ताराच्चार्धभागेन पृथुलं चोन्नतः पुनः। सार्धभागचतुष्केन अष्टाश्रं वा सुवर्तुलम्॥ ४१ ॥
चतुरश्रं तु वा रम्यं तदेव रचनान्वितम्। स्तम्भमापाद्यमेवं हि यथाभिमतमब्जज॥ ४२ ॥
येभ्यो यद्वर्तुलं तद्वै विचित्ररचनान्वितम्। स्तम्भमस्तकविश्रान्तं बाहुल्येनांशसंमितम्॥ ४३ ॥
पीठतुल्यं तु विस्तारादद्वादशारविभूषितम्। नाभिनेमिप्रधीयुक्तं मुक्ताहाराद्यलंकृतम्॥ ४४ ॥
प्रान्तस्थकिङ्किणीकं च चक्रमापाद्य पद्मज। तदक्षमध्यसंरूढं सार्धांशेनोन्नतं तु वै॥ ४५ ॥

१. क-ख—वरालं च   २. ग-घ—प्रोत्थितानाम्

अग्रात्पीठसमं चैव बाहुल्याच्चक्रसंमितम् । विस्तारादर्धभागेन अष्टोद्देशाच्च संकटम् ॥ ४६ ॥
क्रमशश्चानुपातेन तद्विस्तारं विधीयते । मुखमेवं समापाद्य सधूमस्यानलस्य च ॥ ४७ ॥
सदाश्रवं सदाकालं विभोरर्चनकर्मणि । जलजैस्स्थलजैश्चैव प्राणिभि[१]र्नाकजैस्ततैः ॥ ४८ ॥
पत्रवल्लीवितानैश्च सशङ्खैः स्वस्तिकैः कजैः । कुसुमस्तबकैः स्वच्छैः सिद्धविद्याधरादिकैः ॥
देवाङ्गनासमेतैश्च दिक्षु वेशो भवेद्बहिः । एतत्प्रासादयुक्तस्य वृत्तपीठाननस्य च ॥ ५० ॥
यथावदुपदेक्ष्यामि सन्निवेशमतोऽब्जज । वलित्रितयसंयुक्तं शङ्खाननमिवासनम् ॥ ५१ ॥
पद्ममानोन्नतं कुर्यादासनोपरि पद्मज । स्तम्भाधारं विचित्रं च दिव्यमामलसारकम् ॥ ५२ ॥
रचनारचितं स्तम्भं रक्तपूर्वमथोच्छ्रितम् । वलयावलितुल्यं वा स्तम्भनालस्य तूपरि ॥ ५३ ॥
चक्रवत्कमलं कुर्यात् सकिञ्जल्कं द्विषट्पदम् । विस्तीर्णकर्णिकं विप्र प्राग्वद्वक्त्रं तदूर्ध्वगम् ॥
यथोक्तरचनोपेतं परितः किन्तु वर्तुलम् । मुक्तासूत्रान्वितं चैव किङ्किणीजाललम्बितम् ॥ ५५ ॥
एभ्यश्चोक्तमथैकं वै सविधानं तदब्जज । [२]जलजस्थलजा यात्स्यरचना[२] रचिता मया ॥५६॥
समभ्यूह्य च सा कार्या सर्वेषां सर्वदाऽब्जज । स्फुटावस्य. ..[?] यस्मिन् वै कृताङ्गे[?] त्यन्तराजने ॥
इदमुक्तं समासेन लक्षणं च सविस्तृतम् । धूपदाहक्रियाङ्गस्य नानाकृतिधरस्य च ॥ ५८ ॥
संपाद्यैवं च संस्कृत्य नीत्वा सत्यन्तता[?] पुनः । स्वमन्त्राधिष्ठितं कृत्वा पूज्यमाधारसंस्थितम् ॥
मूलतस्स्वस्तिकास्थाने क्ष्मातत्त्वं पञ्चलक्षणम् । सलिलं कमलं विद्धि चक्रमग्निं महत्प्रभम् ॥६०॥
किङ्किणीजालमनिलमाकाशं कर्णिकोदरे । इत्येवं साधिभूताधिदैवतानुगतं हि वै ॥ ६१ ॥
प्राक् प्रोक्तं भावनीयं च सिद्ध्येऽखिलकर्मणाम् । चक्रस्य सकलं रूपं नाभ्यरानेमिसप्रथि[?] ॥६२॥
निष्कलं हि सुवृत्तं यत् व्योमवृत्तेति गीयते । एवं लक्षणसंयुक्तं धूपपात्रं समर्चयेत् ॥ ६३ ॥
संस्कृत्य च यथान्यायं स्ववंशस्य च कीर्तयेत् । स्वनामचिह्नितं कृत्वा प्रतिपाद्य महामते ॥ ६४ ॥
हरेरायतने दिव्ये सुरसिद्धनिषेविते । त्रैकाल्यं बलिदानेन धूपधूमेन वै सह ॥ ६५ ॥
वादयेत् सुस्वनां घण्टां भेरीशब्दादिकैर्युताम् । स्तोत्रैः प्रदक्षिणीकुर्याद्बहुधा दिव्यमालयम् ॥६६॥
सिद्धसंघं च तत्रस्थं शब्दब्रह्मैकमासनम् । श्रुत्वा घण्टारवं बाह्यात् परितोषं महामते ॥ ६७ ॥
कस्येदमचिराद्याति अभिव्यक्तिमनाहतम् । भव्यानामुपदेशार्थं येनेदं व्यञ्जितं बहिः ॥ ६८ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां धूपाधारलक्षणो नाम पञ्चत्रिंशोऽध्यायः ॥

१. ग-घ—कजैश्शुभैः २. क-ख—"जलजस्थलजा" इत्यर्धमधिकमस्ति

# अथ षट्त्रिंशोऽध्यायः

**पौष्कर उवाच—**

भगवन् ज्ञातुमिच्छामि त्वया यत्समुदीरितम्। महात्मनोऽनुविद्धं च लक्षणेनोपलक्षितम् ॥ १ ॥
यद्भद्रायतनं दिव्यं सिद्धायतनमेव च। [1]नृणामुपायभूतं यदज्ञानां ज्ञानिनामपि ॥ २ ॥
यत्राराधनपूर्वं हि मान्त्रमभ्येति मन्त्रिणाम्। शश्वत्प्रसन्नता देव तथा तत्त्वजयो महान् ॥ ३ ॥
निर्विघ्नेन भवत्याशु स्नातकब्रह्मचारिणाम्। यतीनां मुक्तसङ्गानां विरतानां गृहाश्रमात् ॥ ४ ॥

**श्रीभगवानुवाच—**

आक्षिनेर्भेदभिन्नं वै मायामयमिदं जगत्। क्षेत्राख्यैर्भगवत्तत्त्वैः क्षेत्रनाथसमन्वितैः ॥ ५ ॥
नानाविभवरूपैस्तु व्याप्तव्यूहात्मपूर्वकैः। नित्यनिर्मलषाड्गुण्यविग्रहैस्तैस्स्वयं पुनः ॥ ६ ॥
अनुग्रहार्थं [2]भविनामकृतज्ञाल्पमेधसाम्। भक्तानामप्यभक्तानां नास्तिकानां तथैव च ॥ ७ ॥
भूचक्राक्षं गते द्वीपे ह्यनादिप्रथितं हि यत्। क्षेत्रं स्वकर्मफलदं [3]पुण्यं परिमितं तु वै ॥ ८ ॥
नृणामनुग्रहार्थं तु स्थानभेदैरधिष्ठितम्। अमूर्तैस्तु स्वसंज्ञाभिः कारुण्यात् क्षेत्रसत्तमैः ॥ ९ ॥
तथा क्षेत्राधिपैः किन्तु मूर्तैर्युक्ता नवाब्जजः। बीजभावेन भूमौ वा स्थितिं कृत्वा स्थितां(रां)ततः॥
ज्ञानाद्यैर्वाणिमाद्यैस्तु अव्यक्तैः क्ष्मानलादिकैः। तत्त्वबीजकलारूपैर्ब्रह्मसत्तासमन्वितैः ॥ ११ ॥
सहावतीर्य चामूर्तैः [4]प्राग्व्यक्तिं यान्ति वै ततः। [5]स्वयमेवात्मभावेन सर्वानुग्रहकाम्यया ॥१२॥
क्ष्मामण्डलोपसंहारकालं क्षेत्रवरैस्सह। वशित्वावरदेहांस्तु प्रधानमुनिविग्रहात् ॥ १३ ॥
स्वस्मिन् स्वस्मिन् हि युगपत् क्षेत्रे क्षेमगतिप्रदे। स्वकामनैकभूतां च मूर्तिं चैवाभिमानिकीम् ॥
कृत्वा वै व्यक्तिभावं च प्रमाणैरुत्तमादिकैः। यथाकालानुरूपैश्च वासुदेवोपलात्मना ॥ १५ ॥
अतस्तद्रूपनाम्ना वै ख्याता क्षेत्रेश्वरा भुवि। प्रख्यातास्तुल्यनाम्नान्ये देवस्सायतनस्तु वै ॥१६॥
एवं क्षेत्रेश्वरैः क्षेत्रैः कर्मभूमिरधिष्ठिता। क्षेत्रैरमूर्तैश्चिद्रूपैर्मूर्तैः क्षेत्राधिपैस्तथा ॥ १७ ॥
इति युक्त्यावतीर्णा ये क्षेत्राणां क्षेत्रनायकाः। तेऽपि कालान्तरेणैव स्वयं दोषं शिलामयम् ॥
बुध्वान्तर्धानमायान्ति देशभङ्गादिकैर्द्विज। विचारैः प्रचुरैः भूयः प्राग्वद्व्यक्तिं व्रजन्ति च ॥१९॥

---

१. क-ख— .दित यज्ज्ञानां ज्ञानि २. क-ख-ग-घ—भविनां कृतज्ञाथल्पमेधसाम्
३ ख—पुम परिमितम ४. क-ख-ग—प्राग्यक्तिं यान्तु वै ५. ग-क—स्वयमध्यात्मभावेन

स्वयं वावानिमध्यात्तु स्वसामर्थ्येन चोदयेत्। कुर्वन्नम्बुनिधेर्यद्वदम्बुदोघमचोदितम्॥ २० ॥
इति मत्प्रतिपन्नानां स्वप्ने प्रत्यक्षतोऽपिवा। वदन्ति योगक्षेमाद्यं स्वयं वा [1]तन्मयात्मनाम्॥२१॥
तत्तत्त्वतोऽतिभक्तानां सत्यार्थं सर्वदा भवेत्। असत्यार्थमतोऽन्येषां किन्तु पुष्करसंभव ॥ २२ ॥
इत्युत्कर्षं भवत्येषामस्तित्वेन समन्वितम्। निरासार्थमभक्तानां नास्तिकत्वेन वासना ॥ २३ ॥
तुष्टये ह्यास्तिकानां तु तीर्थादीनां हि सिद्धये। क्षेत्रेशा वासुदेवास्ते स्थिताश्चोपलकुक्षिषु ॥२४॥
क्वचित्साक्षात्तथा चक्रशङ्खपद्मगदात्मना। विशेषेण त्रिकूटे तु गिरौ रैवतके तु वै॥ २५ ॥
सालग्रामे तु सह्याद्रौ तथा विष्णुपदे द्विज। व्यावर्ते चैव कृष्णाख्ये कुक्षौ तु तुहिनाचले॥२६॥
महेन्द्रे मलये विन्ध्ये पारियात्रेऽ[2]थवार्बुदे। सत्यव्रतस्थे हस्त्यद्रौ [3]विकूटे पर्वतोत्तमे॥ २७ ॥
सिंहाचले मम क्षेत्रे पुण्ये वा सुमनोहरे। एवं कमलसंभूत वासुदेवैरधिष्ठिते॥ २८ ॥
अनेकाकृतिभेदस्थैरनेकैकेन केन चित्। अयत्नात् कल्पिते क्षेत्रे स्वबुध्या तु व्रजन्ति ये ॥२९॥
अश्रित्य क्षेत्रनाथं तु विपद्यन्ते च तत्र ये। अवसाने तु वा चान्ये धरांशे मध्यमे तु वा ॥३०॥
आद्ये वा देवहृत्दृष्टे ते प्रयान्ति क्रमेण तु। तस्य वै क्षेत्रनाथस्य मत्तत्त्वक्ष्मागतस्य च ॥ ३१ ॥
तत्सालोक्यं तु सामीप्यं सायुज्यममलेक्षण। परिग्रहविहीनं च विवेकरहितं जनम्॥ ३२ ॥
शरणागतभूतं तु अपि चेन्नास्तिकं पुरा। तथान्तिकं श्रद्धधानं निश्चेष्टं चापि पौष्कर ॥ ३३ ॥
विसंज्ञं बन्धुभिर्नीतं कारुण्यात्कमलोद्भव। त्राहीत्युक्त्वा जगन्नाथं क्षिप्त्वा स्त्रीबालपूर्वकैः ॥३४॥
ज्ञात्वा विमुक्तदेहं तं सह पुर्यष्टकेन तु। महता तूर्यघोषेण कृत्वा रथवरे तु वै॥ ३५ ॥
जित्वान्तकभटान्घोरान् बलात् क्षेत्रेशकिङ्करैः। नृसिंहकपिलक्रोडवामनाश्वशिरैस्तु वै ॥ ३६ ॥
ससौम्यवदनैः पद्मशङ्खचक्रगदाधरैः। सीरनन्दकश्रुवज्रपाशाङ्कुशधनुर्धरैः ॥ ३७ ॥
मुसलादितथादण्डहस्तैश्च गरुडाननैः। आनीय क्षेत्रनाथस्य अभिगच्छापयन्ति च ॥ ३८ ॥
देव क्षेत्रे त्वदीयेऽस्य [4]विमुक्तं पाञ्चभौतिकम्। शरीरमधुनाथस्य कुरु यथायथोचितम्॥ ३९ ॥
क्षेत्रनाथस्तु तद्वाक्यं समाकर्ण्य गणेरितम्। करुणानुगतेनैव तं निरीक्ष्य तु चक्षुषा॥ ४० ॥
कृतं विगतपापं तु तस्मिन्नायतने पुरा। संप्राप्तस्य स्वके स्थाने दोषशेषं हि वै पुन ॥ ४१ ॥
संसर्गेण लयं नीत्वा क्रमात् कालान्तरेण वै। द्वाभ्यामेवं प्रकारेण यदन्यच्चात्मरात् कृतम्॥
तत्स्थं लिङ्गवशात्कृष्य स्वशक्त्या च स्वविग्रहात्। संस्कारयोग्यतां ज्ञात्वा सम्यग्ज्ञानाप्तये तु वै॥
[5]ददाति कर्मभूमौ तु [6]जन्म सत्कर्मिणां कुले। स्वक्षेत्रे वा परक्षेत्रे तत्र सालोकनं हि यत्॥

१. **क-ख**—तन्मयात्मना २. **ग-घ**—थवानदे-(र्बुदे) ३ **ग-घ**—सङ्कूटे ४. **ग-घ**—वियुक्त पाञ्च ५. **क-ख**—कर्म सत्कर्मिणाम् ६. (पाठान्तरम्) तदादिकर्म

कालात् प्राप्ताधिकारश्च कृत्वा व्याप्तां समासतः। यथोचितमनुष्ठानं त्रयोदशवि (धं) शुभम् ॥
तत्तेन कृतकृत्यं स्यात्तदर्धेन तु चापरम्। तृतीयमब्जसंभूत सम्यज्ज्ञानेन युज्यते ॥ ४६ ॥
ज्ञा(न)तमात्रं हि वै कालादिन्द्रियव्यक्तिलक्ष(णं)णात्। स्वयं चीर्णव्रतं प्राग्वत्तत्क्षेत्रे बुद्धिपूर्वकम् ॥
तीव्रभावेन वै पश्चाद्देहत्यागं व्रतादिना। कुर्यात् क्षेत्राधिपस्याग्रे तद्वत्तं गतकल्मषम् ॥ ४८ ॥
पृथग्देहारणीं कृत्वा ज्ञानं यद्(धर्म)मलं शुभम्। [1]स तस्योपदिशत्याज्यं[1] तत्रै(वे)व कमलेक्षण ॥
यत्प्राप्य परमं धाम वासुदेवाख्यमेव च। योगिनां तीर्थपुण्यानि ब्रह्मन्नापतितानि च ॥ ५० ॥
सदाप्याधारभावेन ह्यङ्गभावं व्रजन्ति वै। योगोत्कृष्टप्रकृष्टं च प्राप्यन्ति ज्ञानिनोऽपि ये ॥ ५१ ॥
शश्वज्ज्ञानसमाकीर्णं निर्विघ्नेनाप्नुवन्ति च। एवमाया(य)तनात् ब्रह्मन्नुपायं भविनां परम् ॥५२॥
यतोऽस्ति च अतः हेतोस्सेवनीयं सदैव हि। अभिजातस्य बीजस्य यथामलमरीचयः ॥ ५३ ॥
प्ररोहजननीं शक्तिं [2]सन्तापात् ध्वंसयन्ति च। विना स्वरूपहानेर्वै सांप्रतं ह्येवमेव हि ॥
स्वप्रभावेन वै सम्यक् स्वशक्तिकिरणैश्शुभैः। प्रक्षीणकल्मषं कृत्वा क्षेत्रे वै क्षेत्रवासिनाम् ॥५५॥
कुर्वन्त्यनुग्रहं पश्चात् क्षीणपापस्य तस्य च। मृदम्बुहुतभुग्वातपातैर्गगनलक्षणैः ॥ ५६ ॥
प्रसिद्धयन्त्रितं ह्यत्र असिद्धं तद्वयं शृणु। यदन्नाम्बुपरित्यागाद्वातं [3]तद्वातसंज्ञितम् ॥ ५७ ॥
सर्वद्वारोपरोधेन यत्(त्व)न्नाभासमुत्तमम्। कालं वा देहपातीयं सम्यज्ज्ञात्वात्र पौष्कर ॥ ५८ ॥
कार्यमासादने य(त्नं)त्नात्तत्र भक्त्या शुभैषिणा। यदि न प्रप्नुयाच्चैव जन्माभ्यासादवाप्यते ॥
विलयं यान्ति वै येन त्राहि जन्मनि जन्मनि। कृतबुद्धेर्मनुष्यस्य पापेनातिबलीयसा ॥ ६० ॥
न सञ्जाता च तत्प्राप्तिर्यद्यप्यब्जसमुद्भव। न शासनस्य घोरस्य आन्तकस्य स भाजनम् ॥६१॥
मान्यो यमभटानां च यज्ञयाजी यथा पुमान्। आस्तां हि तावन्मनुजा नियमाद्यैरलङ्कृताः ॥
भावभक्ति[4]विशेषाढ्याः प्राणिनोऽन्येपि तत्र ये। प्राक्संस्कारवशाज्जातास्तेऽपि जात्यन्तरं पुनः ॥
[5]नाप्नुवन्ति मृता विप्र सद्विवेकविवर्जिताः। मम भक्तायतानां[6] च इत्येषां यस्तु विन्दति ॥
नृणां मध्ये स धन्यो वै दुष्कृतैर्नातिबाध्यते। कर्मणां वै ह्यभुक्तानां न नाशोस्ति च यद्यपि ॥
तानवं क्षेत्रमाहात्म्यप्रभावात्सम्प्रयान्ति ते। जन्माभ्यासवशेनैव नूनं कर्मक्षयो भवेत् ॥ ६६ ॥
सामर्थ्यात् क्षेत्रनाथानां सक्षेत्राणां महामते। क्षेत्रेष्वेवंप्रकारेषु दानं यच्छन्ति येऽर्थिनाम् ॥६७॥
विभोराराधनार्थं तु भक्त्या कुर्वन्ति वा तपः। साधयन्ति च मन्त्रेशं तर्पयन्ति तिलादिभिः ॥

१. **क-ख**—सनस्योपद्विजत्वाज्यम् **ग-घ**—सनस्योपदिशन्याज्यम् २. **क-ख**—सन्तापं ध्वस ३. **ग-घ**—तद्वाद ४. **क-ग**—विशेषाभ्याम् ५. **ग-घ**—प्राप्नुवन्ति

ये यजन्ति मत्रैर्देवान् लभन्ते तेऽखिलं फलम्। द्वादशाक्षरपूर्वैस्तु प्रसिद्धैः कमलोद्भव ॥६९॥
मन्त्रैर्जितन्तामन्त्रान्तैः प्राप्तैर्वाथ गुरोर्मुखात्। स्वकेन मन्त्रमुख्येन विधिवत्परमेश्वरम्॥ ७० ॥
आराध्यायतनस्थं च यत्किञ्चिदधिकारिणाम्। द्विजेन्द्रद्विज[1]मुख्यानां दीयते पाञ्चकालिनाम्॥
तदक्षयं परिज्ञेयं भवभोगाभिलाषिणाम्। दानान्निवृत्तरागाणां तत्पुनर्मोक्षसिद्धये॥ ७२ ॥
ग्राममण्डलदेशान्तर्मदायतनवासिनाम्। दत्तमात्मसमै.[?] [2]भूत्यै बहुभिर्नीरुजोऽश्नुते ॥ ७३ ॥
संपूर्णासु स्वशक्त्या च नित्यं जन्मनि जन्मनि। अनन्तभविकं विद्धि तद्दिव्यायतनात्पुनः॥७४॥
विज्ञेयं लक्षभविकं तत्सिद्धायतनात्तु वै। सहस्रभविकं विप्र विप्रप्रवरकल्पिनात्॥ ७५ ॥
दशाङ्कभविकं तद्वै कृतं यत्क्षत्रियेन तु। तदर्धभविकं विद्धि सद्वैश्यपरिकल्पितात्॥ ७६ ॥
सच्छूद्रकल्पिते विप्र दत्तमायतने तु वै। द्विषट्कभवनं तद्वै दानं ज्ञेयं द्विजोत्तम॥ ७७ ॥
अनन्यशरणेभ्यो वै वर्णस्य परिकल्पिते। द्विजेन्द्रायतने दत्तं फलं तत्पुनरेव हि[?]॥ ७८ ॥
व्यामिश्रयाजिभिर्वर्णैर्निर्मितायतनास्तु ये। पूर्वोक्तेभ्यः प्रयच्छन्ति तदर्धभविकं क्रमात्॥७९॥
फलकामफलेप्सूनां निष्कामाना हि पौष्कर। सर्वायतनगो देवस्सर्वमूर्तिष्ववस्थितः॥ ८० ॥
मूर्त्यन्तरगतश्चापि प्रादुर्भावगतस्त्वपि। प्रादुर्भावान्त(रा)याऽवृत्ति ददाति परमं पदम्॥ ८१ ॥
आचर्तव्यमतस्तस्मायत्नेन [3]महता द्विज। मन्त्राराधनपूर्वेण [4]कर्मणा चि लक्षयम्॥ ८२ ॥
तस्माद्विमुक्तरागाणां नृणामच्युतयाजिनाम्। व्यज्यते स्वात्मवृत्तिस्थं वासुदेवमजं विभुम्॥८३॥
तदधिष्ठितचित्तस्तु यत्र यत्र यजेद्बहिः। तत्र तत्र तदा तेषां व्यज्यते ब्रह्म शाश्वतम्॥ ८४ ॥

**पौष्कर उवाच—**

देवायतनजातानां नृणामशुभकारिणम्। मृतानां तत्र वाह्य(न्य)त्र ज्ञातुमिच्छाम्यहं गतिम्॥८५॥

**श्रीभगवानुवाच—**

केन चित् प्राक्तनेनैव कर्मणाऽविमलेन च। आचरन्त्यब्जसंभूत मनेवै दुष्कृतं पुनः॥ ८६ ॥
ज्ञात्वापि क्षेत्रमाहात्म्यं विवशात्तु बलात्तु वै। तं म्रियन्तं च तत्रास्थे जन्माभ्यासवशेन तु॥
क्षेत्रे च पापतस्तेषां संक्षिपत्यन्तकस्य च। शश्वद्दुष्कृतशान्त्यर्थं उपायैर्नातिशासनै. (श्वतै.)॥८८॥
त्वमेव तेषां कुरु(पे) पु भुक्तशेषं हि कल्मषम्। शमयत्यचिरादेव आचरन्ति यथाशुभम्॥८९॥
भूयः प्राप्तेन देहे(भोगे)न असर्दाये परिग्रहे। स चाज्ञां शिरसा तां वै कृत्वा चैव महामते॥
करुणानुगतेनैव संशोधयति चेतसा। एवं विगतदोषास्ते यान्ति कालान्तरेण तु॥ ९१ ॥

---

१. क-ख—मुख्यानां . यतेपाञ्चिरकालिनाम् २. (पाठान्तरम्)भूतयैः पशुभिः ३ ग-घ—महताञ्जज ४. ग-घ—चन्मलक्षणम्

[1]सा च साकल्यात् सत्संपर्काद्विशेषतः। प्रक्षीणकल्मषा नूनं पुनरायान्ति वैदिकीम् ॥
समाचरन्ति तद्भूस्तु सायुज्यं यान्ति येन वै।

**पौष्कर उवाच—**

तदुत्पन्ना विपद्यन्ति पापिष्ठा ह्यत्र वै यदि। कागतिर्भवने तेषां नराणामतिपापिनाम् ॥ ९३ ॥

**श्रीभगवानुवाच—**

शोधयत्यन्तकस्तेषां दुष्कृतिं नातिशासनैः। गतदोषास्समायान्ति मानुष्यं हि तदा पुनः ॥९४॥
मतिर्देहविपर्यर्था तीव्रेण मनसाऽब्जज। प्रयाति पूर्ववच्छुद्धिं यथा दुष्कृतिनो नराः ॥ ९५ ॥
तत्र जाताश्च निर्दोषा येऽन्यत्र विलयं गताः। प्रयान्ति साम्प्रतं ते वै विमानैरन्तकास्पदम् ॥
संपूजयत्यसौ तेषां ब्रूयाद्बद्धाञ्जलिस्ततः। स्थानमाय[2]तन . भगवन्तं व्रजन्तु वै ९७ ॥
सालोक्यसंज्ञं विमलं भवबन्धक्षयङ्करम्। मदीयदर्शितेनैव मार्गेणानेन साधुना ॥ ९८ ॥
भवतां संप्रयातानां शुभं तत्र भविष्यति। तद्वासिनां यथान्येषां भगवत्तत्त्ववेदिनाम् ॥ ९९ ॥
एवमब्जसमुद्भूत फलमायतनाद्भवेत्। नराणां निर्विवेकानां [3]तदन्येषां तु किं पुनः ॥ १०० ॥
क्षितिः पादौ च खं नाभिर्यौश्शिरश्शशिभास्करौ। नेत्रे लोका महत्पूर्वा विभोर्यस्य शिरोरुहाः ॥
दिशश्श्रोत्रे भुजाश्चैव विदिशस्सर्व एव हि। आधारशक्तिपर्यन्तं यस्य पातालसन्ततिः ॥१०२॥
स्थितिः पादतलोद्देशे नित्याकृतिधरस्य च। विभोर्वै राजमानस्य सर्वगस्य महात्मनः ॥ १०३ ॥
सर्वं पदात्मकं यस्माद्भक्तानामत एव हि। नह्यनायतनं देशमास्तिकानां द्विजास्ति वै ॥ १०४ ॥
चराचरमिदं सर्वं नास्तिकानां तमोमयम्। सुप्रसिद्धं तु वै स्थानमास्तां तावन्महामते ॥ १०५ ॥
भक्त्यावस्थापिता यत्र स्थाने विप्रवरादिकैः। अचला वा चला रम्या चित्रमृत्काष्ठशैलजा ॥१०६॥
हेमादिधातुलोहोत्था या काचित्प्रतिमा हरेः। नृणां तत्र विपन्नानां तन्माहात्म्यवशात्तु वै ॥
स्थितिस्त्रिविष्टपे तेषामनन्त्युत्कृष्टलक्षणा। अन्ते परिच्युते जन्म येषामायतनेषु च ॥ १०८ ॥
यथाक्रमं (कर्म) महाबुद्धे परिज्ञेयं हि मत्परैः। साक्षाद्वृत्तिर्द्विजेन्द्रीया क्षेत्रक्षेत्रेषु जायते ॥
क्षत्रियायतनाद्वि(द्वृ)द्धि जन्मामरविनिर्मिते। सद्वैश्यकल्पितोद्देशे जन्म पुष्करसंभव ॥ ११० ॥
[4]मुनिभिर्निर्मितस्थाने अच्युतायतनेऽब्जज। सा जन्म मौद्गलीयाच्च [5]प्राप्नोत्याराधनान्नरः ॥१११॥
कल्पितं मन्त्रसिद्धेन नगणायतनं महत्। भोगोत्कर्षं हि वै नृणां तथा कालान्तरेण च ॥११२॥

---

१. **ग-घ**—सामीर्थानां च सालोक्यात् (पा) सन्तो ? धंताम् २. **ग-घ**—यतनसा(ख) से भगवन्ता सव्रजन्तु वै ३. **क-ख**—कानां न ह्यषां तु ४. **ग-घ**—मुनीन्द्रनिर्मितं ५. (पाठा) प्राप्तो नारायणान्नरः

मन्त्रज्ञैः कल्पितान्तं च यावदायतनं द्विज। शश्वत्पापक्षयं चान्यत् क्षत्रियं तदनन्तरम् ॥११३॥
क्रमेण सवितानं च नातिदीर्घेण पौष्कर। कालान्तरेण वै तेषां दोषाणां तु परिक्षयम् ॥११४॥
अवतीर्य क्षितिं पश्चाद् भुक्तशेषं हि पद्मज। क्षपयत्याशु तत्रैव नियमैः पूर्वदुष्कृतम् ॥ ११५ ॥
प्राग्वत् स्मृताः क्रमेणैव ते यान्ति परमं पदम्। पाता ये विहिताश्चात्र देहत्यागविधौ शुभे ॥
विवेकिनां न विहिताः प्रायश्चित्तस्थमेव हि। आजन्म सञ्चितानां च दुष्कृतानां क्षयाय वै ॥
लभन्ते तैस्तु निर्दग्धैर्देहान्ते पदमाच्युतम्। तस्मात् क्षेत्रं समासाद्य प्रायश्चित्तं समाचरेत् ॥
स्वयं पापफलं ज्ञात्वा सत्त्वमाश्रित्य शाश्वतम। विरुद्धचित्तबुद्धिस्तु येन याति शुभां स्थितिम् ॥
[1]बलवान्यदपि क्षेत्रं नृणां शुभगतिप्रदम्। तद्विवेकं द्वितीयं वै स्वसामर्थ्यं तु नोज्झति ॥१२०॥
मनोबुद्धीन्द्रियगणं करणग्रामसंयुतम्। आमूलाद्यस्य संशुद्धमन्ते वा तपसा महत् ॥ १२१ ॥
कुर्वन्त्यनुग्रहं तस्य शश्वदायतनादयः। जीवभावस्थिता जन्तुः परलोकं गतस्तु वा ॥ १२२ ॥
भूगुणा अपि चाद्यास्सर्वत्र विधिगौरवात्। यथा महानुभावानां पुरुषाणां तु याचका ॥१२३॥
सन्दृष्टमन्नपानार्थं गुणज्ञमगुणं तु वै। त्यजन्त्यगुणवांश्चैव सगुणं वापि चान्यथा ॥ १२४ ॥
ज्ञात्वैवं क्षेत्रमाहात्म्यं तपोध्यानजपादिकैः। कर्मवाञ्छितसन्तोषादुपशोभां नयेत्पराम् ॥ १२५ ॥

## [2]श्रीभगवानुवाच—

चतुर्भिर्वासुदेवाद्यैर्मूर्तिभिः प्रागुदीरितैः। केशवाद्यैर्द्वादशभिर्मत्स्याद्यैर्दशभिस्ततः ॥ १२६ ॥
क्ष्मान्तं षड्विंशसङ्ख्यं यत्तत्त्ववृन्दं पुरोदितम्। व्यासमीश्वरपूर्वं वै द्वादशानां सह स्थितम् ॥
[3]सुस्थूलेनानुरूपेण दशकं तेन चावृतम्। तत्त्वं तत्त्वं समासाद्य वासुदेवादिना सह ॥ १२८ ॥

---

१ बलवद्यदपि इति स्यात्

२. अत्र ग्रन्थपातः प्रतीयते—इतः प्राक् "तदुत्पन्ना विपद्यन्ते पापिष्ठा ह्यत्र वै यदि। का गतिर्भवते तेषां" (श्लो—९३) इत्यस्य पौष्कर प्रश्नस्य उत्तरत्वेन "शोधयत्यन्तकस्तेषां" (श्लो—९४) "(यत्र)—या काचित्प्रतिमा हरेः। नृणां तत्र विपन्नानां तन्माहात्म्यवशात्तु वै। स्थितिस्त्रिविष्टपे तेषां" (श्लो. १०६—१०९) इत्यादिना अन्तकेन शोधितपापानां सद्गतिमभिधाय तदनुबन्धतया प्रस्तुतं क्षेत्रमाहात्म्यं भगवता "उपशोभां नयेत् पराम्" इत्यन्तेन ग्रन्थेन समाहितं ततः अकाण्डताण्डवेन "श्रीभगवानुवाच" इति प्रतीकमुल्लिख्य "चतुर्भिर्वासुदेवाद्यैः" इत्युपक्रम्य विषयान्तरमुपक्रान्तः अस्य चोदकं पौष्कर प्रश्नवाक्यं न दृश्यते, चोदकवाक्यं विना प्रक्रस्यमानार्थस्य सङ्गतिर्न सङ्घटिता भवति. तस्मात् चोदकं पौष्कर प्रश्नवाक्यं गलितमिति निश्चप्रचम्

३. क—ख—स...नातु

स्थितिरेवं हि सर्वेषां देवानां भवशान्तये। गुणषट्कसमोपेतं वैश्वरूप्यं महामते ॥ १२९ ॥
स्वव्यापारवशेनैव व्यवस्यन्ति सदैव हि। अनुग्रहवशेनैव विभोरिच्छावशेन तु ॥ १३० ॥
सर्वैः क्षितितलं [1]व्याप्तं नानाकारधरैस्सदा। एकैका वैभवे मूर्तिरनन्तेनात्मतां यथा ॥ १३१ ॥
यान्ति नानात्मनामेवं वाहनायुधलाञ्छनैः। अतश्चैलोकनाथीय इच्छातः प्राभवेन तु ॥ १३२ ॥
स्थितिर्नानाप्रकारा वै सर्वेषां च स्वमूर्तिषु। नियतस्सायुधानां च लाञ्छनानां च यद्यपि ॥
तथापि सर्वमूर्तीनां सर्वे साधारणास्स्मृताः। यद्यप्येवं हि वै विप्र तत्रापि विनिबोध मे ॥१३४॥
न चान्यश्रान्तिशान्त्यर्थं विशेषं लाञ्छनैर्ध्वजैः। प्रादुर्भावास्तु विज्ञेयास्स्वव्यापारवशात्तु वै ॥
प्रादुर्भावान्तरास्त[2]द्वदंशस्य तु वशादपि। [3]आद्यका रक्षकाधाराः[3] केचित्तु ध्वजलाञ्छनैः ॥
तुल्यमेवं त्रयाणां तु प्रादुर्भावगणं परम्। अपरे केशवादीनां तुल्यमुद्वहति(न्ति)द्विज ॥ १३७ ॥
आकारैर्लाञ्छनैस्सार्धं तद्विशेषेण वै सह ॥

**पौष्कर उवाच—**

श्रोतुमिच्छामि भगवन् सर्वेषां लाञ्छनादिकम्। विशेषो यस्त्वयोद्दिष्टो भविनां भवशान्तये ॥

**श्रीभगवानुवाच —**

शृणु लाञ्छनविन्यासमादिदेवादितः क्रमात्। मत्तो निगदतस्सम्यग्यथावदमलेक्षण ॥ १३९ ॥
आद्यः पाणिश्चतुर्णां वै दक्षिणे त्वभयप्रदः। वरप्रदो वा भक्तानां ध्यातव्यममलेक्षण ॥ १४० ॥
वामं शङ्खोद्वहं विद्धि नानास्थित्या चतुर्ष्वपि। आद्यस्य पश्चिमाभ्यां तु वामदक्षिणयोः पुनः ॥
कालचक्रं गदां गुर्वीमच्युतस्यावधारय। लाङ्गलं मुसलोपेतं वामहस्ते सदक्षिणे ॥ १४२ ॥
पश्चिमे भुजयुग्मेऽस्य संहते च धनुश्शरे। खेटकं नन्दकोपेतमनिरुद्धस्य पौष्कर ॥ १४३ ॥
द्वाभ्यां पश्चिमपाणिभ्यां मध्यहस्तादितस्तु वै। इत्येवं हि चतुर्मूर्तेर्गतन्मूर्त्यन्तरेषु च ॥ १४४ ॥
शङ्खचक्रगदापद्मलाञ्छनानां स्थितिं शृणु। आदिदेवीयदेवानां त्रयाणां तावदुच्यते ॥ १४५ ॥
वामे पश्चिमगे चक्रं विद्धि शङ्खं तु दक्षिणे। दक्षिणे मुख्यहस्तेऽब्जं गदा तदपरे तु वै ॥
एवं हि भगवान् धत्ते केशवः [4]कमलादिकम्। सव्यापसव्यहस्ताभ्यां मुख्याभ्यां तु गदाम्बुजे ॥
वामादौ शङ्खचक्रौ तु स धत्ते पश्चिमद्वये। नारायणाख्यो भगवान् माधवाख्यो निबोध तु ॥
मुख्ये सव्यापसव्ये तु शङ्खं धत्ते गदां प्रभुः। पश्चिमे पद्मचक्रे तु सर्वपूर्वे भुजद्वये ॥१४९॥

१. क-ख—प्राप्तम् २. क-ख—स्तद्वदगस्य तु ३. क-ख—आद्याकाराः क्ष . केचित् ४. क-ख—कमलादय.

मूर्तित्रयमिदं दिव्यं कुन्देन्दुस्फटिकप्रभम्। भगवद्वासुदेवेन महास्य चतुरात्मना ॥ १५० ॥
त्रितयस्य परिज्ञेया मोक्षदा भवभोगदा। कामपालीयदेवानां त्रयाणां कमलोद्भव ॥ १५१ ॥
पद्मं मुख्यकरे वामे गदान्यस्मिन् हि दक्षिणे। विभोर्गोविन्दसंज्ञस्य इत्येवं समुदाहृतम् ॥
विन्यासं लाञ्छनानां च विष्णोरथ निबोधतु। वामदक्षिणपाणिभ्यामग्रतश्शङ्खपङ्कजे ॥ १५३ ॥
एवं पश्चिमहस्ताभ्यां चक्रं कौमोदकीद्वयम्। मधुसूदनसंज्ञस्य संनिवेशमतश्शृणु ॥ १५४ ॥
पद्मं मुख्य[1]करे वामे पाञ्चजन्यं तु दक्षिणे। [2]गदा पश्चिमतस्सव्ये चक्रं दक्षिणतः परे ॥१५५॥
त्रयमेवं हि देवानां सह वै ज्ञानमूर्तिनाम्। चातुरात्म्याद् द्वितीयां तु पद्मरागोज्ज्वलद्युतिम् ॥
अथ प्रद्युम्नदेवानां त्रयाणां क्रम उच्यते। वर्णभेदेन सह वै लाञ्छनग्रहणं शृणु ॥ १५७ ॥
अग्रतो वामपाणौ च चक्रमन्यकरे गदा। वामे तु पश्चिमे शङ्खं पद्मं तदपरे स्मृतम् ॥१५८॥
विभोस्त्रिविक्रमाख्यस्य वामनस्यावधारय। गदाऽग्रवामहस्ते तु चक्रं मुख्ये तु दक्षिणे ॥ १५९ ॥
वामे तु पश्चिमे पद्मं शङ्खं तद्दक्षिणे करे। श्रीधरस्य गदा वामे मुख्यहस्ते प्रकीर्तिता ॥१६०॥
चक्रमग्रेऽपसव्याख्ये शङ्खं वामे तु पश्चिमे। तदन्यस्मिन् परे पद्मं चक्रं कोटिसमप्रभम् ॥
मूर्तित्रितयमेतद्वै सह च स्वामिना द्विज। हेमधामप्रभं ज्ञेयं चातुरात्म्यतया स्थितम् ॥ १६२ ॥
अतोऽनिरुद्धमूर्तीनां त्रितयं चावधारय। लाञ्छनोद्वहनं चैव वर्णभेदेन वै सह ॥ १६३ ॥
पद्ममग्रकरे वामे तद्द्वितीये तु हेतिराट्। सव्यापसव्यहस्ताभ्यां पश्चिमाभ्यां क्रमेण तु ॥
[3]पद्मकोशं गदां गुर्वीं पद्मनाभे निबोधतु। अग्रगे चक्रराड्वामे पद्मं मुख्यकरे परे ॥ १६५ ॥
वामे गदा पश्चिमगे तदन्यस्मिंश्च शङ्खराट्। [4]धत्ते दामोदरो वामे गदां चाग्रस्थितं शुभाम् ॥
अपसव्येऽग्रगे शङ्खं वामे चक्रं तु पश्चिमे। पश्चिमे त्वपसव्ये तु कमलं सूर्यवर्चसम् ॥१६७॥
अतसीपुष्पसङ्काशमिदं मूर्तिगणं स्मृतम्। महानिरुद्धदेवेन अस्यापि चतुरात्मता ॥ १६८ ॥
विश्वेश्वरस्य वै विष्णोः स्थितयेऽस्मिञ्जगत्त्रये। अमूर्तानां च मूर्तानामायुधानां स्थितिं शृणु ॥
पाणिद्वयेन चाक्रान्तौ पार्श्वद्वये पृथक् स्थितौ। तन्मुखं स्वं च निरीक्षन्तौ गदाचक्रौ महामते ॥
शङ्खपाणिं च शङ्खेशं युग्ममन्येन हेतिना। द्व्यादिकं [5]करजालं यत् तन्नानाभिः समन्वितम् ॥
पाशाङ्कुशाधिपद्माद्यैर्युक्तं चान्यैर्वरायुधैः। मूर्त्यन्तराणां मूर्तीनां षोडशानामतश्शृणु ॥ १७२ ॥
मुख्यहस्ते चतुर्णां तु पाञ्चजन्यं निराकृतिम्। [6]सर्वदेहं हि सञ्चिन्त्य गदाचक्रे द्विजोत्तम ॥
हस्तद्वयेन चाक्रान्तौ साकारं च विभोर्मुखम्। [7]पिबन्तमिव मृत्पात्रे सर्तव्यं तत्परायणैः ॥

1. क-ख—करे क्षिणे 2. क-ख— .. सव्ये 3. क-ख—शब्दकोशम् 4. क-ख—यत्ने दामोदरे 5. क-ख—करजाल य समन्वितम् 6. ग-घ—सर्वदेवं हि 7. अत्र सम्प्रति पद्मकोशान्तरसंवादः आवश्यक.

अमूर्तमन्त्रसंस्थानमिदानीमवधारय। तमिच्छया च सर्तव्यं शोभालीलावशादपि ॥ १७५ ॥
नानादेशजनस्थित्या आसृष्टेस्संस्थितं यथा। आमूर्तेस्सहमूर्तानां सन्धारणमथोच्यते ॥ १७६ ॥
पश्चिमाभ्यां भुजाभ्यां तु यस्य सन्निहितं द्वयम्। मूर्धदेशान् समाक्रान्तं निरीक्षन्तं विभोर्मुखम् ॥
आज्ञाप्रतीक्षकं चैव हस्तं तं व्यञ्जनादिकम्। कक्षान्तर्गतहस्तं वा अथ विस्मयमुद्रया ॥१७८॥
युक्तं सम्पुटसंज्ञाख्यं मुद्रया वाब्जसंभव। चतुर्वदनपादा वै 'धानारूपं' तु संस्थितिः ॥१७९॥
सर्वेषां निहिता विप्र प्रयोजनवशेन तु। साधकेच्छावशात्रैव तथाकालवशात्तु वै ॥ १८० ॥
प्रार्थिताश्चोपविष्टास्तु भोगाभ्यागतसञ्चयम्। चक्राम्बुजादिपीठस्था हि धामत्रयान्वितम् ॥ १८१ ॥
द्वादशाक्षरपूर्वैस्तु वाचकैः प्रागुदीरितैः। नानान्यैर्द्विजमन्त्रैर्वा षड्भिः षाड्गुण्यलक्षणैः ॥१८२॥
योऽर्चयेद्भक्तिपूर्वं तु स्वशक्त्या विभवेन वा। स मुक्तदोषः अभ्येति तत्पदमनामयम् ॥१८३॥
व्यक्तं क्षेत्रवरे यस्मिन् स्वयं यातोऽवतारितम्। सिद्धैर्विशेषनाम्ना च तत्र सिध्यन्ति साधकाः ॥
स्वमन्त्रजापिनो भक्ता नियतशुद्धाः क्रियापराः। अथ मूर्त्यन्तराणां च देवानां कमलोद्भव ॥१८५॥
ध्वजाद्यं यत्र चक्रेणं तन्मे निगदतश्शृणु। त्र्यं वदामि देवीयं केशवाद्यं प्रकीर्तितम् ॥१८६॥
भूषितं प्रपतनाकेन सहदण्डकेतुना। महता तालवृक्षेण लाङ्गलीयेन पौष्कर ॥ १८७ ॥
गोविन्दाद्य त्रयं यद्वै विजयमुपशोभितम्। ध्वजेन मकराख्येन प्रद्युम्नेन च द्विज ॥ १८८ ॥
त्रिविक्रमाद्यं विनय नित्यमेव विभूषितम्। कुरङ्गलाञ्छनेनैव अनिरुद्धेन लाञ्छितम् ॥ १८९ ॥
त्रय दामोदरादीनं च दर्पकेशादिकं हि यत्। विश्वेश्वरस्य च विभोरिच्छारूपधरस्य च ॥१९०॥
विहितास्सर्व एवैते स्वैश्वर्येण वै सह। वराहनरसिंहाद्यैर्वैस्त्रिभुवनेश्वरैः ॥ १९१ ॥
प्रादुर्भावान्तरोपेतैः सर्वगुणोज्ज्वलैः। यथाचिन्तितध्यानुरागस्य केशवादि(र)मतोऽब्जज ॥ १९२ ॥
हंसमत्स्यहयैः कूर्मसिंहसूकरशंखकैः। यथोक्तलक्षणैर्ब्रह्मन् शक्तितः प्रतिपत्तिजैः ॥ १९३ ॥
वृत्तित्वेन जगत्यस्मिन् अर्चनाध्यानकर्मणि। यतीनां मुक्तसङ्गानां सिद्धानां क्षेत्रवासिनाम् ॥
एवं यथोक्तवदनैर्नृशरीरैर्महाभुजैः। नृवराहनृसिंहाख्यैर्वाजिवदनाभिधैः ॥ १९५ ॥
अनुग्रहधिया व्याप्तं भूभागमलक्षणम्। तथावामनरूपेण स्वर्वमूर्तिधरेण च ॥ १९६ ॥
स्नातकब्रह्मचारी च लाञ्छनैर्भूषितेन च। तस्य रूपान्तरेणैव सुखानां सुखदेन च ॥ १९७ ॥
त्रिविक्रमाख्यसञ्ज्ञेन त्रैलोक्याक्रान्तमूर्तिना। रामसंज्ञेन विभुना ज्वलत्परशुपाणिना ॥ १९८ ॥
भारावतरणं येन पृथिव्यां बहुशः कृतम्। एतैरन्यैर्द्विजश्रेष्ठ वक्ष्यमाणसमन्वितैः ॥ १९९ ॥
सबाह्याभ्यन्तरं व्याप्त ब्रह्माण्डनिचयं हि यत्। प्रादुर्भावान्तरैस्साधं प्रादुर्भावैर्द्विजाखिलैः ॥२००॥

१. ध्यानारूढमिति, साधु २. क-ख— .. तन्मे

लोकेश्वरश्शान्ततनुर्बौद्धं यस्यापरं विदुः। निर्य(य)न्ता बुद्धिधर्माणां हिंसादोषस्य दूषकः॥२२६॥
अग्नीषोमात्मसंज्ञस्य देवस्य परमात्मनः। सूर्याचन्द्रमसौ विद्धि साकारौ लोचनेश्वरौ॥ २२७ ॥
तद्वक्त्रं दैवतं चान्यद्धुतभुक् परमेश्वरः। मन्त्रपूतं सदादाय हुतमाज्यपुरस्सरम्॥ २२८ ॥
ब्रह्माण्डभुवनं सर्वं सन्तर्पयति सर्वदा। विश्वेशप्राणशक्तेर्वै वाय्वाख्यमधिदैवतम्॥ २२९ ॥
जगत्सन्धारकं चैव नानास्कन्धात्मना तु वै। एते भगवदाकारास्तिष्ठन्त्यस्मिञ्जगत्त्रये॥ २३० ॥
नानावेशस्वरूपैश्च नानासंस्थानलक्षणैः। नानाकार्यवशेनैव नानाकारवशेन तु॥ २३१ ॥
एवं कृतकशब्दार्थैर्भगवांस्तल्लक्षणेन च। आराध्याकृतितुल्येन तज्जपध्यानसेविनाम्॥ २३२ ॥
यथाभिमतरूपेण गुणषट्कान्वितेन च। ज्ञस्वभावेन नित्येन स्वरूपेणामलात्मना॥ २३३ ॥
विश्वमापूरितं सर्वं सर्वानुग्रहकाम्यया। सर्वत्र यास्ति सर्वेषां यथोक्ताना [1]महामते॥ २३४ ॥
वासुदेवादिमूर्तीनां वैश्वरूप्यमनश्वरम्। योगैश्वर्यप्रभावेन अच्युतेच्छावशादपि॥ २३५ ॥
ज्ञात्वैवमब्जसंभूत न कार्यो हृदि विस्मयः। [2]स्फुटे रूपेण नानानामान्वितेन वै॥ २३६ ॥
दृष्टो भगवदाकारे स्वयं व्यक्तादिकेन च। क्षितिमध्येऽवतीर्णे च पूर्वोद्दिष्टेन वर्त्मना॥ २३७ ॥
तीर्थोद्देशेषु सर्वेषु क्षेत्रेषु विविधेषु च। गिरिशृङ्गेषु रम्येषु तन्मध्येषु गुहासु च॥ २३८ ॥
वनेषूपवनाद्येषु पातालतलभूमिषु। लोकान्तरेषूर्ध्वगेषु देवैर्गन्धर्वसत्तमैः॥ २३९ ॥
नास्तिका भिन्नमर्यादा मोहमायामलान्विताः। [3]विकल्पदोषैराविष्टा भ्रान्तबुद्धिज(डी)कृता ॥
चरणाम्बुजनालं तु परामृश्यन्ति येऽधमाः। मज्जन्ति नरके घोरे पितृभिस्सहिताश्चिरात्॥
सदायतनदेवानां मूलं ये चान्विषन्ति वै। मूर्धच्छेदो भवेत्तेषां भावोपहतचेतसाम्॥ २४२ ॥
धृतिशक्तिमयं मूलं देवानामपि दुर्दृशम्। तत्कथं लक्ष्यते मूढैर्यन्मूर्तद्रव्यतां गतम्॥ २४३ ॥
मानमेयैस्स्वतन्त्रं च यथा तत्परम. तम। [4]यैरेतन्मध्यषट्कं तु क्षेत्रगाद्यिकजैस्स्थितैः॥२४४॥
गुणैर्दिव्यगुणोपेतैरूर्जितैः प्राकृतैर्गुणैः। स्वयमेवं जगन्नाथैः स्ववतीर्य च या स्थिति॥ २४५ ॥
गृहीता सुस्थिरा चैव सुसिद्धैश्चापि कल्पिता। देवैस्सर्षिदिभागाद्यैरपदान्तेन धारित च॥
नित्यसन्निधिमाहात्म्यात् कालं कल्पक्षयावधि। उत्तरोत्तरता चैव जगत्यस्मिन् हि वर्तते॥
दुष्टोपशान्तिदा शक्त्या सिद्धिदा या च वै सह। पौरुषायतनानां च सिद्धाख्यानां महामते॥
स्वयमवावतीर्णानां तत्त्वेशानामपि क्षितौ। अतस्संसारभीतैश्च भक्तैस्सर्वेश्वरस्य च॥ २४९ ॥
गम्यैश्च तेऽर्चनीयाश्च कालं वै जीवितावधि। नित्यं तूपासितव्याश्च तत्रस्थैराश्रमान्वितैः॥

१. क-ख—महामुने २. स्फुटं स्वभ्रनिरूपेण ३. क-ख—..राविष्टा ४. क-ख—यैरोधमध्व

प्राप्ताधिकारैर्दीक्षान्तस्स[2] मयज्ञादिकैर्नरैः। यदैव कृतदीक्षाणामधिकारसमन्वितम् ॥ २५१ ॥
अच्युताराधनार्थं तु निश्रेयसपदाप्तये। तदैव प्रतिषिद्धं च देवतान्तरपूजनम् ॥ २५२ ॥
परमेतद्धि समयमप्रमेयरतात्मनाम्। सा प्रसिद्धा तु वै व्यक्तादाकारात् परमेश्वरात् ॥ २५३ ॥
व्यूहाद्वा विभवाख्याच्च ऋते नान्यं पुरोदितात्। समर्चनीयमाकारं न बुधैर्विबुधागतम् ॥२५४॥
क्वचिद्भगवदंशैस्तु प्रादुर्भावैरधिष्ठिताः। दृश्यन्ते पार्थिवा लिङ्गाश्श्रूयन्ते च द्विजोत्तम ॥२५५॥
यद्यप्येवं महाबुद्धे वैष्णवानां तथापि हि। विरुद्धस्त्वादनर्च्यास्ते नाराधिर्वैष्णवी हि सा ॥
[1]स्वयंभुवापि ये केचित् सुरसिद्धावतारिताः। स्कन्दरुद्रमहेन्द्राद्या प्रतिषिद्धास्तु तेऽर्चने ॥
अन्तर्यामी च सर्वेषां देवानां पुरुषोत्तमः। यद्यप्यव्यक्तरूपं च व्यक्तौ सिद्धिस्वकास्वका[2] ॥
भावभक्तिवशाद्विप्र स्वकि (की) याधिगपादपि। ज्ञात्वैवं भक्तिसांकर्यं न कुर्यादेवमेव हि ॥
वर्जनीयं प्रयत्नेन य इच्छेदुत्तमां गतिम्। विप्रा एकायनाख्या ये ते भक्तास्तत्त्वतोऽच्युते ॥
एकान्तिनस्तु तत्त्वस्था देहान्तान्नान्ययाजिनः। कर्तव्यत्वेन ये विष्णुं संयजन्ति फलं विना ॥
प्राप्नुवन्ति च देहान्ते वासुदेवत्वमञ्जसा। व्यामिश्रयाजिनश्चान्ये भक्तास्सास्तु ते स्मृता ॥
परिज्ञेयास्तु ते विप्रा नानामार्गगणान्वितः। तस्मात्संसिद्धदेहस्तु दीक्षाख्येन तु कर्मणा ॥
यावज्जयाधिकारं तु नारायणपरो भवेत्। जपहोमक्रियासक्तस्समास्ते स्तुतितत्परः ॥ २६४ ॥
देहान्ते वैष्णवं लोकं प्राप्नुयात् पुनरेव हि। जन्म चागाय चोत्कृष्टमाचाल्याद् द्विजसत्तम ॥
भगवत्कर्मनिष्णातस्तत्परस्तन्मयो भवेत्। नाभिसन्धाय च फलमापत्कालगतोऽपि वै ॥ २६६ ॥
त्यक्त्वा देहं पुनर्जन्म नाप्नुयादिह पौष्कर ॥

### पौष्कर उवाच

भगवन् भूतभव्येश क्षेत्रैः क्षेत्रवरैस्सह। पारम्पर्येन च [2]यैर्व्याप्त क्षित्यन्त तत्त्वसंग्रहम् ॥ २६७ ॥
वासुदेवाख्यसद्ब्रह्मतत्त्वादारभ्य वै क्रमात्। वक्तुमर्हसि मे शश्वत् सर्वानुग्रहकाम्यया ॥ २६८ ॥

### श्रीभगवानुवाच

षाड्गुण्यदेहसंज्ञेन स्वस्थेन चतुरात्मना। स्वर्गान्तं स्वपदा व्याप्तमधिदेवात्मना द्विज ॥ २६९ ॥
या वै सर्वेश्वरी शक्तिरीश्वराख्या नियामनी। ज्ञानादिभेदभिन्नेन आद्येन चतुरात्मना ॥२७०॥
व्याप्ता चाव्यक्तलिङ्गेन भारूपेण महात्मना। या परा प्रकृतिर्देवी सत्त्वैकगुणलक्षणा ॥ २७१ ॥
पूर्णा शक्तिसमूहेन वैभवीयेन पद्मज। सह मूर्त्यन्तरेणैव प्रादुर्भावान्तरस्तथा ॥ २७२ ॥

१. ग-घ—स्वय भूतापि.. केचित् २. क-ख—पारम्पर्येन च यो व्याप्ति

प्रादुर्भावमयैर्बीजैस्समूहे चतुरात्मना। जीवक्षेत्रज्ञकात्मनामधेयमनश्वरम् ॥ २७३ ॥
वर्तते वै समासाद्य नित्यं सैवेश्वरेच्छया। त्रैगुण्यसाम्यमाधारमव्यक्ताख्यं च शाश्वतम् ॥२७४॥
तत्रस्थमभिमानाख्यरूपेण परमेश्वर(:)म्। स्फुटमव्यक्तभेदं च चातुरात्म्यं जगत्प्रभुम् ॥ २७५ ॥
द्विभुजं पुरुषाकारयुक्तमादित्यसन्निभैः (भम्)। ध्वजैरम्बरगैश्चिह्नैश्शङ्खचक्रादिसंज्ञितैः ॥२७६॥
अव्यक्ते बुद्धितत्त्वे च स्थितं व्यक्ततरं विभुम्। चतुर्मूर्ति चतुर्वक्त्रं चतुर्बाहुं चतुर्गतिम् ॥
लाञ्छनैर्ध्वजपर्यन्तैर्व्यक्तैर्युक्तमनश्वरैः। अहङ्कारं समाश्रित्य अव्यक्तं कमलोद्भव ॥ २७८ ॥
स्थिता मूर्त्यन्तरान्तर्वै केशवाद्यास्तु वै स्मृताः। हंसाद्याः प्रणयोक्ता ये यथाभिसिद्धिलक्षणाः ॥
मनस्तत्त्वं समासाद्य सम्यक् ज्ञानगुणान्विताः। बुद्धीन्द्रियगुणं विप्र षड्ते पुनरन्यथा ॥२८०॥
पौरुषं देहमासाद्य संस्थिताः परमेश्वराः। कपिलेकनिष्ठाः षड्भुजाश्च वामनाद्या द्विजेश्वराः ॥
कर्मेन्द्रियसमूहं तु तिरस्याश्रित्य संस्थिताः। धर्माद्या विश्वरूपान्ता ये च सर्वगुणैर्युताः ॥२८२॥
तन्मात्रापञ्चकं त्वाद्यं समाश्रित्य च संस्थिताः। आकाशाद्यं समूहं यद्भूतानामब्जसंभव ॥
संस्थिता वै समाश्रित्य प्रागुक्ता विबुधोत्तम। उक्तो नैहाबुद्धे प्रादुर्भावान्तरैस्सह ॥२८४॥
उपरागं यथासाद्य लोकत्रयसमन्वितम्। एकदेशं समायाति तीर्थेऽङ्ग कुरुक्षितौ ॥ २८५ ॥
अनुग्रहधिया चैव परया (कृ)कृपया द्विज। अन्तकाले तु [1]बुद्धानां देवध्यानमनुस्मरन् ॥२८६॥
अध्यक्षा देवत क्षमाले विग्रहं नरा संग्रहम्। वाच्यवाचकयुक्तास्तु ताले यान्ति परां गतिम् ॥
यस्माद्वै भगवच्छक्त्या त्वनुकम्पाख्यया द्विज। आविश्य यान्ति बिम्बसंघं जन्तोरनुग्रहसिद्धये ॥
ततस्थानेन विधिना आपादयति वै शुभम्। तीर्थं चायतनं क्षेत्रं विसर्ज्य महामते ॥२८९॥

**पौष्कर उवाच—**

क्षेत्रैः क्षेत्रेश्वरोपेतैर्भूतानामिह यत्प्रभो। अनुग्रहार्थमाक्रान्तं तमादिशतु साम्प्रतम् ॥ २९०

**श्रीभगवानुवाच—**

कर्मभूमौ मनुष्याणां भव्याः क्षेत्रास्तथा हि ये। अगम्यास्त्वपि तेषां ये सुरसिद्धगणं विना ॥
साम्प्रतं मे च ते शब्दैकाग्रमवधारय। आर्यावर्ते तु भूभागे पृथिव्यां पुण्यसंज्ञके ॥ २९२ ॥
मध्यदेशसमीपे च चतुर्दिक्परिनिष्ठिते। सामुद्रजलवेलायां तत्पर्यन्ते महान्तरे ॥ २९३ ॥
आसृष्टेरवतीर्णा यैस्स्वाधिष्ठानैस्सहाखिलाः। आदिदेवादयो देवा व्यक्तिविग्रहलक्षणाः ॥२९४॥
यत्र यत्र च भूभागे यो यस्सार्वेश्वरं वपुः। यस्माद्यस्मात्तु वै तस्मादासृष्टेरत्य संस्थिताः ॥२९५॥

[1]. ग-घ—बद्धानाम्

क्षेत्रेशेनान्विताश्चैव तीर्थेशेन तथैव हि। यस्माद्देवालयोद्देशात् भ्रातस्य जलजस्य च ॥ २०६ ॥
भवेच्छब्दस्तत्रैवश्च तावत् क्षेत्रं तदुच्यते। दिव्याद्यायतनादीनामन्तरं [1]यदनन्तरम् ॥ २०७ ॥
क्रोशाधिकसमं न्यूनं मानेनानेन येन तु। आ वेदी च सा ज्ञेया नारायणरतात्मनाम् ॥२०८॥
यजने श्राद्धकरणे दाने बोक्षपणेऽर्चने। ध्याने संयोगजे अग्निसन्तर्पणे च ॥ २०९ ॥
स्थितं यदेकदेशे तु दीपालोके(कं) द्विजोत्तम। आभासयति भूभागं प्रसन्नहृदेव हि ॥ ३००॥
स्वक्षेत्रं क्षेत्रनाथं च समासाद्य च वर्तते। भुक्तिमुक्तिफलौ चैव सिद्धिर्भवति देहिनाम् ॥३०१॥
तत्र तावच्चतुर्मूर्तेर्भूयोऽन्तरगणस्य च। सन्निवेशं पृथिव्यां वै सम्यक् त्वमवधारय ॥ ३०२ ॥
पुष्करं क्षेत्रमाश्रित्य पुण्डरीकाक्षसंज्ञया। वासुदेवस्तु भगवान्नित्यसन्निहितः स्थितः ॥ ३०३ ॥
एवं क्षेत्रवरैस्सर्वमेत्य विश्वेश्वरस्स्वयम्। चतुर्मूर्तिर्निर्दिशाद्यं वै आश्रितेऽन्विश्च क्रमेण ॥ ३०४ ॥
चतुर्णां मूर्तिभेदं तद्द्विषट्कादिभिर्व्यवस्था। क्षेत्रैस्तीर्थादिभिस्तेषां सन्निधानमवधारय ॥ ३०५ ॥
केशव क्लेशहा लोके वैद्यरूपेण स्थितो स्थिरः। अभिव्यक्तेन रूपेण गोविन्द पुरुषोत्तम ॥
[2] ... .. . . . .. . .
.. .. . । भूभागपदमाश्रित्य संस्थितो नगसाह्वये ॥ ३०७ ॥
स्थाने वृन्दावनाख्येऽपि द्विधैव कालेऽद्भव। [3]विष्णुर्लो हे विप्र स्थितो विष्णुपदेन च ॥
मन्दराख्यगिरिं चैव आसाद्य मधुसूदन। भूतानामनुकम्पार्थमचलार्थं च संस्थित ॥ ३०९ ॥
यामुनं जलमाश्रित्य देवदेवस्त्रिविक्रमः। स्थितः स्पल[4]संमृत नृणां च सुगतिप्रदः ॥ ३१०॥
मूर्त्यन्तरं वामनाख्यं सह्याद्रौ कमलोद्भव। स्वतन्त्रादेत्य विश्रान्तं भक्तिनां भोक्तान्वयं ॥
नर्मदाख्यं हि चाक्रम्य जलं पापक्षयङ्करम्। श्रीधरः संस्थितो देव कौण्डले च श्रिया सह ॥
हृषीकेशस्तु भगवान् संस्थितोऽप्यात्मना शुचि। धराधरे ध्वजाख्ये तु [5]क्षेत्रे कुब्जाम्रकेऽब्जज ॥
पद्मनाभस्तु मायेजस्त्वचलार्थे च संस्थित। दक्षिणां दिशमाश्रित्य समीपे जलधिक्षितौ ॥३१४॥
गिरौ रैवतके विप्र स्वतन्त्रादेत्य वर्तते। दामोदरस्तु भगवान् हितार्थं भावितात्मनाम् ॥३१५॥
एभिर्मूर्त्यन्तरैस्सार्धं मूर्तिभिर्विश्वमन्दिरम्। समासाद्य द्विजश्रेष्ठ अतोऽन्येषां च संस्थितिम् ॥
निबोधतु महाबुद्धे सावधानेन चेतसा। सिद्धामरार्चितं विद्धि श्वेतद्वीपे तु हंसराट् ॥ ३१७॥
मत्स्यात्मा भगवानप्सु अश्वात्मा वडवामुखे। रसातले तु कूर्मात्मा विन्ध्यारण्ये तु पौष्कर ॥
विज्ञातव्यो मृगेन्द्रात्मा पापहा सर्वदेहिनाम्। सौकर्यायेन रूपेण क्षेत्रे तत्संज्ञके तु वै ॥३१९॥

[1] **क-ख**--यदनन्तरम् २. **क-ख**--ग्रन्थपात इति आदर्शग्रन्थे लिखितम् ३ **ग-घ**--विष्णुर्लोभा ? हा ? ४. **क-ख-ग-घ**--समुत्तरण सगतिप्रदम् ५. **क-ख**--कुब्जोमगेऽब्जज

गाङ्गे शुभजले कूले सुरसिद्धनिषेविते। हेमोत्तमाङ्गहग्देवो हेमशैलमहान्तरे ॥ ३२०
नौबन्धनगिरावेव मीनवक्त्रः स्थितः प्रभुः। कृष्णाख्येऽश्वशिरोदेवो क्षितिक्षेत्रे क्षमार्चिते ॥३२१॥
लवणोदधिपर्यन्ते भूभागे सिद्धसेविते। कूर्मवक्त्रश्च भगवान् संस्थितश्शङ्खचक्रधृक् ॥ ३२२ ॥
नृहरिः कृतशौच तु उज्जयिन्यामपि द्विज। विशाख्यमूलसंज्ञे तु स्थाने त्वेवं स्थितस्त्रिधा ॥
कोकामुखे वराहस्तु वाराहे तु नगोत्तमे। कन्दमाले [1]विवैतस्ते कुलकुक्षौ हिमाचले॥ ३२४ ॥
वामनं खर्वमूर्तिं च वैश्वरूप्येण संस्थितम् [?]। मध्यदेशे तु गङ्गायाः कुरुक्षेत्रे तु पौष्कर ॥
यामुनं कूलमासाद्य प्रादुर्भावान्तरं महत्। स्थिति त्रिविक्रमाख्यं यस्त्रैलोक्याक्रान्तविग्रहः ॥
नगोत्तमे महेन्द्राख्ये परश्वथकरो द्विज। रामसंज्ञश्च भगवान् संस्थितः क्षत्रियान्तकः ॥ ३२७ ॥
धराधरे चित्रकूटे रक्षःक्षयकरो महान्। संस्थितश्चापरो रामः पद्मपत्रायतेक्षणः ॥ ३२८ ॥
रामोऽन्यस्सीरपाणिर्वै यामुनं श्रामयज्जलम्। संस्थितो मानुषीयेषु भूभागेषु शुभेषु च ॥ ३२९ ॥
सामुद्रेऽपि ततो द्वीपे द्वारकाख्येऽमरार्चिते। वर्तते भगवान् कृष्णस्सर्वात्मा परमेश्वरः ॥ ३३० ॥
कल्की विष्णुश्च भगवान् स्तूयमानो द्विजैः स्थितः। समासाद्य विपाशां च नदीं नियतमानसः ॥
धर्ममूर्तिर्महात्मा वै धर्मारण्ये सुरार्चिते। अनुग्रहपरस्त्वास्ते लोकानां लोकपूजितः ॥ ३३२ ॥
नरसंज्ञ जगन्नाथं सिद्धैस्संपूजितेषु च। भूभागेषु च रम्येषु नित्यसन्निहित स्थित ॥ ३३३ ॥
गिरौ गोवर्धनाख्ये तु देवस्सर्वेश्वरो हरिः। संस्थितः पूजिते स्थाने गवां निष्क्रमणेषु च ॥
सालिग्रामे च भगवान् गजेन्द्राख्ये वने द्विज। तथैव वसुधारेण स्थितो देवव्रताभिधे॥ ३३५ ॥
कृष्णोऽपरश्चतुर्मूर्तिरवतीर्य धरातले। स्थितः पिण्डारके विप्र मोचयन्दुष्कृता(ज्ज)नान ॥ ३३६ ॥
श्वेतद्वीपे कुरुक्षेत्रे हिमवन्ताचलेऽब्जज। [2]दविकायामपि तो विश्वरूपस्थित प्रभुः ॥ ३३७ ॥
क्षीरोदधौ पद्मनाभश्[3]शेषाहिशयनेऽपरे। स्थितो नाभ्यब्जसंभूतो यस्माच्चैव पितामहः ॥ ३३८ ॥
चतुर्धा रूपमाश्रित्य विश्वेऽस्मिन् सैष वर्तते [?]। हिताय सर्वलोकानां यथावदवधारय ॥ ३३९ ॥
आसाद्य शयनं ब्रह्मन् पातालतलसंस्थित.। [4] मादाय चाग्नेयं योऽन्ते संहरते जगत् ॥
वटमूलं समाश्रित्य प्रयागे सुरपूजिते। तदेकार्णवं कृत्वा दिव्यमासाद्य पादपम् ॥ ३४१ ॥
सन्निष्ठते प्र आवां सस्सिर्भारे क्षितौ द्विज। न्यग्रोधशायिनं चैव ध्यायेद्दिव्यगतिप्रदम् ॥३४२॥
हिमाचलैकदेशे तु तुङ्गे वै भृगुसंज्ञके। मधुकैटभमाथी च संस्थितः सोऽवनीतले ॥ ३४३ ॥
क्षीरोदकक्षितिक्षेत्रे सुरासुरनिषेविते। मन्दराद्रिकरो देवो वर्तते देवपूजितः ॥ ३४४ ॥

[1] **क-ख**— विवैतस्ते [2] दविकाया इति स्यात् ३. शेषाहिशयनो हरिः इति पाठान्तरम्
४. **क-ख**— योऽन्ते

तत्रैवामृतजिद्देवः संस्थितस्सिद्धसेवितः। कान्तारूपधरश्चैव सुधाकलशवृक्तथा ॥ ३४५ ॥
सिद्धानां च मुनीनां च देवानां मृत्युजित् स्थितः। त्रिधा कर्तागणोपेतं देवं गरुडवाहनम् ॥
सालवृक्षभुजोद्देशे सालिग्रामे स्थितो विभुः। त्रिकूटगिरिशृङ्गे तु गम्ये गगनचारिणाम् ॥ ३४७ ॥
गजोद्धृतिच्छलेनैव अप्रमेयाख्यया स्थितः। श्वेतद्वीपपतिर्देव अवतीर्य च संस्थितः ॥ ३४८ ॥
गङ्गासमुद्रसंयोगे क्षित्युद्देशे मनोरमे। यज्ञभुग्भगवान् देवो नैमिशे सिद्धपूजिते ॥ ३४९ ॥
सैन्धवारण्यमाश्रित्य अनन्तो भगवांस्स्थितः। शार्ङ्गपाणिस्तु देवेशो दण्डकारण्यसंज्ञके ॥ ३५० ॥
रक्षोगणकुलं चैव संस्थितस्तज्जयैषिणाम्। उत्पलावर्तके देशे शौरिसंज्ञोऽच्युतस्स च ॥ ३५१ ॥
क्षितौ समुद्रसिन्ध्वोश्च सङ्गे सिद्धसेविते। ज्ञानोपदेष्टा भगवान् संस्थितो दुःखशान्तये ॥
आसाद्य सूकरक्षेत्रं देवो गरुडवाहनः। संस्थितो गरुडारूढः पारिजातकराङ्कितः ॥ ३५३ ॥
सिद्धैस्सुरगणैस्सार्धं गगने चापि पौष्कर। देवदेवेशनाम्नाथ हस्तिपर्वतमस्तके ॥ ३५४ ॥
एकदेशं समासाद्य सर्वस्य वरदः स्थितः। [1]माल्योदपाणिर्वैकुण्ठो मगधायां महामते ॥३५५॥
[2]ओड्डीन्ये पुण्यभूभागे संस्थितः पुरुषोत्तमः। अचिन्त्यात्माथ भगवान् पर्वते गन्धमादने ॥
शिपिविष्टाख्यया देवश्शिपिविष्टवने स्थितः। प्राक्समुद्रापयाने तु भूभागे शुभलक्षणे ॥ ३५७ ॥
कापिलं मूर्तिमासाद्य वासुदेवः स्थितः प्रभुः। अवतीर्य स्वतत्त्वाच्च ब्रह्मसंज्ञः प्रजापतिः ॥३५८॥
मणिबन्धं समासाद्य नित्यं सन्निहितः स्थितः। मगधामण्डले विप्र महाबोधधराश्रितः ॥३५९॥
संस्थितो लोकनाथात्मा देवदेवो जनार्दनः। देवदक्षिणगाक्ष्णोर्वै योऽभिमानतनुर्द्विज ॥ ३६० ॥
सूर्यसंज्ञस्तु भगवान् हेमशैलोपरि स्थितः। अच्युतो वामनेत्रे तु योऽभिमानतनुर्विभुः ॥ ३६१ ॥
भगवान् सोमसंज्ञस्तु सोमतीर्थाश्रमेऽपि च। अग्निस्वरूपमजितं संस्थितं बडबानले ॥ ३६२ ॥
वस्वात्मा गगने विप्र भासने त्वसुरान्तकृत्। विष्णुनाम्ना पुनर्देवस्त्वनेकायुधमण्डितः ॥ ३६३ ॥
जयाख्ययोज्जयिन्यां वै स्थितः पापजये नृणाम्। काश्मीरमण्डले पुण्ये क्षेत्रे चक्रधराभिधे ॥
चक्रपाणिस्तु भगवान् भक्तानां मोक्षदः स्थितः। सुरोत्तमाभिधानश्च गदापाणिस्तु पौष्कर ॥
सदा सन्निहितं विद्धि गङ्गाद्वारे सुरैस्सह। चतुर्भुजश्चतुर्मूर्तिश्चतुर्वक्त्रश्चतुर्गतिः ॥ ३६६ ॥
स्थितः पिण्डारके देवो विष्वक्सेनस्सनातनः। शुभमासाद्य भूभागं प्राग्ज्योतिषपुरे तथा ॥३६७॥
देवं विश्वेश्वराख्यं च स्थितमेत्य खगोचरात्। सातत्रनाभिधक्षेत्रे सिद्धविद्याधरान्विते ॥ ३६८ ॥
स्वामिसंज्ञो जगन्नाथः स्थितो मन्दाकिनीतटे। भल्लातके महायोगे ध्यायिनामपवर्गदः ॥ ३६९ ॥
रसातले नृसिंहाख्ये देविकायास्तटाश्रिते। रिपुक्षयाख्यया विप्र देवस्सर्वेश्वरस्स्थितः ॥ ३७० ॥

१. क-ख · वैकुण्ठो...गयायाम् २. क-ख— ..पुण्य

शङ्खाख्ये तु भूभागे सर्वदेवनिषेविते। ज्ञानमूर्तिर्जगन्नाथस्संस्थितश्शुभकृन्नृणाम् ॥ ३७१ ॥
पृथिव्यां तु पितृक्षेत्रे मोचयन्तमृणत्रयात्। जनार्दनाख्यया ब्रह्मन् विश्वात्मा भगवान् स्थितः ॥
एतेऽवताराः कथिताः लेशतः कमलोद्भव। एभिः क्षितितलं व्याप्तं पौनःपुन्येन च स्वयम् ॥
संसारिणां जनानां तु अनुग्रहधियाब्जज। सङ्कीर्तनमगम्यानां त्रिसन्ध्यं नित्यमाचरेत् ॥
मति चक्रे च गम्यानां सेवने दर्शनेऽपि च। म्लेच्छानां तेषु देशेषु क्षितौ क्षेत्रादयो हि ये ॥
साङ्कर्यपरिहारेण द्रष्टव्यास्ते सदैव हि। ऋषिभिस्सामरैस्सिद्धैस्स्वाश्रमेषु महत्सु च ॥ ३७६ ॥
जलाशयेषु पुण्येषु पृथिव्यां विविधेषु च। सर्वे भगवदाकारा विभवव्यूहलक्षणाः ॥ ३७७ ॥
उ(मु)क्ता गताश्च ये चान्ये सपु प्रेक्ष्य धिया स्वयम्। प्रतिष्ठिताश्च विधिवत्समन्त्रास्सत्यविक्रमाः ॥
स्थित्या नानाप्रकारा ये भूतलव्याप्त्याख्यया। सौम्याग्नेयोभयाख्येन सन्निवेशवशेन वै ॥
लीलारुचिसनेनैव चित्तसंकल्पप्रदेन च। भुजायायुधसन्धानकेतुभेदेन वै सह ॥ ३८० ॥
अलंकृतश्च भूभाग मनुजैन्वेतमेव हि। भक्तैरनुगृहीतैश्च सिद्धाद्यैश्च यथोदितम् ॥ ३८१ ॥
आदिदेवादयश्चैते तथैवात्मसमुद्भाविना। परस्मिन् भगवत्तत्त्वे त्वभेदेन व्यवस्थिताः ॥ ३८२ ॥
सूर्यस्य रश्मयो यद्वद्वह्नेरर्चिषो यथा। जलोर्मयो यद्वत्तद्देशाब्जसंभव ॥ ३८३ ॥
चित्सामान्यात्मि नित्यशुद्धा व्यापकाः परमेश्वराः। तत्त्वसत्तां समाश्रित्य ज्ञानाद्यैस्समलंकृताः ॥
अणिमाद्यष्टकोपेतास्संस्थितास्स्वात्मना तु वै। अस्वावनेषु सर्वासु नित्यं कुर्वन्ति सन्निधिम् ॥
मुक्त्यै सर्वभूतानां विशेषेण तु वै भुवि। आदिश्वप्रभवात् कालादारभ्य प्रलयावधि ॥ ३८६ ॥
क्षेत्रेषु तीर्थतीरेषु शब्दब्रह्ममयात्मना। गायत्र्येनादि मन्त्रेण तद्विवर्तेन भास्वता ॥ ३८७ ॥
ततो व्यक्ततरं रूपमाश्रयन्ति च पार्थिवम्। हितार्थं सर्वलोकानामनादिनिधनमनश्वरम् ॥ ३८८ ॥
जगत्यायतनाख्यायामत्र सिध्यन्ति योगिनः। कालान्तरेण व्यक्तीनां मज्जनं जायते यदि ॥
सन्निधिं शक्तिभावेन नित्यं कुर्वन्ति तत्र च। योगेश्वरामरस्सिद्धास्स्मृत्वाकारं तदात्मकम् ॥
शैलमृद्दारुधातूत्थां व्यक्तिं संस्थापयन्ति च। यत्रानुवेधं कुरुते मन्त्रशक्तिधरास्तु ये ॥ ३९१ ॥
येनाच्युतायतनाम्ना वै यत्रस्थानान्तरं स्मृतम्। सन्निधिस्थस्य वै रूपं शब्दमूर्तिधरस्य च ॥
भिन्नात्मनां स्वयंव्यक्तिरूपेष्वव्यक्तकेषु च। सन्निरुद्धेषु मन्त्रेषु इच्छावृत्तिगतेषु च ॥ ३९३ ॥
आकारास्संनिवेशाच्च पारमेश्वरमन्यथा। अन्यथा वै जगत्यस्मिन् ख्याताख्यातं च शाश्वतम् ॥
एवमायतनानां च नित्यत्वं सम्प्रकाशितम्। अनादित्वमसंख्यं च महत्त्वमपि पौष्कर ॥३९५॥
जाता ये मां प्रसिद्धिर्वै सति व्यक्तिवशाद्द्विज। विना व्यक्तिस्वरूपेण शब्देनाप्यक्षयात्मना ॥
ह्यात्मनापि हि चान्यत्र शब्दव्यक्तिमयात्मना। अन्ये मुनिवरा विप्र दृष्ट्वा स्थानं मनोरमम् ॥

[1]निर्दोषं सलिलं शुद्धं पादपौषधिसंकुलम्। स्थितिं कृत्वा स्थिरां तत्र कर्मणा मनसा ततः ॥
सुलक्षणं तु पाषाणं दृष्ट्वा चान्यत्र वाहृतम्। विश्वकर्मकुलोद्भूतं समाज्ञाप्य तु शिल्पिनम् ॥
उपलेऽस्मिञ्जगद्योनेर्विष्णोस्सर्वेश्वरस्य च। पादारविन्दमुद्रां च सम्पाद्य च मनोहराम् ॥ ४०० ॥
एवमन्ये तु मुनयस्स्वस्थानेषु महामते। शङ्खचक्रगदापद्मपूर्वा ये हरिलाञ्छनाः ॥ ४०१ ॥
निवेशं तत्र कृत्वा वै भक्तिपूतेन कर्मणा। अपरे तु द्विजश्रेष्ठा भक्तिबृंहितमानसाः ॥ ४०२ ॥
कुर्वन्ति सन्निवेशं च भक्तानां हितकाम्यया। पूर्वोक्तेषु च देशेषु सिद्धाद्यैरर्चितेषु च ॥ ४०३ ॥
मुद्रितेषु सहस्रारपूर्वमुद्रागणेषु च। पाषाणैर्वा महाबुद्धे रसमृष्टैः पूजनेषु च ॥ ४०४ ॥
कृत्वा संस्काररूपं तु न्यासं यत्रोचितं हि यत्। [2]कुर्वन्ति विधिपूर्वं तु नित्यं त्रैकाल्यमर्चनम् ॥
ऋक्सामपूर्वैस्सन्मन्त्रैर्द्विषट्कार्णसमन्वितैः। भगवत्पदमिच्छद्भिः शिष्याद्यानां शुभाप्तये ॥ ४०६ ॥
एवं पुष्करसंभूत ग्रामाश्च विषयाखिलाः। नगरास्सपुरा राज्ञां पत्तनानि ये क्षितौ शुभाः ॥४०७॥
ऋषिभिर्मनुजैश्शुद्धैस्स्वयं सर्वेश्वरेण तु। भक्तानामनुकम्पार्थं नीतं पुण्यपदात्मताम् ॥ ४०८ ॥
विभवव्यूहभेदेन [3]स्थिता चानुग्रहेच्छया। तस्करानुपघाते तु अन्तर्यागवने द्विज ॥ ४०९ ॥
पूर्वसन्त्रादयो मन्त्रास्तत्र ये प्राङ्निरोधिना। बिम्बमुज्झित्य तिष्ठन्ति तद्भावैवरावरे ॥ ४१० ॥
संस्कारं न कृतं यावत् पूर्वं [4]तत् स्थावरात्मना। वर्धते च महादोषो दिनाद्दिनमन्यथा ॥
तद्देशजानां सर्वेषां साधकानां नृपस्य च। द्विजेन्द्रैरेतत्तस्माद्दीक्षितैर्वा कुटुम्बिभिः ॥ ४१२ ॥
देशिकैर्नरनाथेन कार्यं च भयनाशनम्। सर्वेषां पापशमनं कृतमन्त्रगणं हि यत् ॥ ४१३ ॥
प्रातिमं विग्रहं शश्वत्सर्वेषां श्रेयसे तु वै। निर्जनायतनानां तु धर्मार्थं यस्समाचरेत् ॥ ४१४ ॥
दोषोपशमनं तस्य सर्वदुःखक्षयो भवेत्। भक्तिमात्रपूर्णानां महामोहक्षयाय च ॥ ४१५ ॥
ब्रह्मण्यधिपतित्वेन आकारं चाच्युतं हि यत्। सन्निवेशैस्समोपेतं विभूत्यंशैस्समन्वितम् ॥४१६॥
प्रजापतिस्तमासाद्य संक्रान्तं बुद्धिदर्पणे। तेन कर्मपथं नीतं शिल्पिनस्स्वात्मजस्य च ॥ ४१७ ॥
संपन्नस्य च होमाद्यैर्देशिकैस्संस्कृतस्य च। [5]संक्रामन् यचिरात्तत्र' गौणमाकारमैश्वरम् ॥
सह विन्यासकाले तु वाचकेन महात्मना। एवमेवमनादित्वं द्रव्यजास्वाकृतीषु च ॥ ४१९ ॥
[6]संसिद्धभूतिदृष्टिर्वै तुल्यकालं तु भूतले। विश्वविद्भिस्स्मृतिं नैति शिल्पिबुद्धिसमाश्रितम् ॥
स हि यच्छति भक्तानां कृत्वाकारं सुलक्षणम्। यस्य चाभिमतस्तादृक् भावभक्तिवशात्तु वै ॥

१. ग-घ—निर्दोष सकल शुद्धम्   २. ग-घ—कुर्वन्तु   ३. क-ख—स्थिता चन्यास-हेच्छया   ४. क-ख—यावत्पूर्वं त . तम्   ५. सङ्क्रामन्त्यचिरात् इति स्यात्   ६. ग-घ—ससृष्ट-भूतिसृष्टिर्वै

दृष्ट्वा स्वयं व्यक्तिमतो भुवि बिम्बं तु वै बुधः। ब्रह्मरुद्रैकसूर्याख्यमाच्युतं विद्धि तन्महत्॥
यदुक्तं व्यूहभेदस्थं मूर्तिभेदैस्समन्वितम्। तथैव हि समाराध्यं बुध्या कमललोचन॥ ४२३॥
आराधने समाधौ वा उपविष्टास्तु चोत्थिताः। संस्थितास्थानकैश्चान्ये तमोमूर्तिष्वनुष्ठितैः॥
[1]धारयत्यद्भुतं चैव लाञ्छनद्वयमिच्छया। द्वयं करद्वयेनैव लम्बमानचतुष्टयात्॥ ४२५॥
शङ्खचक्रगदापद्मपूर्वाद्यायुधसंग्रहात्। यथोद्दिष्टक्रमेणैव लोकेशादिषु वै पुरा॥ ४२६॥
ज्यादयश्चेच्छया(वा)चान्ये करैस्तिर्यक् प्रसारितैः। सूचयंत्यतिभक्तानामुद्भुजत्वेन [2]संपदम्॥
मन्दभक्तिपराणां तु तिर्यक् संस्थानसंस्थितैः। महदात्मपदं दिव्यं यद[3].... ....॥ ४२८॥
येषामन्त(रि?)रता?भक्तिर्नृणां व्यामिश्रयाजिनाम्। प्राप्तिस्त्रिविष्टपे तेषां भुजवृन्दादयो मुखात्॥
समस्सर्वेषु भूतेषु ब्रह्मन् यद्यप्यहं सदा। उपदेक्ष्यामि युक्त्या वै मद्भक्ता यान्ति संपदम्॥
अपरैरष्टभेदस्थैर्वर्णैर्वा ब्राह्मणादिकैः। प्रस्थापिताश्च विधिवत्प्रतिमा वा नृपोत्तमैः॥ ४३१॥
प्रतिबिम्बमयीं व्यक्तिं स्वयमेवाच्युतेन वा। जीर्णदोषं विना चैव चालनं यदशान्तिकम्॥
क्षतमुत्पातपूर्वैस्तु दोषै[4]स्तु नृपनाशकृत्। तदस्तमितमन्त्राणां भूयस्संस्थापने कृते॥ ४३३॥
उदयं जायते शश्वच्छान्तये किन्तु पौष्कर। देशिकेन्द्रै[5]र्यथाध्याताः (तं) सूर्येन्द्वनलसन्निभाः॥
प्रविशन्ति च मन्त्रेशाः प्रणवध्वनिसाधिताः। कर्षयन्ति विभूतिं स्वां किञ्चित्कालान्तरेण तु॥
कृता वै ध्वस्तदोषाश्च निर्विघ्नं निर्मलाः पुनः। निवेशितास्सुसिद्धाद्यैर्मर्त्यैः क्षेत्रवनेषु च॥
निवारयन्ति ये मोहाद्विभवव्यूहमूर्तिषु। संस्थानमानमाकारं दोषं कालान्तरे स्थितम्॥ ४३७॥
ते चान्तकाले मज्जन्ति घोरे तमसि दुस्सहे। स्वल्पवित्तैरतस्तस्मादल्पबोधसमन्वितैः॥ ४३८॥
वर्जनीयं विनानेन देवं श्रेयोऽभिवाञ्छितैः। स्वयमेव जगन्नाथस्त्ववतार्य यथा स्थितः॥ ४३९॥
गृहीतस्तु स्थिरात्वेवमसिद्धैश्चापि कल्पितः। दोषैस्सदिग्विभङ्गाद्यैरन्यथात्वं न याति च॥
नित्यसन्निधिमाहात्म्यात् कालं कल्पक्षयावधि। उत्तरोत्तरतां चैव जगत्यस्मिन् हि वर्तते॥४४१॥
भूत्या कान्त्या च कीर्त्या च क्रियया चाप्रमेयया। दुष्टोपशान्तिदा शक्त्या सिद्धिदा या च वै सह॥
पौरुषायतनानां च सिद्धाख्यानां महामते। स्वयमेवावतीर्णानां तत्त्वेशानामिह क्षितौ॥ ४४३॥
एवं क्षेत्रेश्वराणां तु सक्षेत्राणां मयाऽब्जज। प्रकाशितं रहस्यं च मुक्तये [6]भविनां मया॥४४४॥
[7]फलार्थिनां च भविनां क्षेत्रे क्षेत्रेशसेविनाम्। यथाभिमतसंप्राप्तिमिहैवायान्त्यनश्वरीम्॥४४५॥

---

१. सर्वत्र—वारयति-लारयति इत्यस्ति २. क-ख—सभवम् ३. ख—हृदयस्थं हि संपदा ग-घ—यदन्तरथ हि संपदात्। (पाठा)-अधधस्थ हि ४. ग-घ—दोषैस्तत् नृप ५. क-ख—यथाध्यानम् ६. क-ख—ह विनात्मना ७. ग-घ—विद्यार्थिनां श्च

अथ भूमितले जाता प्रलयाख्ये महान्ति ते। क्षेत्रे क्षेत्रेश्वराणां तु रहस्यमवधारय॥ ४४६॥
ज्ञानाद्यैस्साणिमाद्यैस्तु अव्यक्तैः क्ष्मावमानिकैः। तत्त्वबीजैरुपादेयैर्ब्रह्मसत्तासमन्वितैः॥ ४४७॥
सहावतीर्य वा सृष्टेः प्राग्व्यक्तिं यान्ति वै ततः। स्वयमेवार्थभावेन सर्वानुग्रहकाम्यया॥४४८॥
क्ष्मामण्डलोपसंहारकालं क्षेत्रधरैस्सह। स्थितिर्माश्वरतत्त्वे तु कुर्वन्ति च तदिच्छया॥ ४४९॥
सविश्वव्यक्तिसमये प्राग्व्यक्तिं प्रवदन्ति च। जातिजन्मतथादेशदुःखैर्देहोत्थितैस्सह॥ ४५०॥
आधिव्याधिप्रपूर्वैस्तु मानसैर्दुस्सहैस्तथा। इत्येवमादिभिर्दोषैर्[1]मुच्यते ... कथम्॥ ४५१॥
सम्यग्ज्ञानं विजानन्तो क्षेत्रीयानुग्रहेण वा। आविष्कृता भवेद्भक्तिस्तीव्रभक्त्याद्यनुग्रहात्॥४५२॥
जायते च मतिर्नॄणामन्ते क्षेत्रे द्विजाच्युते। नेच्छन्ति सविकल्पासु अभक्ता नास्तिकोत्तमाः॥
विवेकः [2]पुरुषादीनामायातं च फलाद्विभोः। पुरुषार्थपरित्यागं न कार्यं बोधितेन वै॥४५४॥
जीवनं च जगत्यस्मिन् विप्रकर्म समन्वितम्। ईश्वरस्तन्निरागे तु शक्तो बहुविधैर्मखैः॥४५५॥
तदास्तित्वं गुरुमुखात् तत्संवेदनसंयुतम्। श्रद्दधानाश्च भक्ताश्च लभन्ते च नरोत्तमाः॥ ४५६॥
ज्ञातव्यमात्मनात्मानं ततस्सर्वज्ञमीश्वरम्। अभिमानमनाद्यं यत् प्राकृतं सत्वजं त्वथ॥ ४५७॥
[3]अस्मितालक्षणं घोरं सर्वदा वाञ्छित[4]प्रदम्। विज्ञेयमात्मनात्मानं तावद्यावन्निबोधितम्॥
बीजानां हि यथाकालं व्याप्तानां फलमल्पदा। एवं व्यापारनानाच्च क्षेत्रेष्वायतनेषु च॥४५९॥
जन्माभ्यासवशाच्चापि नूनं कर्मक्षयो भवेत्॥

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां आयतनविचारो नाम

षट्त्रिंशोऽध्यायः॥

(समुदित श्लोकसंख्या ४६१)

१. **ग-घ**— मुच्यते त्वापृते –रावृतैः— २. **ग-घ**—पुरुषार्थानमायान्त च ३. सर्वत्र—
अस्मीति लक्षणम् ४. **क-ख**—व्रतम्

# अथ सप्तत्रिंशोऽध्यायः

**पौष्कर उवाच—**

पादमुद्राङ्कितानां च उपलानां जगत्प्रभो। चक्रपद्माङ्कितानां च न्यासं संस्कारपूर्वकम्॥ १ ॥
आधाराणां तथान्येषां ज्ञातुमिच्छामि साम्प्रतम्। एवं चानादिसिद्धानां पाषाणानां जगत्पते॥
शङ्खाद्यैरङ्कितानां च लाञ्छनैः पारमेश्वरैः। प्राप्तैस्संपूजनार्थं तु गृहस्थैर्वा वनस्थितैः॥ ३ ॥
अन्येषां चैवमार्दीनां यागनिष्पत्तये तु वै। चलानामचलानां च संविधानं ममादिश॥ ४ ॥

**श्रीभगवानुवाच—**

आपादितं पुरा द्रव्यं शिल्पिना च यतात्मना। कृत्वा संस्कारसंशुद्धं द्रव्यैः प्राङ्मन्त्रभाविते॥
यत्र यत्रानुरूपं च तत्र तन्न्यासमाचरेत्। तदानुग्रहशक्त्यन्तमाक्षिप्तैः कमलोद्भव॥ ६ ॥
मन्त्राणां सन्निधिः कार्यश्चलपीठे तु केवले। तात्कालिकं तु विहितं निरोधं तत्र चार्चनम्॥
आधारशक्तेरारभ्य मन्त्रग्रामस्य पौष्कर। सुस्थिरे सन्निरोधं च सर्वेषां विहितं सदा॥ ८ ॥
तत्रावाह्य यजेन्मन्त्रमिष्ट्वा चोत्थापयेत् पुनः। न हित पूज्यमन्त्रस्य पूजाकालं विनाऽब्जज॥९॥
साधनात् सन्निमित्तत्वात् ज्ञानेनात्र निरोधनम्। पुष्पाद्याहरणे काले प्रत्यहं परमेश्वरः॥ १० ॥
अनुग्रहपरस्त्वास्ते स तत्रैव स्वशब्दवत्। चलबिम्बेन सह वै एकीभावगतस्य वा(वै)॥ ११ ॥
पीठस्य मन्त्रविन्यासं विहितं चलपीठवत्। सुस्थिरस्यैकयोनिर्वा वियोगे सुस्थिरस्य च॥ १२ ॥
मन्त्राणां विहितं न्यासं स्थिरपीठोदितं तु वै। आपादाद्ब्रह्मरन्ध्रान्तं चलबिम्बस्य पौष्कर॥
प्राकृतानां तु तत्त्वानां कुर्याद्वै सन्निवेशनम्। क्षित्यादिकानां पादान्तमव्यक्ताद्वा[1]धरान्तिमम्॥
सर्वतत्त्वमयं मन्त्रं तस्य वा केवलं हृदि। प्राधानिकं योजनीयमभिन्नं तत्त्वकारणम्॥ १५ ॥
अथेज्यावसरे प्राप्ते मन्त्रतन्त्रे नियोजयेत्। जडत्वविनिवृत्त्यर्थं तत्त्वमन्त्रगणस्य च॥ १६ ॥
जीवभूतं तु तं विप्र नित्यं शुद्धं सदोदितम्। साङ्गमावाह्य मन्त्रं च लाञ्छनाद्यैः परिष्कृतम्॥
उपसंहृत्य तत्रस्थं निष्पन्ने वार्चने सति। विन्यासमुपसंहारं मान्त्रं यत्समुदीरितम्॥ १८ ॥
तीर्थक्षेत्रधराणां च विहितं [2]तत्प्रवासनम्। नित्यप्रतिष्ठिते बिम्बे प्रासादे स्वगृहेऽपि वा॥
अन्यत्र वाङ्कणादौ तु तस्य कुर्या[3]न्निरोधनम्। आधारपीठमन्त्रैस्तु लाञ्छनीयैस्स्वकैस्सह॥२०॥

१. **क-ख**—धरान्तिकम् २. **ग-घ**—तत्प्रवासिनाम् ३. **ग-घ**—निबोधनम्

अस्थिराणां प्रतिष्ठानां विशेषमिदमाचरेत्। यथोदिते तु संपन्ने स्थापिते परमेश्वरे ॥ २१ ॥
कुर्यात्ततोऽनुवेधं च [1]आधाराच्च शिखा(व)विधि। सामर्थ्यशक्तसूत्रेण ईश्वरेणाक्षयेन च ॥ २२ ॥
सति येन विलुप्तस्य बिम्बाद्यैरन्वितस्य च। न जहाति च मन्त्रौघस्तस्य कालान्तरेण च ॥२३॥
अप्रबुद्धः प्रबुद्धो वा तस्मिन्नायतने पुमान्। निवेशयति यो बिम्बमपरं द्रव्यजं तु वा ॥ २४ ॥
तद्विज्ञानानुविद्धं च जायते समनन्तरम्। एवंविधस्य ज्ञानस्य त्रैलोक्येऽस्मिन् हि पद्मज ॥२५॥
प्रतीत्यायतनत्वेन भवत्याचन्द्रतारकी। सन्निवेशं जगद्धातुर्यत्र यत्सिद्धसेवितम् ॥ २६ ॥
तदसिद्धैर्न नेतव्यमन्यथात्वं [2] . .. । यस्तज्ज्ञस्तत्वविद्भक्तः श्रद्दधानस्सदास्तिकः ॥ २७ ॥
बुध्वावनिविपर्यासमेकं कालान्तरोद्भवम्। प्रयत्नैस्सुचिकित्स्यं यत्तदन्तर्धानशङ्कया ॥ २८ ॥
प्रसन्नाद्यैस्समादाय तदाज्ञां त्रनपूर्विकाम्। प्रणवेन महा[3]योगं पूर्वं पूर्णान्तमर्चनम् ॥ २९ ॥
समापाद्य सदानं च सन्निवेश्यासने [4]परे। अन्यथा जायते तस्मिन् सदेहं परमेश्वरम् ॥ ३० ॥
व्याधितस्करदुर्भिक्षराष्ट्रभङ्गपुरस्सरम्। आगामि वर्तमानं च देशभङ्गाद्युपप्लवैः ॥ ३१ ॥
चलनं विधिपूर्वं तु कृतं नानिष्टदं भवेत्। पुनरन्यत्र वा तस्मिन् स्थाने कुर्याच्च योजनम् ॥
यथाशास्त्रोक्तविधिना सम्यगुत्सवपूर्वकम्। किन्तु प्रबोधयेन्मन्त्रं तन्त्रं यत्सत्क्रियां विना ॥
स्थितं शान्तसमानो तु आश्रयेचाक्षये सति। चालनाद्विधिनिर्मुक्ताद्दोषस्संचालकस्य यत् ॥
तद्धोमार्चनदाने तु स्थापनात् प्राक्समं नयेत्। सुस्थिरं वाचलं बिम्बं तत्र कृत्वा निवेश्य च ॥
गोभू[5]सुवर्णदानं च यथाशक्त्या समाचरेत्। धातुमृच्छैल[6]दारूत्थं वस्त्रादिष्ववतारितम् ॥३६॥
अकस्माद्भगवद्बिम्बं धत्ते वै म्लाननां यदि। व्यत्ययात्तत्क्रियालोपादकालपरिपूजनात् ॥ ३७ ॥
महद्भयं सराष्ट्रस्य पूजकस्य जनस्य च। तस्मान्मन्त्रवरं साङ्गं तन्त्रसंशोधितं च यत् ॥ ३८ ॥
कलशे मण्डलेऽग्नौ तु समाहं तर्पयेत् क्रमात्। हेमन्तशैशिरे काले दैवीमर्चां तु शैलजाम् ॥३९॥
स्नापयित्वार्चयित्वा च विधिदृष्टेन कर्मणा। सुवस्त्रवेष्टितां कृत्वा गव्येन हविषा ततः ॥ ४० ॥
आपीठात् पिण्डतां नीत्वा रञ्जयेच्चन्दनादिना। पत्रच्छेदमयैः पुष्पैस्सिताद्यै रपि(ः पिचु)निर्मितैः॥
नानादेशोद्भवैश्चान्यैस्सितैः [7]पीतादिकैः शुभैः। [8]छायामारुतसंशुष्कैः हरितैर्भेदसंयुतैः ॥ ४२ ॥
पूजां यथोदितां कृत्वा भूषणैर्विविधैस्सह। वाससा स्थूलशुक्लेन कार्पासेनावकुण्ठ्य च ॥ ४३ ॥
कुङ्कुमेनामलेनैव कम्बलेनाविकेन वा। सितेन सुघनेनैव अभुक्तेनाहतेन च ॥ ४४ ॥

१. **क-ख**—आधारार्चशिखावधि २ **ग-घ**—मलीयसे ३. महायागपूर्व इति स्यात्किम् ४. **क-ख**—श्यासने पुर ५ **क-ख**—सुवर्णभेद च ६. **क-ख**—दारुत्थ ७. **ग-घ**—पा-गादिकै. ८. **क-ख**— हरितै. भ . सयुतै.

शीतकाले ह्यतीते तु [1]अपनीय ज्य[1]कम्बलम्। पावनार्थं द्विजेन्द्राणां नृपाणां भावितात्मनाम् ॥
भक्तानां नागरादीनां यच्छेत् संप्रार्थितं क्रमात्। भूतयेऽशुभशान्त्यर्थं रक्षार्थं [2]प्रार्थनं क्रमात् ॥
विजयेनापमृत्यूनां व्याधीनामुपशान्तये। प्राप्ते निदाघकाले तु प्रत्यहं शीतवारिणा ॥ ४७ ॥
यथोक्तेन विधानेन कुर्यात् [3]स्नानमधिक्रमात्। मसूरमाषचूर्णेन रजनीशालिजेन च ॥ ४८ ॥
समुद्वर्त्य च संक्षाल्य हविषाभ्यञ्ज[4]नादिना। वाससा निर्मलं कृत्वा चन्दनेन सितेन च ॥४९॥
शीतकेनोदकेनाथ क्षालनीयं तदालयम्। संमार्ज्य गोमयेनैव कृत्वा बाह्योपलेपनम् ॥ ५० ॥
विकीर्य पत्रपुष्पाणि कुमुदोत्पलपङ्कजान्। जलार्द्रैस्तालवृन्तैस्तु वीजयेद्बिम्बमाच्युतम् ॥ ५१ ॥
स्तुत्वा च विविधैस्स्तोत्रैस्स्वर्णाचतरेण तु। ततः प्रदक्षिणीकृत्य द्विचतुस्संख्ययाब्जज ॥ ५२ ॥
नैकं त्रिपञ्चसंख्यं च गणनाविषमं च यत्। यतस्समो हि भगवान् देवस्सर्वस्य वै हरिः ॥५३॥
सन्यासी दण्डवत्कुर्यात् प्रणिपातं च सर्वदिक्। प्रदक्षिणसमोपेतं बहुवोत्थाय चाग्रतः ॥ ५४ ॥
विहितं स्नातकादीनामन्येषामेवमेव हि। सहान्तःकरणेनैव भक्तियुक्तेन चेतसा ॥ ५५ ॥
नतपृष्ठशिरोजानुललाटतटहृत्करः। गृहस्थ आचरेन्नित्यं प्रणामं सप्रदक्षिणम् ॥ ५६ ॥
स्मरन्नष्टाक्षरं बुद्ध्या असकृत् वितने क्षितौ। सङ्कटे सति भूभागे भगवत्यग्रतः स्थितः ॥ ५७ ॥
यथा तु भक्तितः कुर्याद्बध्वा तु करसंपुटम्। हृद्देशे [5]मूर्ध्नि कम्पैस्तु सह सर्वेश्वरं स्मरेत् ॥५८॥
कृतेनानेन विधिना स्वशक्त्या बलिनेन वा। यथेष्टं फलमाप्नोति पुमान् भक्तिक्रियापरः ॥ ५९ ॥
निष्कामश्शाश्वतं स्थानं प्राप्नुयात् गुरपूजितम्। भक्तैस्संपूजितं भक्त्या ये पश्यन्ति जगत्प्रभुम् ॥
श्रद्धया चानुमोदन्ते तेऽपि तत्फलभागिनः। संसारक्षयमक्षय्यं कर्मिणां क्षयमेति च ॥ ६१ ॥
द्विविधेन ह्युपायेन नान्यथा तु कथञ्चन। [6]समन्त्राच्च क्रियाकाण्डात् संपूर्णात् पञ्चलक्षणात् ॥
सम्यग्बोधपरिज्ञानात् भगवद्भक्तिरञ्जनात्। कर्मणा मनसा वाचा यो नित्यं भगवन्मयः ॥ ६३ ॥
शासने त्वधिकाराणामवतिष्ठेत्तु तत्त्वतः। पारम्यं वेत्ति शास्त्रस्य मोक्षदस्याच्युतस्य च ॥ ६४ ॥
सोऽचिराच्छुद्धिमाप्नोति दुष्कृतात् पूर्वसञ्चितात् ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां आयतनविचारो नाम
सप्तत्रिंशोऽध्यायः ॥
(समुदितश्लोकसंख्या ६४॥)

१. क-ख—अपनीय कबलम २. ग-घ--प्रार्थनात् भयात्, प्राक्तनादिति साधु
३. ग-घ—स्नामर्याम ४. क-ख—भ्यञ्जनादिषु ५. ग-घ—मर्धकपैस्तु ६. क-ख—समन्ताव

# अथ अष्टात्रिंशोऽध्यायः

**पौष्कर उवाच—**

आकाराणामनन्तानां क्षितौ क्षेत्रेपु वर्तिनाम्। कालेनान्तर्हितानां च तेषां भूयो निवेशनम्॥
कुर्वन्ति विबुधास्सिद्धास्स्मृत्वा स्मृत्वा तदाकृतिम्। असत्यैर्मर्त्यधर्मस्थैः कथं कार्यं निवेशनम्॥
स्वकुलोद्धरणार्थं च कीर्त्यर्थमपि चात्मनः॥

**श्रीभगवानुवाच—**

साङ्गेनाराध्य मन्त्रेण ज्ञानध्यानान्वितेन च। भवनार्चनयुक्तेन सजपेन तु पौष्कर॥ ३॥
[1]निवेशनं च मन्त्राणां द्रव्यजास्वाकृतीपु यत्। विहिता सा प्रतिष्ठा वै मन्त्रिणामाप्तलक्षणा॥
मन्त्रसिद्धिप्रदं शश्वदन्ते मन्त्रं पदं द्विज। मन्त्रज्ञानामसामर्थ्यात् मृतानामथ पौष्कर॥ ५॥
अनुग्रहधिया चार्यप्रेरितैस्तत्सुतादिभि। यथोदितेन विधिना तन्मन्त्रेण महामते॥ ६॥
सह ऋक्सामसंज्ञैस्तु मन्त्रैस्स्वव्याप्तिसंयुतैः। चेतसा सावधानेन व्यवहारयुतेन च॥ ७॥
क्रियते मध्यमा सा वै प्रतिष्ठा स्वल्पभोगदा। पदमात्रं च देहान्ते संयच्छत्यमलं शुभम्॥८॥
केवलैश्श्रुतिमन्त्रैस्तु यथावसरलक्षणैः। धारणा भगवद्ध्यानमन्त्रन्यासेन वै सह॥ ९॥
देशिकेन्द्रेण वै कार्या भक्तानां परमेश्वरे। सामान्या तु परिज्ञेया यज्ञवत् स्वर्गभोगदा॥ १०॥
ऐहिकामुष्मिकं मान्त्रं फलं यत्कमलोद्भव। विज्ञेयं देशिकाधीनं लोकेऽस्मिन् लोकपूजित॥११॥
तस्माद्यस्तत्त्वविज्ञानी शास्त्रज्ञस्सत्क्रियापरः। षडध्वविदसंकीर्णस्सर्वभावेन पौष्कर॥ १२॥
तेन प्रतिष्ठितो देवश्चलो वा सुस्थिरो बृहत्। तत्र संरोधितो मन्त्रस्सम्यगब्जदलेक्षण॥ १३॥
चलस्थिरविभागेन भवेत् सन्निहितस्सदा॥

**पौष्कर उवाच—**

देव कालान्तरेणैव द्रव्यमेति क्षयात्मताम्। अप्रत्यक्षो हि मन्त्रात्मा लोकानां लोकपूजित(:)॥
प्रतीक्ष्यते किं तत्त्वज्ञैरत्र मे संशयो महान्॥

[1]. ग-घ—निवेशनं यन्मन्त्राणाम्

**श्रीभगवानुवाच—**

कर्मबन्धात् पृथक्कृत्य देवो देशिकमूर्तिकः। नानाभक्तिप्रपन्नानां तथा नानाफलार्थिनाम् ॥१५॥
कर्मिणां कीर्तिशक्तिर्या विश्वमन्दिरपूरकी। निरस्तदोषा महती तामाक्रम्य महामते ॥ १६ ॥
दिव्यमन्त्रस्वरूपेण वृत्तिद्रव्यमयेषु च। उपायेष्वनुविद्धासु भूत्या शक्तिमरीचिभिः ॥ १७ ॥
तिष्ठत्यनुग्रहार्थं च सा प्रतिष्ठेति कीर्तिता। एवं द्रव्यमयो यत्र सन्निवेशोऽब्जसंभव ॥ १८ ॥
उभयानुग्रहं नित्यं करुणाभक्तिलक्षणम्। प्रतिष्ठाख्यं हि तत्कर्म भुक्तिमुक्तिफलप्रदम् ॥ १९ ॥
तच्च सद्ब्रह्मनिष्ठानां द्विजानामात्मसिद्धये। कर्तव्यत्वेन वै नित्यं [1]निषिद्धममलेक्षण ॥ २० ॥
तद्दोषाच्च यतस्तेषां निस्तारो हि न विद्यते। देहपातादते नान्यस्तत्पातस्त्वतिदोषकृत् ॥ २१ ॥
आदावेव हि तत्तस्मान्नाचर्तव्यं कृतात्मभिः। तत्कर्मप्रतिपन्नानां चतुर्णामपि तैस्सदा ॥ २२ ॥
कार्यं सम्यक् प्रतिष्ठानामनुग्रहधिया सदा। नोपरोधस्वभावेन न लोभेन न मानतः ॥ २३ ॥
प्राप्ते त्वाकस्मिके दोषे ध्वजभङ्गादिकेऽब्जज। भक्तानामनुकम्पार्थं दिव्यैर्मन्त्रैर्बलादिकैः ॥ २४ ॥
द्वादशाक्षरपूर्वैस्तु मोक्षैकफललक्षणैः। संपूजितैर्हुतैर्जप्तैः कुरुते निष्कृतिं सदा ॥ २५ ॥
तस्मात्सर्वप्रयत्नेन कर्तव्येऽस्मिन् द्विजोत्तम। त्रैविद्यैः क्षत्रियैर्वैश्यैश्शूद्रैर्वा भगवन्मयैः ॥ २६ ॥
सकामैरथ निष्कामैर्मन्त्राराधनतत्परैः। स्नातकैर्भगवद्बिम्बस्थापनार्थं सदैव हि ॥ २७ ॥
पुरा प्रसादनीयं च प्रार्थनापूर्वकं तु वै। अधिकारपदस्थं च द्विजेन्द्रः पाञ्चरात्रिक ॥ २८ ॥
वेत्ता यो व्यूहपूर्वस्य व्यक्तस्य परमात्मनः। सोऽन्येषां भगवद्बिम्बस्थापनेऽधिकृतस्सदा ॥ २९ ॥
अनुग्रहप्रतिष्ठा चाप्यधिकारनिरूपणा। अनन्यैरुपपन्नानां भक्तानां कार्यमुच्यते ॥ ३० ॥
अनन्याः पञ्चकालज्ञाः व्यतिरिक्ता न ये पुरा। प्राक्सृष्टेस्तन्मुखोद्भूता द्विषट्काध्यात्मचिन्तकाः ॥
चतुर्व्यूहपरत्वेन येषां वै प्रभवाप्यये। कर्मणामपि संन्यासं कुर्वन्त्यध्यक्षतः क्रमात् ॥ ३२ ॥
अतोऽन्यो दुर्लभतरः पारम्यं यस्य तं प्रति। प्रमेयनिष्ठा शुद्धा च स्फुटा तत्कर्मणि स्थितिः ॥
परत्वमन्यमार्गस्था नेच्छन्ति च परस्परम्। य इच्छन्ति विभोस्तेषां स्थितिर्नास्ति तदाकृतेः ॥
मुक्ताधिकारिणं तं वै लब्धलक्षमकृत्रिमम्। पञ्चकालरतं शुद्धं तन्त्रसिद्धान्तपारगम् ॥ ३५ ॥
तेन वै श्रुतिमन्त्राणां त्रयाणामपि चोदना। प्रतिकर्मणि वै कार्या यथावसरलक्षणा ॥ ३६ ॥
यस्मादब्जसमुद्भूत मण्डलादिषु वृत्तिषु। स्वार्थता वा परार्थेन सदाराधनकर्मणि ॥ ३७ ॥
नित्यसिद्धे तदाकारे तत्परत्वेऽपि पौष्कर। यस्यास्ति सत्ता(त्त्वा?)हृदये तस्यासौ सन्निधिं भजेत् ॥
मन्त्ररूपी जगन्नाथः परमात्माऽच्युतः प्रभुः। अस्यौत्सुक्यं विना विप्र मनसः प्रीतये त्वपि ॥३९॥

१. सर्वत्र—निषिद्धममलेक्षण, इत्येवास्ति

कामास्यं वा कीर्त्यर्थं तस्य तद्विहितं द्विज। साधनेन प्रतिष्ठानां प्रासादे स्वगृहे तु वा ॥४०॥
इति सम्यक् समाख्यातं मुख्यकल्पमतः परम्। अनुकल्पं यदत्रान्यत्तत्समासान्निबोधतु ॥४१॥
प्राक्प्राप्तदीक्षैर्विधिवत्त्रयीधर्मस्थितैर्द्विजैः। नित्याराधनसक्तैस्तु भक्तैर्भागवतैर्विभो ॥ ४२ ॥
धारणाध्यानपूर्वैस्तु लब्धलक्षैस्तु कर्मणाम्। मन्त्रमण्डलकुण्डास्त्रमुद्रादीनां कृतश्रमैः ॥ ४३ ॥
षडध्वव्याप्तिनिष्ठैस्तु त्यागशीलैरमत्सरैः। अनुज्झितकमैर्दक्षैस्स्वकर्मपरिपालकैः ॥ ४४ ॥
सत्कीर्तिप्रथितैर्लोके तथाऽकीर्तिबहिष्कृतैः। प्रतिष्ठां लभते कर्ता तैः प्रतिष्ठापने कृते ॥ ४५ ॥
निषिद्धमरविन्दाक्ष अतोऽन्येषां हि सर्वदा। महामहं प्रतिष्ठाख्यं तथान्यं मिश्रयाजिनाम् ॥४६॥

**पौष्कर उवाच—**

देव व्यामिश्रयाजित्वं प्रतिषिद्धं पुनः पुनः। प्रागुक्तानां च यागानां द्रष्टुमङ्गीकृतं च यत् ॥४७॥
तन्मात्रसंशयं जातं छेत्तुमर्हसि साम्प्रतम् ॥

**श्रीभगवानुवाच—**

सत्यमेतन्महाबुद्धे यथा मच्चोदितं त्वया। किन्तु क्रियान्तरे प्राप्ते न दोषस्त्वधिकारिणाम् ॥
यस्मात्सर्वपरत्वं हि तेषामस्त्यच्युतं प्रति। तदाश्रितत्वाद्देवानामन्येषां पूजनात्तु वै ॥ ४९ ॥
न दोषो हि यथा लोके भ्रातृभृत्यगणस्य च। माननाद्धर्मपत्नीनां समक्षाद्वा परोक्षतः ॥ ५० ॥
ये पुनर्लोकधर्मस्थास्समबुद्धिपदोज्झिताः। भगवत्यविशेषज्ञा नित्यं कार्यवशेन तु ॥ ५१ ॥
वाङ्मात्रेण परत्वं वै सर्वेषां प्रवदन्ति हि(वै)। अधिकारं विना येऽत्र प्रेरिता देवतार्चने ॥
एवं मार्गस्थितैर्लोभात्परिज्ञाय तदाशयम्। व्यामिश्रयाजिनस्ते वै पातित्यपदसंस्थिताः ॥ ५३ ॥
नयन्ति नरकं नूनमेवमेव[1]प्रवर्तिनः। न तु सद्भक्तिपूतानां वासुदेवरतात्मनाम् ॥ ५४ ॥
कदाचित्तत्कृतं दोषं विदधाति च खण्डनाम्। आस्तां तावन्महाबुद्धे कर्तव्यं भक्तिपूर्वकम् ॥
भक्त्या वै मन्त्रनिष्ठानां [2]तन्मन्त्रो जपकर्मणि। [3]वर्णव्यत्ययमापन्नो लुप्तस्तेन स्वरेण वा ॥५६॥
स्वरादिनाधिकं चैव मन्त्रैकार्थप्रदस्सदा। अचिरात्तत्प्रयोक्तॄणां तथापि कमलोद्भव ॥ ५७ ॥
अतिभक्तिप्रभावाच्च वाञ्छितं संप्रयच्छति। यस्मात्सद्भक्तिपूतानां प्रपन्नानां क्रमं विना ॥ ५८ ॥
प्रसादमेति मन्त्रेशस्त्वचिराद्भावितात्मनाम्। किं पुनर्वै क्रियाज्ञानसम्पूर्णानां तु पौष्कर ॥ ५९ ॥
श्रद्धाभक्तिपराणां च बोधितानां च देशिकैः। तस्मात् सम्यक् प्रसन्नानां शासनेऽस्मिन् महामते ॥
कार्यं दीक्षादिकं सर्वं भक्तानां भक्तवत्सलैः। मामसंप्रतिपन्नो यो मत्प्राप्त्यर्थं करोति च ॥६१॥

१. क-ख—प्रवर्तिनाम् २. क-ख—तन्मन्त्रजपकर्मणि ३. क-ख—वर्णव्यक्त ..पन्नो

मन्दमध्यमभक्तानां कामभोगरतात्मनाम्। भविनां [1]मामकी दीक्षा मोहाद्वा स्थापनादिकम् ॥
सनयत्यचिरात्तस्य भक्तिबीजेन वै सह। स्वकर्मकर्मतन्त्रं च सिद्धयश्च पराङ्मुखाः ॥ ६३ ॥
इहैव शीघ्रमब्जाक्ष देहान्ते [2]गतसद्गतिः। घोरं प्रयाति नरकं भुक्त्वैवं दुष्कृतं महत् ॥ ६४ ॥
भगवन्मन्त्रमाहात्म्यात्तद्व्यापारवशात्तु वै। संसर्गोत्थमघं याति प्राक्संस्कारवशात् पुनः ॥ ६५ ॥
चीर्णदुश्चरितो भूयः प्राप्नुयान्मानुषीं तनुम्। प्रयत्नमाचरेच्छुभ्रं येन शान्तिमवाप्नुयात् ॥६६॥
साहङ्कारं तमाचार्यमभक्तं नाधिकारिणम्। प्राप्नोति नूनं स लभेत् सकामं नारकीं स्थितिम् ॥
सर्वगस्त्वपि मन्त्रात्मा सर्वानुग्रहकृ(त्) द्विज। यद्यप्येवं हि तत्रापि न भजेत्तत्र सन्निधिम् ॥
प्रतिमामर्च्य देहान्तं [3]नूनं मां न विशत्युत। तत्क्षणाद् भूतवेतालाः कुर्वन्त्यर्थादिकक्षयम् ॥
अन्यदर्शनसंस्था ये नानुग्राह्या अतोऽब्जज। नापास्यो हि तथाऽऽचार्यस्संसारभयभीरुणा ॥७०॥
सम्यग्भक्तिपरेणैव डम्भरागोज्झितेन च। अत एव महाबुद्धे प्रतिष्ठाख्यं मखोत्तमम् ॥ ७१ ॥
निर्वर्तनीयमामूलात् वैष्णवानां हि वैष्णवैः ॥

**पौष्कर उवाच—**

चतुर्णां ब्राह्मणादीनां भगवद्भाविनां विभो। हितार्थं ज्ञातुमिच्छामि बिम्बापादनमेव च ॥ ७२ ॥

**श्रीभगवानुवाच—**

देवार्थं वनयात्रार्थं कुर्याद्रक्षादिके शुभे। प्राप्ते वनभुवो देशे कृते तद्देवतार्चने ॥ ७३ ॥
शाश्वतं वनपर्यन्ते पाषाणं वा हरेद्द्रुमम्। चेतसा सुविशुद्धेन भगवद्यागपूर्वकम् ॥ ७४ ॥
सह तत्पञ्चरात्रज्ञैस्तथा ऋक्सामपूर्वकैः। भक्तैः क्रियापरैस्स्वच्छैर्विनीतैश्शिल्पिभिस्सह ॥ ७५ ॥
संयतैर्दीक्षितैश्चापि वृक्षाद्यं प्राक् समाहरेत्। पाषाणं धातवो मृद्वा मृदुगर्भास्तु संचयेत् ॥७६॥
वनभूमिवनोत्थानां धातूनां मृत्स्वरूपिणाम्। संग्रहं विहितं स्वल्पं मेलनीयं च तद्द्विजे ॥७७॥
प्रतिमापादनार्थं च महामृत्संचये शुभे। धातुद्रव्यमयानां च मृद्गर्भाणां हृदा सह ॥ ७८ ॥
तारहाटकताम्रोत्थरेणूनां कमलोद्भव। विहिता योजना नित्यं मन्त्रमृद्दाहशान्तये ॥ ७९ ॥
अङ्गारकाष्ठपर्यन्तं वनान्तादुपयुज्यते। तत्सर्वं विधिपूर्वं तु सिद्धिकृत् स्यात् समाहृतम् ॥ ८० ॥
एवमादाय तु पुरा वृक्षपूर्वं वनावनेः। तत्र वा स्वगृहोद्देशे बिम्बापादनमाचरेत् ॥ ८१ ॥
विधिवत् कर्मशालायामाज्ञप्तं गुरुणा यजेत्। शिल्पिस्वामिस्वकं पश्चात् स्वोत्थितेन क्रमेण तु ॥
बुद्धिमान् यजमानो वा आरम्भादेव सन्त्यजेत्। सर्वोत्तमेऽस्मिन् व्यापारे भावं राजसतामसम् ॥

१. ग-घ—मामकीं दीक्षाम् २. ग-घ—गतसन्ततिः ३. क-ख—नूनमाने विशत्युत

नूनं कलुषबुद्धीनां न तत्संपद्यतेऽब्जज। यद्येव परिपूर्णं वा विघ्नदोषशताकुलम्॥ ८४ ॥
कर्मणा प्राक्तनेनैव सात्त्विकस्यापि पद्मज। घटमानेऽङ्गवैकल्यं जायते दौर्मनस्यकृत्॥ ८५ ॥
अथ तत्र विधानं यद्विहितं तन्निबोध मे। वर्णकैश्चित्रबिम्बस्य गलितेनाम्भसादिना॥ ८६ ॥
विहितावयवानां च योजना गन्धभावितैः। सितरक्तादिकै रागैः पावनैरस्त्रमन्त्रितैः॥ ८७ ॥
मृदा मृन्मयबिम्बानां मध्वाज्यक्षीरमिश्रया। कौशेयचूर्णयुतया सुवर्णोदकसिक्तया॥ ८८ ॥
दारुजस्य तु संजाते भेदे भङ्गे तु वाऽब्जज। योजनावस्त्रशस्त्राभ्यां विहिता शान्तिपूर्विका॥
सर्वदा विहितं त्यागमश्मजानां बृहत्क्षते। क्षते हीषत्क्षते जाते सति रत्नशलाकया॥ ९० ॥
सहेमया च विहितं घृष्टशाणस्य घर्षणम्। क्षतसाम्ये कृते चैव प्रतिमा स्याद् गुणावहा॥९१॥
स्थापनं सक्षतानां च करोति मरणं ध्रुवम्। गुरोश्च (स्स) यजमानस्य शिल्पिश्रेष्ठस्य देशिनाम्॥
क्षतमिन्द्रियचक्रस्थं कर्तुर्भवति दोषदम्। [1]आकर्णान्नाभिपर्यन्तमग्रस्थं पुत्रमृत्युकृत्॥ ९३ ॥
पश्चाद्द्वये तु जायाया. पृष्ठाङ्गे भ्रातृहानिदम्। आकटेः पायुपर्यन्तं भगिनीनां क्षया भवेत्॥
ऊरुमूलाच्च जान्वन्तं यत्र यत्र भवेत् क्षतम्। धनधान्यपशूनां च क्षयकृच्चाचिरेण तु॥ ९५ ॥
जानोः पादतलान्तं च भृत्यवर्गस्य दोषदम्। सर्वेषामनुकम्पार्थमात्मनश्चापि कीर्तयेत्॥ ९६ ॥
कर्ता कमलसंभूत क्षतमक्षततां नयेत्। क्रियमाणस्य बिम्बस्य मधूच्छिष्टोज्झितस्य च॥ ९७ ॥
जातेऽवयववैकल्ये ह्यनुकल्पमिदं शृणु॥

विग्रहारम्भे क्षतदोष.

भगवत्प्रतिपत्तौ तु जातायां सति तत्र च। तत्त्यागं च विनाशं च विरुद्धं ह्युत्तरोत्तरम्॥९८॥
बृहद्बिम्बाद्यपेक्षायां द्रव्यत्यागं हि नोचितम्। हेमादीनां तु धातूनामुत्कृष्टानां विशेषत॥९९॥
जातेऽवयववैकल्ये शान्त्यर्थं यागमाचरेत्। भूयस्संपूर्य तस्याङ्गं विशेषविधिनाऽब्जज॥ १०० ॥
केवलं हेमहैमस्य यथालाभं क्षते क्षिपेत्। सर्वं रत्नमयं चूर्णं द्वादशाक्षरमन्त्रितम्॥ १०१ ॥
एतत्पूर्वं तथा चान्यधातूत्थनानां महामते। ईषत्सुवर्णमिश्रेण पूरयेत्स्वेन धातुना॥ १०२ ॥
यदि वै विधिनानेन क्रियमाणेन पौष्कर। न भवेच्चित्तनैर्मल्यमाचर्तव्यं क्रियान्तरम्॥ १०३ ॥
संमतेन गुरूणां च प्राग्वदर्चनपूर्वकम्। आवीक्षयन्ति वै साक्षात् नयेच्चामूर्ततां पुनः॥१०४॥
आपाद्यमपरं तेन बिम्बद्रव्येण चाक्षतम्। सर्वावयवसंपूर्णं मनोहारि विलक्षणम्॥ १०५ ॥
संभवे सति तच्छश्वद्विना कालान्तरेण तु। यस्मात् कमलसंभूत संकल्पादेव शाश्वतम्॥१०६॥

[1]. **क–ख–ग–घ**—आकर्णात् इत्यस्ति 'आकण्ठात्' इति स्यात्

स्थानमासादयन्त्याहुस्तस्य पूर्वपितामहाः । प्रपितामहपूर्वास्तु विवदन्ति परस्परम् ॥ १०७ ॥
प्रायशो मुक्तदोषास्तु सन्तानेन कृता वयम् । यास्यामो वासुदेवत्वं यदि चेच्छति तत्पुनः ॥
ततश्शीघ्रतरं कार्यं प्रतिष्ठाख्यं मखं महत् । प्रीतये चातुरात्म्यानामनूनां तत्त्ववेदिनाम् ॥ १०९ ॥
ऋषीणां विबुधानां च पितॄणां पद्मसंभव । मानवानां च भूतानां त्रैलोक्योदरवर्तिनाम् ॥११०॥
भिन्नागमोत्थिताद्भग्नबिम्बाद्धातुमयाद्द्विज । कृतबिम्बान्तरं कुर्यादेवमामुष्मिकादिकम् ॥ १११ ॥
अतस्तदेव विहितं तद्भेदं वा तदन्वयात् । लोकद्वयोद्भवं येन कर्ताप्नोति शुभं महत् ॥ ११२ ॥
संस्थितानां स्वदेशे च विहितानां धनादिना । द्रव्यप्रमाणं कर्तव्यं पूर्वैर्भेदैर्विभाजितम् ॥ ११३ ॥
योऽर्थे वै बान्धवादीनां कुर्याद्वै प्रतिमां विभोः । सर्वदोषविनिर्मुक्तो विष्णुलोकं स गच्छति ॥
स्वयंव्यक्तं तथा सैद्धं विबुधैश्च प्रतिष्ठितम् । ऋते विप्रादिकैर्विप्र देवबिम्बं निवेशितम् ॥११५॥
विन्यस्तं तत्र यन्मन्त्रमङ्गमन्त्रैस्सलाञ्छनैः । सह प्रयाति स्वं स्थानं बिम्बं त्यक्त्वा क्रिया विना ॥
शप्त्वाचार्यं तथा कर्त्रा यदर्थं च प्रतिष्ठितम् । पिशाचभूतवेतालास्सयक्षाश्चैव राक्षसाः ॥११७॥
स्थानं च पीठं बिम्बं च ध्वजान्तं संश्रयन्ति च । एवं ज्ञात्वा महाबुद्धे तथा कार्यं शुभेप्सुना ॥
प्रतिष्ठितस्य बिम्बस्य यथा सम्पद्यते शुभम् । पूजाहोमप्रदानैश्च वादित्रैस्सह गीतकैः ॥ ११९ ॥
स्वगृहे चलबिम्बस्य पुष्पधूपादिकीं स्थितिम् । सर्वकालं यथाशक्त्या भक्तैः कार्या शुभाप्तये ॥
यावज्जीवावधिं कालं तत्त्वमन्त्रैरधिष्ठिते । त्रैकाल्यं चलबिम्बे तु मन्त्रं मन्त्री स्वकं यजेत् ॥
द्वादशाक्षरपूर्वं वा सामान्यं गुरुणा पुरा । न्यस्तं संप्रतिपन्नानां भक्तानां हितकाम्यया ॥ १२२ ॥
संहृत्यैवं यथाशास्त्रं भक्त्या भोगफलाप्तये । निवेद्य मात्रासहितं स्वगुरोर्भवशान्तये ॥ १२३ ॥
तदङ्घ्रिगो करौ कृत्वा विज्ञाप्य नतमस्तकः । त्वया देहपरित्यागकाले योग्यस्य वा मम ॥१२४॥
न्यस्तव्यं वैष्णवैः पूर्णं मदनुग्रहकाम्यया । देहसन्यासकाले तु स्वशिष्यस्यानुकम्पया ॥ १२५ ॥
एवं हि गुरुणा कार्या योग्यस्यान्यस्य चोदना । तेनाप्यन्यस्य देहान्ते संयतस्य महामते ॥१२६॥
सत्क्रियस्य च भक्तस्य तदभावान्महामते । स्थितिर्वायतने विप्र विधेया गृहमेधिना ॥ १२७ ॥
असम्पत्तेस्तु भोगानामन्नाद्यं संपरित्यजेत् । विभोराराधनार्थाय शुचिस्स्नातः प्रसन्नधीः ॥ १२८ ॥
मूर्ध्नि दत्त्वाम्बुनार्घ्यं प्राक् सपुष्पं केवलं तु वा । अम्बुपूजेयमाद्या वै भोगानां मूलमेव हि ॥
यतो रसमयास्सर्वे तद्रसः परमेश्वरः । नारायणाख्यो भगवांस्तदर्घ्यं चोत्तमं स्मृतम् ॥ १३० ॥
पादयोस्तत्पुनर्दद्याद्भोगजालं यतोऽखिलम् । स्वकारणपुटान्तस्थमानन्त्यमुपयाति च ॥ १३१ ॥
अचिरादेव भक्तानां मन्त्रिणां मन्त्रयाजिनाम् । क्ष्मानलाम्बरवाय्वव्यविभवेनापि यद्यपि ॥ १३२ ॥

पुष्पधूपादयो भोगा मन्त्रान्ताः परिकीर्तिताः। तत्रापि रसमूला वै व्यक्ति[1]स्तेषां[1] तदात्मिका ॥
स्थितमानन्दभावेन स्वादीनां चैव तद्रसम्। सर्वस्सर्वत्र वै येन रसिको दृश्यतेऽब्जज ॥ १३४ ॥
इत्येवं मानवीयानामर्चनां कमलोद्भव। चलानामचलानां च संस्थानं समुदाहृतम् ॥ १३५ ॥
मुक्त्वा द्विजेन्द्रकर्मार्चामन्यां वै वैष्णवीं चलाम्। नार्करुद्रेन्द्रसंस्थानां संस्थानं भगवद्गृहे ॥
विहितं प्रतिमानां च प्रमादजनकं च तत्। न मूर्त्यन्तरदेवानां मूर्तयो व्यूहलक्षणा ॥ १३७ ॥
[2]भुवनान्तर्गताः कार्या विधिना सुस्थिरेण तु। प्रादुर्भावान्तराणां च प्रादुर्भावास्तथैव च ॥
निषिद्धं भित्तिगेहेषु उच्चस्थेषु निवेशनम्। देवानां भवनाद्ग्रामे उच्छ्रायामसमं विना ॥ १३९ ॥
यथोक्तं मुख्यकल्पाद्वै हेत्वपेक्षावशाद्भुव। व्यत्ययं कर्तुमिच्छेद्यश्श्रद्धाभक्तिपुरस्सरम् ॥ १४० ॥
पूजाहवनपूर्वं च आज्ञामादाय दैशिकात्। तथैव च समूहोत्थां भुवनान्तरवर्तिनाम् ॥ १४१ ॥
सुराणामर्चितानां च कदाचिन्न विरोधकृत्। अन्यथा क्ष्मामरणां च भक्तिभागानुवर्तिनाम् ॥
आदृष्टविग्रहाणां च पीठानामशुभं भवेत्। एवमायतनस्थानां गृहीतान्तरवर्तिनाम् ॥ १४३ ॥
विभवव्यूहमूर्तीनां मन्त्रमूर्तेऽर्चने गतिः। विहितं वैष्णवानां च विप्रादीनामुपार्जनम् ॥ १४४ ॥
आराधनार्थमादौ तु मन्त्रान्तमखिलं तु वै। मुख्यत्वेनानुकल्पे हि यदन्यस्थण्डिलादिकै ॥
ऊनमष्टाष्टकाद्यापि भोगजालादसंभवे। सर्वेषामेव भोगानां कर्मणां कमलोद्भव ॥ १४६ ॥
ऊनाधिकविशालार्थी भगवद्यागलक्षणा। विधेया परमा शान्तिस्सततं च शुभार्थिना ॥ १४७ ॥

**पौष्कर उवाच—**

सर्वदोषप्रशमनी यथा कार्याथ देशिकैः। शान्तिर्मान्त्री परा देव तामादिश जगत्पते ॥ १४८ ॥

**श्रीभगवानुवाच—**

सर्वदोषप्रशमनं भक्तानां भावितात्मनाम्। हितं पूर्वोदितं चक्रं पङ्कजं वेसरवर्जितम् ॥ १४९ ॥
यस्माद्वा स्थाप्य पीठं च विष्वक्सेनान्तमर्चनम्। नोपयुज्यति वै तत्र ऋते सर्वेश्वरार्चनात् ॥
व्यतिरिक्ता निराशानामम्बरस्थाम्बरेषु च। विधिज्ञेन स्थितिः कार्या क्वचिदर्चापयेत्ततः ॥१५१॥
पीठमश्रान्वितं कृत्वा पुरं त्वाचरणान्वितम्। तत्र पूर्वोदितन्यासं कुर्यादाधारपूर्वकम् ॥ १५२ ॥
स्वदेहवत्तमालक्ष्य स्मृत्वाध्यक्षप्रकाशितम्। तद्वाचकेन मूर्तेस्तु चित्सामान्येन सांप्रतम् ॥१५३॥
यथेह च सवेद्यादि स्मृत्वा युक्तस्वविग्रहे। न हि साङ्कर्यदोषोऽस्ति अध्यक्षाधिष्ठिते सति ॥

१. क-ख—व्यक्तिस्ते...तदा २. क-ख—. स्वनान्तर्गता

तथैवाधारशक्त्यादि विष्वक्सेनान्तमर्चनम्। निर्दोषं मण्डले किन्तु भगवच्छब्दपूर्वकम् ॥१५५॥
सर्वस्य नाम चोच्चार्य तदन्ते त्वात्मने नमः। एवमासनदेवानां धर्मादीनां समर्चनम्॥ १५६ ॥
स्थानभेदस्थितानां च कृत्वा तदनु पौष्कर। मण्डले मन्त्रमूर्तीनामाहूतानां समर्चनम्॥ १५७॥
संपूर्णं शान्तये तत्स्यादसंपूर्णमशान्तये। अतस्स्वशक्त्या शान्त्यर्थे सदान्नं वह्नितर्पणम्॥ १५८॥
भगवद्यागपूर्वं तु सर्वत्र विहितं सदा। तच्च ज्ञानानुविद्धेन कर्मणार्घ्यादिकैस्सह॥ १५९ ॥
सम्यक्कृतो दयी? ज्ञत्वा सद्रव्यं संस्थितं शुभम्। यथा बीजाङ्कुराभ्यां तु अनन्यत्वमनादिमत्॥
फलाप्तये फलेप्सूनां जगत्यस्मिंस्तथाब्जज। अन्योन्यानुगतत्वं हि संस्थितं ज्ञानकर्मणोः॥ १६१ ॥
ज्ञातव्यमाविवेकाच्च बुध्या तु सुविशुद्धया। भगवद्वासुदेवाख्यपरस्य परमात्मनः॥ १६२ ॥
अनुग्रहार्थमुल्लासं ज्ञानकर्मसमन्वितम्। मन्त्रमुद्रासमेतं च कर्मिणामनुकम्पया॥ १६३ ॥
तत्त्वशक्तिसमोपेतं ज्ञानाद्यैरन्वितं गुणैः। अणिमाद्यष्टकेनापि सिद्धिबीजेन वै सह॥ १६४ ॥
शान्तये सर्वदोषाणां शश्वत्परपदाप्तये॥

पारमेश्वरोल्लास (१)

पारमेश्वरमुल्लासमित्यभिन्नं द्विजोत्तम। परिज्ञेयं यथा वह्नेर्निर्धूमस्यार्चिषश्शुभाः ॥ १६५ ॥
समुद्रस्योर्मयो यद्वद्रश्मयो भास्करस्य च। संकल्पाद्भक्तिपूर्वात्तु सूर्यवद्धृदयाम्बुजे॥ १६६ ॥
करोति नित्यमुदयं भव्यबुद्धेर्महामहे। संकल्पलक्षणैर्भोगैर्मन्त्रैरिष्ट्वा तु पूर्ववत्॥ १६७ ॥
बहिश्शुभतरैः पश्चात् भोगैराज्यादिकैस्ततः। तर्पितश्चानलाधारे यथोक्तविधिनाब्जज॥ १६८॥
देशिकद्विजमूर्तिश्च सान्नपानधनादिना। परितोषं परं नीतं शान्तिं यच्छति वै परम॥ १६९॥

**पौष्कर उवाच—**

कर्मणां शान्तिकादीनामधारे मण्डलादिके। ध्यानमस्य जगद्धातुर्ज्ञातुमिच्छाम्यहं प्रभो॥१७०॥

**श्रीभगवानुवाच—**

व्यक्तिस्संपूज्यते या या ज्ञानाद्यैस्सा गुणैर्युता। ज्ञातव्या कमलोद्भूत नित्या सर्वात्मना विभोः॥
संसारदुःखशान्त्यर्थं तज्ज्ञा वा सा सुशान्तये। संयजेद्गोचरीकृत्य भक्त्या सुश्रद्धया तु वै॥
वाचकैर्द्वादशार्णाद्यैश्शश्वच्चाभिमताप्तये। विचित्राकृतिरत्नाङ्गवस्त्रस्रग्भूषणादिकैः॥ १७३ ॥
शक्तिपूतैस्सुसंपूर्णां तथान्यैस्साधनैस्स्वकैः। शुद्धसंविन्मयं त्वेवं व्यक्तविग्रहमाच्युतम् ॥१७४॥

(१) क—कोशे–अत्र पारमेश्वरोल्लासः इत्येतान्यक्षराणि सन्ति

पौरुषेण तु रूपेण स्मर्तव्यं सत्पदाप्तये। वपुषा सुन्दरेणैव दिव्येनाविकृतेन च ॥ १७५ ॥
मुञ्चन्तमनिशं देहादालोकं ज्ञानलक्षणम्। प्रयत्नेन विना ज्ञानं न्यासकृद्ध्यायिनां महत् ॥ १७६ ॥
स्रग्वस्त्राभरणैर्युक्तं स्वानुरूपैरनूपमैः। चिन्मयैस्स्वप्रकाशैस्तु अन्योन्यरुचिरञ्जितैः ॥ १७७ ॥
पूर्वकर्मानलार्तानां ध्यायिनां खेदशान्तये। स्वदतेन्दुचयोत्थेन ह्लादयेद्रागगेन तु ॥ ॥ १७८ ॥
विद्याकलाभिधे शक्ती सन्धत्ते शङ्खचक्रवत्। ज्ञानक्रियात्मके विद्धि इच्छासंवलितेऽब्जज ॥
अनन्तशक्तिर्भगवांस्तमनन्तगुणं स्मृतम्। दृश्यदृष्टान्तसूर्येन्दुवह्नितत्त्वैर्विलक्षणम् ॥ १८० ॥
स्वबोधप्रत्ययेनैव इयत्तास्य विधीयते। सर्वमेवैष भगवान् किमु सर्वमतः परम् ॥ १८१ ॥
ध्येयमस्य यदा भाति सा विद्या स्वात्मनि स्थिता। भक्त्या यथाचितध्यानादेतस्मादेव शान्तये ॥
एवमस्य परं रूपं परमं विनिबोधतु। ध्यायिनां भव्यबुद्धीनां परमानन्ददं हि यत् ॥ १८३ ॥
घनकुञ्चितनीलालिग(द)लिताञ्जनसन्निभैः। कर्पूरधूसरैर्दिव्यैः पुष्पसंवलितान्तरैः ॥ १८४ ॥
किरीटमकुटाक्रान्तैश्शोभितं सुशिरोरुहैः। स्थलाब्जकाशसंकाशपद्मरागरुचिप्रभैः ॥ १८५ ॥
पाणिपादतलै रक्तैर्वदनैरधरादिकैः। नानाश्रवणरन्ध्रान्तैर्मुक्ताभासादिकैर्द्विजैः ॥ १८६ ॥
ईषदारक्तगोक्षीरशुद्धनीलाब्जलोचनैः। एवं हृत्पुण्डरीके प्राक् पुण्डरीकाक्षमच्युतम् ॥ १८७ ॥
नानामन्त्रप्रभाकान्तिध्यानमिच्छाप्रदं भवेत। बहिर्वै मण्डले ध्यानं भवदुःखं नयेत् क्षयम ॥
परस्माद्भगवत्तत्त्वादनन्यत्वेन वर्तते। अत्र स्थितं बहिर्ज्ञेयं मन्त्रव्यूहं सदोदितम् ॥ १८९ ॥
नानाव्यक्तिस्वरूपेण भविनां मोक्षदं हि यत्। तत्र तावत्परिज्ञेया क्रमशो वै पुरोदिता ॥१९०॥
निर्दिष्टलक्षणा ब्रह्मन् वराहा[१]नास्तु[?] शक्तयः। तासां व्यक्त क्रमाद्ध्यानं यथावत् प्राक् प्रकाशितम् ॥
परस्य ब्रह्मणस्त्वेवं नित्या वा व्यापकामला। मूर्तिर्वै वासुदेवाख्या त्वभेदेन स्थिताब्जज ॥१९२॥
ज्वाला ज्योत्स्ना प्रभा यद्वत् वह्नेरिन्दोर्विवस्वतः। स्वेच्छया योऽभिमानाख्यरूप धत्ते यथोदितम् ॥
अनुग्रहार्थमेवं वै भगवन्मन्त्रशक्तयः। व्यञ्जयन्ति स्वकं रूपमाभिमानिकमुत्तमम् ॥ १९४ ॥
यमालम्ब्याचिरेणैव जपाद्ध्यानात् समर्चनात्। सर्वमाप्नोति [२]मन्त्रज्ञस्तवभक्तिप्रदस्स्थित ॥
साहजं प्राकृतं कर्मबन्धं कर्मात्मजं हि यत्। संस्थितं हि यथा ताम्रे धातोरब्जज कालिकाम् ॥
भूत्वा सर्वज्ञशक्तिस्सा स्वयं मन्त्रतरात्मना। क्रमात्कर्मात्मतत्त्वानामनुवेधं करोति च ॥ १९७ ॥
[३]भक्तियुक्तमसंबाधं शश्वद्ये चाप्नुवन्ति ते। पिबन्ति परमं ब्रह्म ईशं मन्त्रात्मनाप्तये ॥ १९८ ॥
लब्धाधिकाराः क्रमशस्संप्राप्य स्वेश्वरे पदे। प्रयान्ति मन्त्रसामर्थ्या[४]दसमान्नायान्ति ते पुनः ॥

१. क-ख—वराहानास्तु[?] सशय. २. ग-घ—मन्त्रज्ञस्तीव्रभक्तिव्रत घ—मन्त्रज्ञस्तीव्र भक्तिप्रद. ३. ग-घ—भक्तियुक्तमसंबाधम् ४. क-ख—सामर्थ्यादस्मान्नायान्ति

ज्ञात्वैवं कमलोद्भूत ध्येयाः पूज्यास्तथैव हि। ये प्रधानतरा मन्त्रा मूर्तयोऽपि जगत्प्रभोः ॥
आराधनाज्जपाद्ध्यानात् परिज्ञानाच्च ते शुभम्। यच्छन्ति पद्मासीयं तत्तदक्षयमाच्युतम् ॥
दहन्ति वह्निवत्कर्मजालं कर्मात्मनां महत्। एवं ज्ञात्वाब्जसंभूत सुप्रसिद्धैस्तु वाचकैः ॥२०२॥
द्वादशाक्षरपूर्वैस्तु षडष्टाक्षरपश्चिमैः। स्वसंज्ञाख्यैस्स्वबीजैर्वा संप्राप्तैर्देशिकाननात् ॥ २०३ ॥
स्मर्तव्या वासुदेवाख्या द्विभेदाः परमेश्वराः। चत्वारश्चानिरुद्धान्ताश्चतुर्व्यूहव्यवस्थया ॥ २०४ ॥
एवमन्ये वराहाद्याश्चतुर्व्यूहेन वै सह। तथैव केशवाद्या ये द्वादशास्संप्रकीर्तिताः ॥ २०५ ॥
अनुज्झितस्वरूपस्य नानामूर्तियुतस्य च। नानाव्ययसंस्थस्य यजनं चतुरात्मनः ॥ २०६ ॥
यत्तु नानार्थसिद्ध्यर्थं तथा रुचिगुणाप्तये। सम्यग्ज्ञात्वा तु षाड्गुण्यं महिमानान्तता परा ॥
प्राप्तुमिच्छति यच्छीघ्रं धीमता तेन पौष्कर। पूजनीयं यथावस्थमध्यक्षान्तं हि केवलम् ॥
प्राग्वद्विभवमूर्तीनां पञ्चव्यूहाद्यपेक्षया। ऐश्वर्यपूर्वषाड्गुण्यं चानुगम्याप्तुमिच्छति ॥ २०९ ॥
सप्रद्युम्नाच्युताध्यक्षवासुदेवाद्यमर्चयेत्। य पुनर्मूर्तिपूर्वं तु इच्छेद्गुणगणं महत् ॥ २१० ॥
संकल्पसिद्धयस्सर्वा विविधाश्चाणिमादयः। सर्वेश्वरोऽनुगन्तव्य अध्यक्षान्तं तु साच्युतम् ॥२११॥
प्रद्युम्नान्तं तु सततं समाधावर्चने हितम्। मुख्यत्वेन तु वै यस्य चलाग्रं गुणसंग्रहम् ॥२१२॥
प्रतिभाति गुरोर्वक्त्रं धीरं तस्यार्चने पुनः। वासुदेवाच्युताध्यक्षक्रमं प्रद्युम्नपश्चिमम् ॥ २१३ ॥
षट्कं तु वीर्यपूर्वं वै इच्छत्याराधनात्तु यः। अप्रद्युम्नं तदध्यक्षमच्युतं संयजेत्तदा ॥ २१४ ॥
तेजःपूर्वं तु षाड्गुण्यं योऽर्चनादभिवाञ्छति। तस्यार्चने तु विहितं भूयोऽध्यक्षादिकं त्रयम् ॥
प्रागर्चनात्तु मूर्तीनां केवलादर्चनात्तु वा। कैवल्यं भगवत्तत्त्वं मन्त्रज्ञस्समवाप्नुयात् ॥ २१६ ॥
मूर्तित्रयं तदन्ते यत् सर्वगं यद्यपि स्थितम्। तथापि विश्वविभवं यत्सत्यं त्वात्मना प्रभु ॥
ज्ञात्वैवमर्चनीयं तु तमेव समनन्तरम्। जाग्रदीश्वरमध्यक्षं त्वया नाथात्मना सह ॥ २१८ ॥
त्रयाणामच्युतादीनां प्राथम्येन तु पूजनात्। तत्पदेष्वादिदेवस्य क्रमादाराधयेत्त्रयम् ॥ २१९ ॥
चातुरात्म्याययोगेन गुणानामेवमर्चनम्। कुर्याद्वै विधिवन्मन्त्री यथा तदवधारय ॥ २२० ॥
ज्ञानं बलमथैश्वर्यं वीर्यं च तदनन्तरम्। चतुष्टयमिदं भिन्नं यजनात्सिद्धिकृत्सकृत् ॥ २२१ ॥
बलमैश्वर्यवीर्ये च तेजोनिष्ठं चतुष्टयम्। यं य इच्छत्यभिमतं परिज्ञानादवाप्नुयात् ॥ २२२ ॥
तेजश्शक्तिस्तथा ज्ञानं बलं वीर्यान्तमेव हि। इष्टं चतुष्टयं दद्यात् मन्त्रिणामिदमब्जज ॥२२३॥
ज्ञानात्मने समुच्चार्य प्रणवाद्यं पदं शुभम्। यथा ज्ञानगुणस्योक्तं सर्वेषामेवमेव हि ॥ २२४ ॥
अनुज्झितक्रमेणैव व्यत्ययेनोदितेन च। मोक्षभोगाप्तये त्वेवमर्चनं विविधं स्मृतम् ॥ २२५ ॥
भेदभिन्नं जगद्योनेरभेदेन यजेत् पुनः। द्वादशारे महाचक्रे तथासंख्यच्छदोदरे ॥ २२६ ॥

गुणातीतस्तु भगवान् पूर्ववत्कर्णिकान्तरे। द्वादशाक्षरमन्त्रेण पत्रगं हि तदक्षरैः ॥ २२७ ॥
नमः प्रणवसंरुद्धैः प्रादक्षिण्येन प्राक् पदात्। प्राप्तये गुणभूतानां षट्कयुक्तं हि यच्च ते ॥२२८॥
दिव्यानां चातुरात्म्यानां त्रयं सञ्चरितं हि यत्। त्रयं गुणमयं चान्यत् चाकाराणां क्रमाद्यजेत् ॥
उपायैस्तैः फलप्राप्त्यै तस्मायष्टव्यभिच्छया। भक्तिश्रद्धासमेतेन ज्ञानपूर्वेण कर्मणा ॥ २३० ॥
स्व(सु)वर्णाश्रमधर्मेण सह सम्यक् समाधिना। आ अनुग्रहकालाच्च यावज्जीवावधि द्विज ॥
तीव्रप्रभावशान्ताच्च ज्ञानमाराधनेन च। देहेनानेन तेनैव ह्यनेनान्यतरेण वा ॥ २३२ ॥
मन्दमन्दवशाद्भाववशादमरपूजित। एवं यदधिकारेण कुर्यादाराधनं हि य. ॥ २३३ ॥
भोगैर्यथोदितैश्शुद्धैः क्रियाभिर्विविधैस्ततः। निष्पत्तौ तु क्रियाङ्गानां हृदाख्याय्यं स्वमन्त्रराट् ॥
नानर्चितं विभोर्भोगं कल्पितं विनिवेद्य च। प्रणवाद्यन्तकेनैव सनमस्कपदेन तु ॥ २३५ ॥
कल्पयामीति नाम्ना तद्भोगानां धिय्युपार्जनम्। धिया निवेदनं तेषां शिरसावननं यत् ॥
समर्पणे यद्द्विजेयं वाचकेन हृदेश्वरात्। पूरकेण हृताना प्राक् बहिस्स्थानां क्रमेण तु ॥ २३७ ॥
हृदयङ्गमसंज्ञं यत् पञ्चकं त्वहंणादिकम्। कृत्वाञ्जलिमुद्रायां श्रद्धापूतेन चेतसा ॥ २३८ ॥
निवेदनीयं बहुधा यथासंभवमेव वा। परमाश्रित्य वै यत्तु इन्द्रियैस्संयतैस्सह ॥ २३९ ॥
वदनं नासिकारन्ध्रे स्थगयित्वाम्बरेण तु। स्वश्वासोपहतं चैव न भवेत्तद्यथाऽब्जज ॥ २४० ॥
सुभर्जितानां बीजाना प्रसवं न पुनर्यथा। क्रियाफलाना च तथा प्रथमं चाच्युतार्चनात् ॥२४१॥
आस्तां तावन्महाबुद्धे कर्मसंज्ञं हि(ना)ज्ञाच्युतम्। फलहीनं हि चामूलाद्भवक्षयकरं परम् ॥
अश्वमेधादयो यज्ञा नूनं कर्मफलप्रदाः। तेऽपि तन्मन्त्रभक्तानां न यच्छन्ति फलं स्वकम् ॥
ज्ञस्वभावास्तु वै यज्ञास्सम्यग्बुध्वा पराशयम्। यच्छन्ति परमां शान्तिं भगवत्तत्त्ववेदिनाम् ॥
स्वर्गाद्यं फलमन्येषां मर्त्यभोगं तु वेप्सितम्। फलमामुष्मिकं चैव ऐहिकं वाब्जसंभव ॥
कृत्वा बुद्धिनिविष्टं तु जपादीन् श्रद्धया चरेत्। भक्तिपूतेन विप्रेन्द्र तात्पर्येण तु वै सह ॥
साङ्गं सपरिवारं च इष्ट्वैवमजमव्ययम्। शक्तिव्यक्तिविभेदेन आदिमूर्तिक्रमात्तु वै ॥ २४७ ॥
ऋङ्मयेनाथ यजुषा पूजनीयं तमेव हि। अचिराख्ये पदे मन्त्रे तन्त्रैरभिमतात्मये ॥ २४८ ॥
परं ब्रह्म परं धाम पवित्रं परमेश्वरम्। सामर्थ्यादच्युतं नेत्रा नाम्ना यत्समुदाहृतम् ॥ २४९ ॥
व्यक्तमस्य परब्रह्म कश्चिन्नयनलक्षणम्। अन्तर्निगूढमन्त्राणां वर्ततेऽन्यत्र वै बहिः ॥ २५० ॥
अत एव षडङ्गानि पञ्चाङ्गानि महामते। वाचकानि तु वाच्यानि युक्तान्याराधनात्तु वै ॥२५१॥
नेत्राख्यं भगवत्तत्त्वं यदङ्गेभ्योऽतिरिच्यते। शिरोऽम्बरे तु मन्त्राणां प्रधानेतरवर्तिनाम् ॥ २५२ ॥
खबीजं विनियोक्तव्यं स्थित्यर्थं प्राक् प्रभात्मकम्। परावरस्वरूपेण स्मरेत्तत्स्थं दिगीश्वरम् ॥

औदयेन तु योगेन मन्त्राणि च परात् पदात्। यथाक्रमस्थान्याहृय अर्चनावसरं प्रति ॥२५४॥
निवेश्य च यथाशास्त्रमस्त्रावरणपश्चिमम्। संपन्ने विधिवद्यागे पुनस्सर्वेश्वरे हरौ॥ २५५ ॥
क्रमात् प्रविलयं कुर्यात् साधकस्सिद्धिमिच्छताम्। एवं नियन्तृशक्तिर्वै नेत्राख्या पारमेश्वरी॥
प्रभा(भ)वत्वेन मन्त्राणामप्ययत्वेन वर्तते। बहिर्वा कमले हार्दे स्मर्तव्या सामलान्तरे॥ २५७ ॥
निपेधाख्येन बीजेन सानुस्वारेण खेन च। सहस्रानलसूर्येन्दुवराहायुतभास्वरा॥ २५८ ॥
वाच्यवाचकयोगेन माननीयं सदैव हि। सहसृष्टिस्वरेणैव सृष्टौ सर्वं यदीप्सितम्॥ २५९ ॥
भोगबीजमखण्डं च प्रतीपं मन्त्रिणां पुनः। शश्वदज्ञानानुसिद्धं(च)संप्रयच्छति पूजनात्॥
नित्यमन्त्रोपसंहा वेलायामुदयेऽपि च। यथावदादौ बोद्धव्यं क्रमान्मन्त्रं यथास्थितम्॥ २६१ ॥
बीजं पिण्डं पदाख्यं च तथा मन्त्रं सलक्षणम्। भेदमेतद्धि मन्त्राणां फलं भेदेन चान्वितम्॥
नानावाच्यस्वरूपेण यतस्सर्वेश्वरस्स्थितः। चतुष्प्रकारैरमलैर्वाचकैरुपचर्यते॥ २६३ ॥
वाचकानां हि वाच्यानामेवमस्ति परस्परम्। आपेक्षिकं वैश्वरूप्यं संसिद्धे नियमे सति॥
विना पिण्डाक्षरैर्ब्रह्मन् संज्ञाख्यैः पदलक्षणैः। स्वकैर्बीजाक्षरैः कुर्याद्वाच्यस्य परिकल्पनम्॥
सोपाङ्गानां तु चाङ्गाना द्वादशानां स्वसंज्ञया। केवलानां तु षण्णां वै पञ्चानामपि चेच्छया॥
तेऽनुस्वारयुतास्सर्वे कार्याः प्रणवमध्यगाः। न्यासात्मवान्मनोमूर्तेस्सामान्याराधने परम्॥२६७॥
कर्मानुरूपमन्त्यं तु नमस्कारादिकं न्यसेत्। तथा फलाभिसन्धाने नमस्कारः प्रकीर्तितः॥२६८॥
संप्राप्तौ त्वणिमादीनां स्वाहाकारमुदीरयेत्। आप्यायने तु वै वौषट् सर्वत्र कमलोद्भव॥२६९॥
वश्यार्थे चापि विद्वेषे दुष्टोच्चाटनकर्मणि। हुंफट्कारं च विहितमन्योन्यप्रीतये वषट्॥ २७० ॥
तृप्त्यर्थे बलिदाने च तेजसो ह्यभिवृद्धये। ऋते सप्रणवाद्विप्र नमस्कारपदात्तु वै॥ २७१ ॥
मन्त्राणां कर्मसन्यासकर्तॄणां जातयोऽपराः। निषिद्धास्तत्फलोपेतास्तथा सिद्धान्तिनां नृणाम्॥
मन्त्रसिद्धान्तवेत्तॄणां मन्त्रज्ञानां विशेषतः। तथा तन्त्रान्तरज्ञानां मन्त्रिणां कमलोद्भव॥ २७३ ॥
सह जातिगणेनैव विधिना मन्त्रसिद्धयः। फलार्थिनामनुज्ञाताः कामभोगरतात्मनाम्॥ २७४ ॥
प्रकृतिप्रत्ययार्धीना मालामन्त्रादिकास्तु ये। श्रुतिमन्त्रैस्समोपेतास्तुतिमन्त्राश्च ये स्मृताः॥२७५॥
आवर्जयंति तद्ज्ञानां सततं चित्तमब्जज। नतिनः प्रणवाद्या ये त्यागपिण्डं तथाब्जज॥२७६॥
मन्त्राणां विविधार्थानां तेषां वै परमेश्वरी। शक्तिर्नित्योदिता सूक्ष्मा सत्ताख्या ज्ञानलक्षणा॥
आविश्वसाधनं कार्या तेषामिच्छा क्रियाब्जज। विकासयति सद्विप्र प्रदाने मुक्तयेऽपि च॥
भक्तिक्रियापराणां च हितार्थं नित्यसेविनाम्। विद्वान यथोक्तर्नत्या तु ओषध्यो मूलमूर्ध्वगाः॥
दग्धाग्निनापि कुर्वंति सम्यग्ज्ञातक्रिये भुवि। किं पुनस्स्वागमज्ञैस्तु भक्त्या तु विधिपूर्वकम्॥

उपदेष्टा प्रबुद्धानां कुर्वन्ति च मनोहितम्। तेषां गन्ता रहस्सर्वं बद्धाग्रं शब्दडम्बरम् ॥२८१॥
हितं यत्पदमन्त्राणां समाश्रित्यानुपूर्वकम् ॥

**पौष्कर उवाच**—

ज्ञातुमिच्छामि भगवन् कालभेदेन वै सह। स्वरूपं मन्त्रसिद्धानामागमानां यथास्थितम् ॥२८२॥

**श्रीभगवानुवाच** —

कालमेकं द्विजश्रेष्ठ तद्व्यापारवशात् पुनः। भिन्नमाभाति कर्तॄणां भगवद्भाविनां तु वै ॥२८३॥
नाडिकाकलितं यद्वै अहोरात्रं तु षड्तुम्। पञ्चधा विषमांशैस्तदाप्रभाताद्विभज्य च ॥ २८४ ॥
ब्राह्मं मुहूर्तमासाद्य मन्त्रज्ञः प्रयतश्शुचिः। शोधयित्वा स्वकं देहमायामाद्यैर्यथादितै ॥ २८५ ॥
मन्त्रविन्यस्तदेहोत्थं कुर्यान्मन्त्रार्चनं ततः। जपस्तोत्रावसानं च यावदादित्यदर्शनम् ॥ २८६ ॥
कुर्याद्भोगार्चनं पश्चात् पुष्प[1]मूलफलादिकम्। गते दिनाष्टमे भागे स्नानपूर्वं समाचरेत् ॥२८७॥
प्राग्वदाराधनं मन्त्रं तृतीयप्रहरावधि। ततश्चतुर्थप्रहरे शास्त्राध्ययनमाचरेत् ॥ २८८ ॥
चिन्तनं श्रवणोपेतं व्याख्यानं स्वधियेच्छया। अस्तंगते दिनकरे आसाद्याराधनालयम् ॥
कुर्यान्मन्त्रार्चनं सम्यग्जपध्यानसमन्वितम्। आसाद्य शयनं पश्चात् स्मरेन्मन्त्रेश्वरं हृदि ॥२९०॥
क्षपयित्वा निशांशं तु उत्थाय शयनात्ततः। योगं युञ्जीत वै मान्त्रं प्राग्वद्धृत्कमलोदरे ॥२९१॥
तल्पमासाद्य वै भूयः प्रबुद्धः कमलोद्भव। उत्थाय शयनं त्यक्त्वा ततः पूर्वोक्तमाचरेत् ॥२९२॥
कालभेदमिमं विद्धि शास्त्रभेदमथोच्यते। कर्तव्यत्वेन वै यत्र चातुरात्म्यमुपास्यते ॥ २९३ ॥
क्रमागतैस्स्वसंज्ञाभिर्ब्राह्मणैरागमं तु तत्। विद्धि सिद्धान्तसंज्ञं च तत्पूर्वमथ पौष्कर ॥ २९४ ॥

[2]सिद्धान्तलक्षणम्

नानाव्यूहसमेतं च मूर्तिद्वादशकं हि यत्। तथा मूर्त्यन्तरयुतं प्रादुर्भावगणं तु वै ॥ २९५ ॥
प्रादुर्भावान्तरयुतंधृ(वृ)तं हृत्पद्मपूर्वकम्। लक्ष्म्यादिशङ्खचक्राख्यगारुत्म्यसदिगीश्वरैः ॥ २९६ ॥
सगणैरस्त्रनिष्ठैस्तु तं विद्धि कमलोद्भव। मन्त्रसिद्धान्तसंज्ञं च शास्त्रं सर्वफलप्रदम् ॥ २९७ ॥
विना मूर्तिचतुष्केण यत्रान्यदुपचर्यते। मन्त्रेण भगवद्रूपं केवलं [3]यागसंयुतम् ॥ २९८ ॥
युक्तं श्रियादिकेनैव कान्ताव्यूहेन पौष्कर। भिन्नैराभरणैरस्त्रैरावृतं च सविग्रहैः ॥ २९९ ॥

१. **ग-घ**— मूलजलादिकम्   २. **क**—अत्र इमान्यक्षराणि सन्ति   ३. वाङ्गसवृतम् इति पाठान्तरम्

[1]तन्त्रसिद्धान्तसंज्ञं तच्छास्त्रं भोगापवर्गदम्। मुख्यानुवृत्तिभेदेन यत्र सिंहादयस्तु वै ॥ ३०० ॥
चतुस्त्रिद्व्यादिकेनैव योगेनाभ्यर्चिते तु वै(नतु)। संवृताः परिवारेण स्वेन स्वेनान्वि(स्थि)तास्तु वा ॥
यच्छक्तयाराधितं सर्वं विद्धि तन्त्रान्तरं तु तत्। एवं नानागमानां च सामान्यं विद्धि सर्वदा ॥
नामद्वयं च सिद्धान्तं पञ्चरात्रेति पौष्कर। एकैकं बहुभिर्भेदैरामूलादेव संस्थितम् ॥ ३०३ ॥
नानाशयवशेनैव सिद्धाद्यैः प्रकटीकृतम्। संक्षिप्तं सप्रपञ्चं च तृतीयमुभयात्मकम् ॥ ३०४ ॥
सेतिहाससपुराणैस्तु वेदैर्वेदान्तसंयुतैः। ये जन्मकोटिभिस्सिद्धास्तेषां[2]मन्तोऽत्र वै स्मृतः ॥
(य)तस्मात् सम्यक् परं ब्रह्म वासुदेवाख्यमव्ययम्। एतस्मात् प्राप्यते शास्त्राद् ज्ञानपूर्वेण कर्मणा ॥
सिद्धान्तसंज्ञा विप्रास्य सार्थका अत एव हि। पुराणं वेदवेदान्तं तथान्यत्साङ्ख्ययोगजम् ॥
पञ्चप्रकारं विज्ञेयं यत्र राध्यायतेऽब्जज। फलोत्कर्षवशेनैव पञ्चरात्रमिति स्मृतम् ॥ ३०८ ॥
सदागमाख्यं मूलं तु परब्रह्मप्रकाशकम्। दिव्यसिद्धिप्रदं चैव शान्तिकृद्धिकर्मणाम् ॥ ३०९ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां अधिकारनिरूपणं नाम
अष्टात्रिंशोऽध्यायः ॥

(समुदितश्लोकसंख्या ३१३)



## अथ एकोनचत्वारिंशोऽध्यायः

**पौष्कर उवाच**---

प्रमाणमागमानां च समंज्ञ परमेश्वर। ज्ञातुमिच्छाम्यहं शश्वत्संबन्धं विबुधादिकम् ॥ १ ॥

**श्रीभगवानुवाच**—

संक्षिप्तं त्रिप्रकारं च कनीयोमध्यमोत्तमम्। अनुष्टुप्छन्दो[3]बन्धेन बद्धं श्लोकगतात्तु यत् ॥
पादसंज्ञं हि तच्छास्त्रं मूलाख्यं द्विगुणं च तत्। यत्सार्धं शतसंख्यं तु तदुद्धारमिति स्मृतम् ॥

---

१. तन्त्रसंज्ञं हि तच्छास्त्रं परिज्ञेयं हि चाब्जज। इति पाठान्तरम् २. मन्तेऽत्र सम्थितिः इति पाठान्तरम् ३. क-ख—बन्धेन अर्ध श्लोक

न्यूनभेदास्त्रयस्त्वेते ऊनाधिक्येन वै सह। बहुधा चापि सर्वेषां न संज्ञा चलते पुन ॥ ४ ॥
सार्धं शतद्वयं यद्वै परिज्ञेयं तदुत्तरम्। बृहदुत्तरसंज्ञं च यदेतद्द्विगुणं स्मृतम् ॥ ५ ॥
सार्धं सहस्रसंख्यं तु कल्पं तत्समुदाहृतम्। त्रयस्यास्य परिज्ञेयमूनाधिक्यं पुनश्शनैः ॥ ६ ॥
एवं संज्ञान्तरास्त्वन्ये आगमास्सन्त्यनेकशः। कल्पैकदेशास्ते सर्वे परिज्ञेयास्तथाब्जज ॥ ७ ॥
आ सहस्रत्रयात् यावत् षट्सहस्रं हि सोत्तरम्। द्विषट्सहस्रपर्यन्तं संहिताख्यं तदागमम् ॥८॥
ये चान्ये चान्तरालं वै शास्त्रार्थेनाधिकैश्शनैः। सर्वेषां संहिता संज्ञा बोद्धव्या कमलोद्भव ॥९॥
सपादलक्षपर्यन्ता ये च शास्त्राण्यतोऽन्वितः। सहस्राशतमानेन आधिक्येन प्रकाशिताः ॥ १० ॥
कल्पस्कन्धात्तु ते सर्वे परिज्ञेया क्रमेण तु। लक्षाधिकैस्तु बहुभिस्सहस्रैस्तु शतान्वितैः ॥ ११ ॥
सार्धकोटित्रयान्तं च तत्र तन्त्राख्यमागमम्। नवप्रकारमित्येतद्धेदमुक्तं त्वयस्य च ॥ १२ ॥
यत्रान्तरालसंख्यानात संख्येयं प्रवर्तते। युगानुसारयोगेन त्रैगुण्यबलितेन च ॥ १३ ॥
दिव्यागमान्तरान्तेन सम्बन्धेन च भूरिणा। अप्रमेयाभिधानं च अत ऊर्ध्वं समागम ॥ १४ ॥
कालेन सह निर्यातिपसंख्यं परमेश्वरात्। तद्वै विदितवेद्यानां सिद्धाना संस्थितं हृदि ॥ १५ ॥
यैस्स्वबोधप्रमाणेन कोटिसंख्यं प्रकाशितम्। पादान्ता यस्य वै भेदा क्रमशस्समुदाहृता ॥१६॥
यत्र यत्रेच्छया जातं मतभेदेन वै सह। क्रियान्तराश्च बहवश्शुद्धा राजसतामसा ॥ १७ ॥
आद्यं सर्वागमानां च पारमेश्वरमागमम्। प्रमाणपरिशुद्धं च हितमब्जज सात्त्वतम् ॥ १८ ॥
सिद्धान्ते भगवत्तत्त्ववेदिन परमार्थत । क्रमागतश्च तैः प्राप्तं मुक्तये भविनां तु वै ॥ १९ ॥

**पौष्कर उवाच —**

विभोस्सर्वेश्वराद्येन स्वीकृतं पारमेश्वरम्। अप्रमेय महच्छास्त्रमनन्तं गगनोपमम् ॥ २० ॥

**श्रीभगवानुवाच —**

सर्वेश्वरस्य च विभोरव्ययस्याच्युतस्य च। वाच्यस्य वासुदेवस्य अप्रमेयाख्यमागमम् ॥ २१ ॥
अपृथग्लक्षणं विद्धि स्वस्य शब्दं यथा द्विज। ज्ञानात्मसंज्ञमात्मानं नीतं वै [1]स्वेच्छया द्विज ॥
स्वभावमाप्तकामस्य तस्यैतत् स्ववशस्य च। ज्ञानांशेनाभिमानाख्यं गुणशक्तिमयं महत् ॥ २३ ॥
गृहीतस्वयमात्मानमतीन्द्रियमनश्वरम्। शब्दमूर्तिस्स भगवान् स्वेच्छया स्वयमेत्य च ॥ २४ ॥
विश्रान्तं ज्ञानमूर्तौ तु स च संकर्षणो विभु.। स्वयं वीर्यमनन्तं च मूर्छितं ज्ञानमूर्तिना ॥२५॥
[2]गुणं शक्तिमयं यस्य प्रकाशाख्यं तु विग्रहम्। आभिमानिकसंक्षोभ्यं प्रद्युम्नाख्यं तु शाश्वतम् ॥

१. क–ख —स्वस्वेच्छया २. क–ख —गुरुशक्ति

महता तेन भूतेन शास्त्रं विद्युत्प्रभोज्ज्वलम्। श्वसितं वीर्यमूर्तिस्तु प्रविष्टस्स्वयमेव हि ॥ २७ ॥
अथ वीर्यात्मना विप्र प्रसरं तैजसं महत्। जनितं चानिरुद्धेति धत्ते योऽनश्वरं वपुः ॥ २८ ॥
गुणशक्तिगुणोपेतमपराजितमक्षयम्। त्यक्तमुद्गारवच्छास्त्रं प्रद्युम्नेन महात्मना ॥ २९ ॥
आदाय विधृतं तद्वै अनिरुद्धात्मना हृदि। गुणव्यक्तिमयं देवं वागीशमसृजत् प्रभुः ॥ ३० ॥
अनिरुद्धोऽव्ययात्मा च अर्थयुग्मं तदागमम्। अनुद्धृतमसन्दिग्धं गतं चाव्ययतां ततः ॥ ३१ ॥
यदंशाद्विदितं तद्वै ज्ञानमूर्ते स्वविग्रहे। अव्ययीकृममात्रे तु स्वरूपं ज्ञानमूर्तिना ॥ ३२ ॥
नीतं समरसत्वं च प्रतिशास्त्रे प्रकाशिने। वागीश्वराच्च सिद्धानां तैरुद्धृत्य यथोदितम् ॥ ३३ ॥
सम्यक् समुच्चयीकृत्य नवनीतं यथोदधेः। विभोर्विद्याधिदेवस्य ब्रह्मणोऽस्य प्रकाशितम् ॥ ३४ ॥
रुद्रादित्येन्द्रपूर्वाणां देवानां चोदितैर्द्विज। स्वांशोत्थानां च रुद्राद्यैस्स्वांशोत्थैरर्थिनामपि ॥ ३५ ॥
ब्रह्मणा नारदादीनां स्वसुतानां प्रकाशितम्। तेभ्यो लोकत्रयान्तस्थऋषीणां भावितात्मनाम् ॥
स्वाभिप्रायवशेनैव नानाकालवशादपि। नानादेशवशाच्चैव नानाजातिवशादपि ॥ ३७ ॥
इत्येतच्छास्त्रसंबन्धं कथितं ते यथास्थितम्। सरहस्यं महाबुद्धे बोद्धव्यं हि यथार्थतः ॥ ३८ ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां आगमनिर्णयो नाम
एकोनचत्वारिंशोऽध्यायः ॥
(समुदित श्लोकसंख्या ३८)

## अथ चत्वारिंशोऽध्यायः

**पौष्कर उवाच—**

परिज्ञातं मया देव दोषोपशमनं महत्। शान्तिकं परमं यद्वै व्यत्ययात् सौमनस्यकृत् ॥ १ ॥
शास्त्रसंबन्धपर्यन्तं प्रसङ्गात्त्वदनुग्रहात्। नानाधर्मप्रतिष्ठा च भविनां स्वर्गदा च या ॥ २ ॥
इदानीं ज्ञातुमिच्छामि त्वत्तस्संक्षेपतस्ततः। सरहस्यं जगद्योनेः प्रतिमालक्षणादिकम् ॥ ३ ॥
संविधानं प्रतिष्ठाख्यमशेषं पूर्वचोदितम्। क्षतदोषास्तु येऽर्चानां मधूच्छिष्टोदिताः क्रियाः ॥४॥

तास्त्वयोक्ताः पुरा देव मानोन्मानादिकैर्विना । आमूर्धदेशकेशीयं चरणान्तं हि लक्षणम् ॥
मया यथावन्न ज्ञातं नैपुण्येन जगत्पते ॥

**श्रीभगवानुवाच—**

नानाधर्मप्रतिष्ठानां पुरा कृत्वा तु पौष्कर । मोक्षार्थमाचरेच्छुद्धं प्रतिष्ठामाच्युतीं पराम् ॥ ६ ॥
सुलक्षणे तु भूभागे गव्यैर्भक्तेन वै पुरा । प्राग्दिक्सिद्धिसमेतं तु वसुधालक्षणं च ते ॥ ७ ॥
स्फुटमुक्तं प्रतिष्ठार्थं विज्ञातव्यं तदेव हि । जलाश्रयादिका या भूर्विविधैश्च विभूषिता ॥ ८ ॥
वनौघवनसंयुक्तैर्ग्रामैस्सह पुरादिकैः । प्रतिग्रहं प्रतिष्ठार्थं पूर्ववद्विधिपूर्वकम् ॥ ९ ॥
संपाद्य कुसुमारामपर्यन्तं च सुविस्तरम् । उत्तमं वनयात्रान्तं ततः कुर्यात् सदेशिकः ॥ १० ॥
होराद्येन च लग्नेन मुहूर्तेनार्चितेन च । शकुने गागने भौमे चित्तसौख्यप्रदे शुभे ॥ ११ ॥
किञ्चिदध्वावशिष्टे तु वस्तव्यं च वनाद्बहिः । शुभे ग्रहेऽनुकूले च नक्षत्रे वापरेऽपि च ॥ १२ ॥
कुर्याद्वनप्रवेशं च तत्रेष्ट्वा वनदेवताः । आदाय लक्षणोपेतमुपलं वै शिलादिकम् ॥ १३ ॥
सुस्निग्धं सुस्वनं शुद्धं दोषैर्हीनं स्फुटादिकैः । वृक्षं वा लक्षणोपेतमक्षतं सरलं दृढम् ॥ १४ ॥
फलं(ल)पुष्पप्रदं स्थूलं सक्षीरं वा तदुज्झितम् । नानाजाति च कर्मण्यं यज्ञाङ्गानां गुणावहम् ॥
सत्त्वाद्यं तदधिष्ठातृबलिदानपुरस्सरम् । कृत्वा [1]विसर्जनं चैव मध्वाज्याक्तेन देशिकः ॥ १६ ॥
शस्त्रेण प्रहरं दद्याच्छेतव्यं शिल्पिना ततः । चन्दनं स्यन्दनं तत्र तथा सुरभिचन्दनम् ॥१७॥
अगरुं कर्णिकारं च काश्मर्यं रक्तचन्दनम् । बिल्वामलकचूताश्च तालवर्णकसिंहकाः ॥ १८ ॥
श्रीपर्णी नालिकेरं च [2]नागमातृकर्णिनकम् । गव्यं कपित्थं च तथा [3]हिमतालतमालकम् ॥१९॥
बदरं खदिरं फल्गु मधूकं किंशुकद्रुमम् । फालेयं च खर्जूरं नीर[4]नारङ्गशिंशुपम् ॥ २० ॥
पिप्पलं वृक्षमश्वत्थं पिप्पलीविटपं महत् । सुरदारु हरीतक्यं बकुलं चाप्युदुम्बरम् ॥ २१ ॥
कालाख्यं पुष्पकूलं च वैरं चान्यत्फलद्रुमम् । फालस्यं भूर्जवृक्षं च पलाशं कृतमर्दकम् ॥२२॥
तिन्दुकं बीजसारं च मातुलुङ्गद्रुमं महत् । [5]राजवृक्षं कोहितकं सुनाभिकुटकार्जुनम् ॥ २३ ॥
सरलं कुठजश्शाकः शमीश्रीवेष्टकेतकाः । असनस्पन्दनाख्यं च स्तबकस्तबकेति च ॥ २४ ॥
[6]सारवंतो मखीया ये सुसिद्धा लोकपूजिताः । ग्राह्यास्तरूत्तमास्सर्वे कर्मणि स्थापनादिके ॥२५॥
एकैकतालवृद्ध्या तु द्वादशान्तकरावधि । द्विरष्टकं तु बिम्बानामेवं स्यादपरं तु वै ॥ २६ ॥

१. **क-ख**—कृत्वानीं विसर्जचैव २. **क-ख**—नागमात्मकपीनकम् ३. **ग-घ**—भीमताल ४. **ख**—नारदशिंशुपम् ५. **क-ख**—रागवृक्षम् ६. **क-ख**—..सिद्धा

प्रयोजनवशेनैव तरवो बिम्बकर्मणि। विहिताः क्रमशस्त्वेते स्वल्पानामादिनां महत् ॥ २७ ॥
केचित् फलवशेनैव विहिताश्च फलार्थिनाम्। निष्कामानां च विहितास्सर्वे सर्वफलप्रदाः ॥२८॥
एतैः पूर्वोदिताः कार्यास्सप्ताङ्गैस्तोरणाश्शुभाः। अग्निकार्योपयोग्यानि स्रुवादीन्युदितानि वै ॥
अग्नाविन्धनकाष्ठानि समित्परिधयस्तथा। आराधनार्थं मन्त्राणां भद्रपीठानि पुष्कर ॥ ३० ॥
मन्त्रबिम्बान्यशेषाणि तत्पीठानि तथैव च। प्रासादादीनि चित्राणि [१]प्राकारसहितानि च ॥
शयनान्यासनादीनि देवोपकरणानि च। रथादिरथयात्रार्थं वैष्णवेषूत्सवेषु च ॥ ३२ ॥
केतुदण्डानि दीर्घाणि शिखराणां शिरोपरि। आहरेत यथाशास्त्रं छायागुल्मकृतानि च ॥ ३३ ॥
भङ्गभेदक्रिमिच्छिद्रसिद्रक्षक्षनखक्षतैः। दोषैरशनिपाताद्यैर्नाहरेद्दूषितानि वै ॥ ३४ ॥

**पौष्कर उवाच—**

भगवन् भद्रपीठानां प्रतिमानां च लक्षणम्। देवीयपिण्डिकाना च प्रासादानां तथैव च ॥३५॥
याथावद्ज्ञातुमिच्छामि रथादीनां च संस्थितिम्। प्रमाणं ध्वजदण्डानां मण्डपान् मण्डयन्ति ये ॥

**श्रीभगवानुवाच—**

स्वानुकूलदिने शुद्धे गुरूणां संमतेन च। मानवादौ तु सर्वत्र चिन्तयेत सह शिल्पिना ॥३७॥
मुनिवेशेन सह वै सर्वमापादयेत्ततः। यान्युक्तानि पुरा ब्रह्मन् व्यक्तिस्थानानि वै विभो ॥३८॥
द्रव्यं तेभ्यश्शुभतरं भद्रपीठमकृत्रिमम्। मानोन्मानप्रमाणाढ्यं दिव्यमाकारमब्जज ॥ ३९ ॥
तत्र तावत्सुवर्णाद्यैर्लोहैश्शुभतरैस्स्मृत। शुभा भगवदाकारशैलजाम्रमनन्तरम् ॥ ४० ॥
काष्ठं लेप्यं तथालेख्यमिष्टं भूतिव्यपेक्षया। तत्रासानां द्विजार्चासु स्थितिर्मोक्षमये स्मृता ॥ ४१ ॥
[२]सेवापराणामासानां भूतये मरयाजिनाम्। [३]महन्महोमपराणां तु दिवि देवासनात्मये ॥ ४२ ॥
यतीनां मुक्तसङ्गानां हृदि सर्वेश्वरे हरौ। एहि श्रेष्ठतरं विप्र अर्चादेशं सुलक्षणम् ॥ ४३ ॥
चित्तप्रसादमतुलं यत्राभ्येति समर्चनात्। यत्नेन च समापाद्य मन्त्रैस्संस्कृत्य वैदिकैः ॥ ४४ ॥
मृद्भूतितीर्थतोयाद्यैर्मूलद्रव्यैस्सुपावनैः। संस्नाप्य मणिस्वर्णताम्राश्ममयैर्विना ॥ ४५ ॥
स्वदेहवदुपादेयैर्नाडीव्यूहैस्सवाय्वैः। धातुभिस्सोमसूर्याग्निसहज्ञानादिकैर्गुणैः ॥ ४६ ॥
गुणकारणतः क्ष्मान्तं यदन्यत्तत्त्वसंग्रहम्। द्रव्यमाश्रित्य वै येषां वर्तते यदिदं महत् ॥ ४७ ॥
तत्र हृत्कमलाकाशे मन्त्ररत्नप्रभोज्ज्वलम्। ब्रह्मभावनया न्यस्तं यच्छति पारमं फलम् ॥४८॥

१. ग-घ—प्रकारसहितानि च २. ग-घ—सेवावहनमासानाम ३. क—महन्म... पराणां तु ग-घ—महन्मघपराणां तु

श्रद्धापराणां कर्तॄणां फलनाम्येति च स्थिरम्। प्रतिपत्तिं परां ब्राह्मीमाकारं प्रति सर्वदा ॥४९॥
प्राप्नोति सद्वशादन्ते ज्ञानमात्मप्रकाशकम्। प्रतिमानामतः मानं सांप्रतं चावधारय॥ ५० ॥
तालप्रमाणादेकैकं ह्रासयेदङ्गुलं क्रमात्। चतुरङ्गुलपर्यन्तं यावन्मानं पुनस्ततः॥ ५१ ॥
एकैकं वर्धयेद्विप्र शमपर्यन्तमङ्गुलम्। तालद्वयोन्नति यावच्चलार्चानामतोऽथैतः॥ ५२ ॥
अचलानां द्विजार्चानां त्र्यङ्गुलव्यङ्गुलं क्रमात्। चतुरशमावधि यावदतोर्ध्वं तु समाचरेत्॥ ५३॥
एकैकं तालवृद्ध्या तु द्वादशान्तकरावधि। वर्धयेदत ऊर्ध्वं तु सपादं तालमेव च॥ ५४ ॥
आधिक्येन द्विजार्चानां जायतेऽन्यच्चतुष्टयम्। दद्यात्तदुन्नते भूयो वृद्ध्यर्थं द्वादशाङ्गुलात्॥
तृतीयांशं तृतीयांशात् प्रतिमात्रितयस्य च। भूयस्तदुन्नतेर्दद्यात्तालार्धं तालमेव वा॥ ५६ ॥
द्वितीयप्रतिमानां तु उच्छ्रायेण वरं भवेत्। शनमेकं ततोर्ध्वं तु उन्मानार्थं तु वर्धयेत्॥ ५७॥
एकैवार्चा भवेदन्या वर्धयेदत ऊर्ध्वतः। क्रमाच्छतावधि यावत् साक्षात्तालाद्विजोत्तम॥ ५८ ॥
यथाभिमत उच्छ्रायमिद्धर्येर्ऽभिमतामये। भूयः भूयोन्नतिं कुर्यात्प्रादुर्भावाकृतेर्वशात्॥ ५९ ॥
प्रयोजनवशाच्चापि महत्त्वं लिङ्गकर्मणि। विहितं क्रमशश्चैव स्वस्वमानादिना सह॥ ६० ॥
तथा फलवशाच्चैव विज्ञेयं हि फलार्थिना। निष्कामानां च कथितं सर्वं सर्वफलामये॥ ६१ ॥
मानतो बहुधा प्रोक्तमित्येवं प्रतिमागणम्। धातुमृच्छैलदारूत्थं यथासंपत्तितो द्विज॥ ६२ ॥
अधिरुध्य स्ववृक्षोत्थभित्तैरवयवस्थिति। वर्णकैस्समवेताश्च बद्धैश्शस्त्राम्बरादिकैः॥ ६३ ॥
भित्तैस्स्नाय्वस्थिमांसैर्जीवाना विग्रहे यथा। मन्त्राणामेवमब्जोत्थ व्यक्तिर्धात्वादिकी स्मृता॥
अप्रबुद्धैः प्रबुद्धैर्वा चतुर्वर्गफलाप्तये। पूज्यते विविधैर्भोगैरन्तस्संपूजनाद्बहिः॥ ६५ ॥
चित्रशैलमयी मुख्या प्रतिमा महता च याम्। मृद्धातुदारुजं विप्र [1]घटने कथमन्यथा॥ ६६ ॥
प्रमाणपरिशुद्धैस्तु भित्तैरवयवैर्विना। एतावत्प्रतिमां विप्र मानमात्रमुदाहृतम्॥ ६७ ॥
भक्तिश्रद्धापराणां च पूजार्थं हि चलाचलम्। तत्रायतनतीर्थानां यात्रायां गमने चला॥ ६८ ॥
प्रतिमाप्रयताना च दद्याद्दोषादिकं विना। पूजितामुष्मिकीं सिद्धिमैहिकीं च प्रयच्छति॥ ६९ ॥
अतो भिन्नासनारूढा स्वाश्रमे स्वाश्रमान्तरे। तस्माच्चलानामर्चाना भिन्नं पीठं शुभप्रदम्॥ ७०॥
चलस्थिरविभागेन विहितं सर्व एव हि। मृण्मया लेशतः प्रोक्ताः प्रान्तपीठास्तु केवलाः॥७१॥
इदानीं पविशेषेण वक्ष्ये भद्रासनात्तु वै। साम्प्रतं भद्रपीठानां दारुजानां च लक्षणम्॥ ७२ ॥
व्यापकं हि यदन्येषां शैलहेमादिकात्मनाम्। द्विषट्काङ्गुलमानाच्च द्विहस्तान्तं महामते॥ ७३ ॥
कुर्याद‌ङ्गुलवृद्ध्या तु भद्रपीठगणं शुभम्। त्रिविधैरङ्गुलैः प्राग्वद्यथाभिमतलक्षणै॥ ७४ ॥

१. क-ख—घटने कथमन्यथा।

द्विदशाङ्गुलपर्यन्तास्सर्वे संक्षिप्तलक्षणाः। सर्वैकहस्तनिष्ठास्तु मध्यमानाः प्रकीर्तिताः ॥ ७५ ॥
अत ऊर्ध्वं द्विहस्तान्ता [1]मानतो विततास्स्मृताः। आद्यार्चा क्रमशो विद्धि प्राधान्यं चोत्तरोत्तरम् ॥
फलाधिक्येन सह वै अर्घ्यपुष्पादिनार्चनात्। सप्रणालाश्चतुष्पादास्सर्वे सद्रचनान्विताः ॥७७॥
एकपादाम्बरस्था(न)ये बोद्धव्याः पार्थिवैर्विना। प्रनालरहितास्ते वै पादगात्रविभूषिताः ॥ ७८ ॥
दर्पणोदरवत्कार्याः परिशिष्टा महामते। मुक्तामालासमोपेतैरर्धचन्द्रैस्सदर्पणैः ॥ ७९ ॥
कर्णिकावितत्तोपेतैः कर्णिकाकमलच्छदैः। हंसैर्विद्याधरैश्चापि संयुक्तैरन्तरान्तरा ॥ ८० ॥
यथाशोभानुरूपेण एवं संपाद्य साम्प्रतम्। बाहुल्यं भद्रपीठीयं प्रणालेनोपशोभितम् ॥ ८१ ॥
तदाराध्यस्य वै कुर्यादुत्तरेण तु सर्वदा। स्वात्मनो दक्षिणे भागे तल्लक्षणमथोच्यते ॥ ८२ ॥
विस्तृते भद्रपीठस्य तृतीयांशेन मध्यतः। पूर्वोद्दिष्टेन दैर्घ्येण श्लक्ष्णं वा रचनान्वितम् ॥ ८३ ॥
प्रोल्लसन्तं यथा भाति स्नानाभं निखनेत्ततः। समांशेनाग्रतो भागैर्विभज्य सुसमैस्त्रिभिः ॥ ८४ ॥
मूलतः कण्ठदेशाद्द्वौ भागौ बाह्याद्विशोध्य च। त्रिधाग्रं मूलतः कृत्वा मध्यमं व्रजनिर्गतम् ॥
[2]जलोपभोगकान्तोऽपि विद्धि भागद्वयोपरि। [3]रचनोपर्युदुद्दिष्टा कार्या कर्माणिनी च सा ॥८६॥
मकराननरूपा सा त्याज्या कापिललक्षणा। तृतीयांशेन विस्ताराद् भूगतस्साङ्घ्रिसन्ततिः ॥
समुद्गता न वै कुर्याद्बाहुल्यरचनान्विता। सर्वतो भद्रबिम्बैव मध्यतो गात्रकान्विता ॥ ८८ ॥
भूषयेद्गात्रदेशेभ्यः पुष्पैः पत्रैस्तु साङ्कुरैः। भवेच्छशिकलाकारलाञ्छनैस्स्वधियाऽथवा ॥ ८९ ॥
कुर्यात्तदुत्तरे पद्मं सचक्रं केवलं तु वा। आनतं तं बहिः कुर्यादाभोगं [4]वाननं महत् ॥ ९० ॥
तदाननं तथैशान्ये भागान्तेन सुसंयुतम्। विधेयं च तथाभोगं दक्षिणावर्तलक्षणम् ॥ ९१ ॥
सन्निवेशमतस्साङ्गं [5]गात्र... गैस्सह। न च प्रासादभद्रं च एकाग्रमवधारय ॥ ९२ ॥
अर्धेनार्घ्याच्च पीठात्तु विस्तीर्णे पृष्ठदेशतः। विधेयं चतुरश्रं तु सुवृत्तं वामभागतः ॥ ९३ ॥
बाहुल्यवन्तं बाहुल्यात्तस्मि... शिरो न्यसेत्। स्तम्भं सुवृत्तं विहितं श्लक्ष्णं वा चतुरश्रकम् ॥
अष्टाश्रमथवा रम्यरचनारचितं तु वा। बाहुल्यात्त्रिगुणाद्दीर्घं विहितं स्तम्भवेष्टनम् ॥ ९५ ॥
लतावितानपत्राढ्यैर्वदनैरुपदनैस्सह। ध्यानासक्तैर्मुनीन्द्रैस्तु वेदाध्ययनतत्परैः ॥ ९६ ॥
शङ्खचक्रगदापद्ममूर्तामूर्तैर्महामते। साक्षसूत्रकरैर्वापि सिद्धैस्तु भगवन्मयैः ॥ ९७ ॥
इत्येषां रचनां कुर्यादपरां वाऽब्जसंभव। प्रफुल्लपद्मैरापूरात् कर्णिकाकेसरान्वितैः ॥ ९८ ॥
उपर्युपरि संमृद्धैः कर्मभिस्त्वेवमेव वा। स्रग्दण्डवद्विधेयं वा नालं भद्रासनीयकम् ॥ ९९ ॥

१. क-ख— मानतो विनता. २. ख— जलोपभोगरान्तोऽपि ३. क-ख—रचनोपर्युद्दिष्ट।
४. क-ख—वामनम् ५. ग-घ—गात्रनदरगैस्सह

पृष्ठदेशे तु यद्वक्त्रं वृत्ताद्यं परिकल्पितम्। चक्राधारस्वभावेन ऊर्ध्ववक्त्राम्बुजात्मना ॥ १०० ॥
नीत्वा तद्बाह्यत कुर्याच्चक्रं सर्वाङ्गचिह्नितम्। चतुर्भिः कूर्मवत् कुर्यात् स्तम्भमाधारमुत्तमम् ॥
समत्वेनासनीयस्य विस्तारस्य महामते। विस्तारं तस्य तेनैव सार्धेन विहितस्तु वै ॥ १०२ ॥
माहेन्द्रमण्डलाकारं वृत्तं वा वसुधावने। समं वा मस्तकोद्देशादनुपातेन सङ्कटम् ॥ १०३ ॥
त्रिभागं समतुल्यं वा बुध्नदेशात्र विस्तृते। समापाद्यैव संस्कृत्य प्राग्वद्वै भवनान्वितम् ॥१०४॥
सन्निधीकृत्य मन्त्रेशं मन्त्रं मोक्षासये तु वै। यष्टव्यं परया भक्त्या स्वशक्त्या वा फलासये ॥
महता विभवेनैव साधकैस्स्वगृहस्थितैः। एते भेदास्य विहिता अष्टाश्राः कमलोद्भव ॥ १०६ ॥
षडश्रा वर्तुलाश्चापि चतुरश्रा अथापि वा। स्वदलेन समोपेतं चतुरश्रस्य कल्पयेत् ॥ १०७ ॥
तदास्य सत्त्वसिद्ध्यर्थं सर्वदैवं महामते। विभवानुगुणेनैव प्रोक्तमानात्तु साधितम् ॥ १०८ ॥
रचनासन्निवेशेन समभ्यूह्य समाप्य वै ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां भद्रपीठलक्षणं नाम
चत्वारिंशोऽध्यायः ॥

(समुदितश्लोकसंख्या १०९)

## अथ एकचत्वारिंशोऽध्यायः

**पौष्कर उवाच**—

उक्तमार्गेण चोद्दिष्टं मान्त्रं संस्थापन तु वै। यथावदुक्तं तदहं ज्ञातुमिच्छामि सांप्रतम् ॥ १ ॥

**श्रीभगवानुवाच**—

नृणामाराधकानां तु मन्त्रैकनिरतात्मनाम्। मन्त्राकृतेः प्रबुद्धस्य गुप्तं कृत्वार्चनं हितम् ॥ २ ॥
अथ दार्वादिकानां तु धातूत्थानां समाहितः। रचनासन्निवेशं च सस्तम्भानां निबोधतु ॥ ३ ॥
तथा स्तम्भविमुक्तानां भूभागाङ्घ्रिनिवेशिनाम्। बाहुल्यं च स्वविस्तारात्तृतीयांशसमं स्मृतम् ॥

प्रणालं तत्समं दैर्घ्याद्विस्तृतेर्वार्धसंमितम्। विभज्य मुरमैर्भागैरधमां बलवत्पुरा॥ ५ ॥
स्वल्पा द्वादशसंख्यैस्तु मध्यमास्तु द्विसप्तकैः। द्विरष्टसंख्यैर्विततामन्त्राग्रायानां तु मध्यतः ॥ ६ ॥
विधेयं षड्भिरंशैस्तु पीठं श्लक्ष्णं समं शुभम्। सुवृत्तं चतुरश्रं वा सपद्मं केवलं त्वथ॥ ७ ॥
चक्राम्बुरुहयुक्तं वा तदुच्छ्रायं विधीयते। अर्धभागेन बाहुल्यात्तत्तार्थं सकंजस्य च॥ ८ ॥
समं सचक्रपद्मस्य तयोः पूर्वोक्तलक्षणम्। विहितं किन्तु विप्रेन्द्र चतुरश्रस्य कल्पयेत्॥ ९ ॥
कोणेषु शङ्खनिर्माणं शङ्खाद्यं वा चतुष्टयम्। वर्तुलस्य न तं कार्यमित्थैव कमलोद्भव॥ १० ॥
चक्रपद्मवियुक्तस्य चतुरश्राश्रयस्य च। यदुक्तं चक्रपद्माभ्यां तेन तुङ्गसमब्जज॥ ११ ॥
न केवलस्य विहितं मन्त्रे मन्त्रास्सदस्य च। तदूर्ध्वं निखनेन्मध्याद्वंशं द्वयंशं समन्ततः॥
खातं भागं समं चैव सार्धं दैर्घ्याद्विधीयते। जलाश्रयं तु परितः खाताद्भागसमं बहिः॥ १३ ॥
सोपवीतं च विहितमन्तेरेखाश्रयास्थितं। द्वादशांशकृतानां च इत्येषा [१](म)शककल्पना॥ १४ ॥
विहिता काष्ठवर्गाणां शैलजानामपि द्विज। भङ्गाद्विर्भक्तिभिर्भागैमत्र प्रकल्पितं पुरा॥ १५ ॥
तन्मध्ये मुनिभिर्भागैस्सर्वं पूर्वोक्तमाचरेत्। भागद्वयं द्वयं चैव परितो निखनेत् क्रमात्॥ १६ ॥
जन्माश्रयं तु भागेन सार्धेन परितः स्मृतम्। तनोर्मुतमानं यतत्र तद्विहितं तु वै॥ १७ ॥
विभज्य तत् षोडशधा मध्ये भागाष्टकेन वै। निखनेत् प्राग्भागात् पादेन वै सह॥१८॥
परितो निखनेद् द्रोणीं ब्रह्मन् भागद्वयेन तु। जलाश्रयं तु विहितं पादोनेन द्वयेन वा॥ १९ ॥
आपाद्य चक्रं प्रागुक्तं कमलाद्यं यथोदितम्। नवपद्ममयीं कुर्यात् तस्मिन्नर्चने विभो॥२०॥
यथायथा च विस्तारं समभ्यूह्य तथातथा। आदाय खातपूर्वेभ्यो मध्यदेशे तु योजयेत्॥ २१ ॥
विभक्तं भवते येन क्षेत्रं चेदम्बुजस्य च। नवानामपि पद्मानामथ मन्त्रवराश्रितम्॥ २२ ॥
पद्मं साधारणाज्जालं युज्यतेऽभ्यर्चितं यथा। इति विनाभागानां विभागं हि यथोदितम्॥
कृत्वाथ रचयेद्यत्नाद्बाहुल्यं मेखलादिकैः। जलाश्रयसमेनादौ तदुद्देशात् क्रमेण तु॥ २४ ॥
शोधयित्वानुपादेन बाहुल्यं दिक्चतुष्टयात्। त्रिचतुः पञ्च वा षड् वा ततः पुच्छाश्रिनेर्भजेत्॥
[२]त्रिधा विभक्तं सोष्णीषं सपद्मं मेखलात्रयम्। चतुर्विभागेनोष्णीषं मेखलाषट्कमध्यगम्॥२६॥
कुर्याद्वै किङ्किणीजालद्वयेन नलिनीं शुभाम्। मुनिभक्ते तु बाहुल्ये षोढा कमलसंभव॥ २७ ॥
भागेनोष्णीषवर्गं तु श्लथगाश्रयवद्भवेत्। तदधश्शुक्तिकाकारं सूत्रं छिन्नं विधीयते॥ २८ ॥
अधस्ताच्छुक्तिभागस्य वृत्तं कुर्यात् सकोणकम्। वृत्तासनं च विहितं चतुरश्रं समन्ततः॥२९॥
तदधस्त्रितयं कुर्यान्मेखलानां सुलक्षणम्। सपादाश्चोक्तपादेन्य किञ्चित्किञ्चिद्यथाक्रमम्॥ ३० ॥

---

१. सर्वत्र—इत्येषाशककल्पना—इत्येवास्ति २. क-ख—त्रिधाविभक्त सपद्मम्

स्थितिरन्तरसूत्रीया विभागजननी हिता। सव्यदक्षोर्णापर्पाठांतं गरुडं च कृताञ्जलिम् ॥ ३१ ॥
स्ववक्त्रेणापर्णेव युक्तं पाणिद्वयेन तु। कुर्यात् पूर्वापरगम्यां वा मन्ये भद्रासनस्य च ॥ ३२ ॥
गङ्गायमुनयोर्मध्ये वरुणं यादसां पतिम्। मध्यतस्तदुदग्भागे भद्रपीठस्य कल्पयेत् ॥ ३३ ॥
पार्श्वद्वये प्रमाणस्य समुद्रं रत्नपात्रभृत्। विधेयं सौम्यमूर्ति च दिव्यैर्जलचरैस्सह ॥ ३४ ॥
दिक्कूच गुच्छकमतश्शेषमापूर्य किङ्किणीगणैः। द्व्यङ्गे चरविम्बे वा अङ्गुलैः परिनिर्मिते ॥ ३५ ॥
अथोर्ध्वं तु नृपादीनां हितं नानानिवेशनम्। महाधनानां चान्येषां शुभेप्सूनां च कीर्तये ॥३६॥
नानाधर्मप्रतिष्ठानां तत्र तावत्समाचरेत्। राजा वा मायकश्चान्यो लोकदं स्वर्गदं हि यत् ॥३७॥
वृषोत्सर्गफलेनाशु निवृत्ति तस्य कर्मणः। कृत्वा तदनु वै कुर्याद्धर्मसंस्थापनं पुनः ॥ ३८ ॥
विशेषकर्मनिचयं 'प्रत्यक्षमति यत्र वै। संकल्पादेव[२] नाधर्म' माजीवमभिविन्दति ॥ ३९ ॥
सम्यक् समाप्तो येनैव तेनान्यस्मिन हि जन्मनि। विवेकजं परं ज्ञानमाप्नुयान्मोक्षसिद्धिदम् ॥
नान्येन कर्मणा यस्माद्विपर्कोति कर्मणा। जायते परमा शान्तिर्[३]धर्मवत्योऽक्षयप्रदः ॥ ४१ ॥

**पौष्कर उवाच** --

नानाधर्मप्रतिष्ठानं लोकानां हितकाम्यया। ज्ञातुमिच्छामि भगवन् त्वत्तस्सन्देहशान्तये ॥ ४२ ॥

**श्रीभगवानुवाच** -

पञ्चायतनपूर्वं प्राक् कृत्वा देवालयं शुभम्। कामनारहितेनैव वेदसा विमलेन तु ॥ ४३ ॥
धर्मार्थिनाश्रितं तस्मिन् पुरं कुर्याद्द्विजाश्रयम्। विशेषेणु सामान्यं सर्वदोषक्षयङ्करम् ॥ ४४ ॥
सर्वधर्मोत्तमं चैव सर्वदा भविताक्षयम्। प्रवरं पञ्चकालज्ञसमूहं भावितात्मनाम् ॥ ४५ ॥
षट्कर्मनिरतं चापि त्रयीधर्मपरायणम्। जातिगुरुं परिज्ञाय निर्द्वन्द्वं च परस्परम् ॥ ४६ ॥
दाराग्निहोत्रसंयुक्तं वेदाध्ययनतत्परम्। नदीकूलसमीपस्थे दुष्टप्राणिविवर्जिते ॥ ४७ ॥
सस्यशालिकृषाढ्ये तु निम्बाम्रवनसङ्कुले। स्वादुतोयप्रदे देशे सुप्राकारविभूषिते ॥ ४८ ॥
तमासाद्य शुभं तत्र पूजयित्वा जगत्प्रभुम्। ततस्स्नात्वानुलिप्तं च वस्त्रालंकारभूषितम् ॥ ४९ ॥
ताम्रशासनपूर्वं तु ब्राह्मणं विनिवेश्य च। आसनेषु समूहन्तं पाद्यार्घ्यकुसुमैर्यजेत् ॥ ५० ॥
तं च धूपैस्सुगन्धैश्च ताम्बूलेन यथाक्रमं। यथाक्रमोपदिष्टेषु दद्यात् पाणौ कुशोदकम् ॥ ५१ ॥
द्वादशाक्षरमन्त्रेण प्रमाणमिति पाठयेत्। प्रतिष्ठास्मीति वै साम कुर्याद्वै प्रार्थनां ततः ॥ ५२ ॥

१. ग-घ—प्रत्यक्षमति २. क-ख—पङ्कादिवना ..मर्जीव ३. ग-घ—धर्मवत्योऽक्षयराजा

यथावदर्चनीयश्च मदनुग्रहकाम्यया। स्वगृहे पुण्डरीकाक्ष स्वकुलोत्थेन कर्मणा ॥ ५३ ॥
सहसद्धर्मचारिण्या व्यक्तवेद्यां यथागमम्। समिदादीनि चाग्नीनामग्नेर्वा शक्त्यपेक्षया ॥ ५४ ॥
त्रैकाल्यमा च कर्तव्यं स्वधर्मः परिपाल्यताम्। प्रवेशं न समापन्नाऽदातव्यं पापकर्मणाम् ॥५५॥
संस्कार्या स्वसुताः कन्या भृत्यामात्यास्स्ववंशजाः। वैष्णवेन विधानेन कार्यास्ते भगवन्मयाः ॥
आ मुहूर्तात्तु वै ब्राह्माद्यावदादित्यदर्शनम्। स्नानपूजाजपस्तोत्रपाठैस्सन्ध्यां समाचरेत् ॥ ५७ ॥
यागसाधनभोगानामुपार्जनमनन्तरम्। ततस्स्नानं तु विधिवद्यथोक्तं विधिना हितम् ॥ ५८ ॥
सायमाभूतशुद्धिं च अन्तर्यागमनन्तरम्। यथोक्तविधिना चाथ कुर्यादाराधनं बहिः ॥ ५९ ॥
ततोऽग्निहवनं चैव क्रियां पैत्रीमनन्तरम्। बलिदानं च भूतानामतिथीनामथार्चनम् ॥ ६० ॥
बन्धुभृत्यसमोपेतमात्मयागमनन्तरम्। ऋक्सामपूर्वं स्वाध्यायमितिहासादिचिन्तनम् ॥ ६१ ॥
आचर्तव्यं समाधानं स्वहृत्पद्मान्तरे ततः। त्रयोदशाङ्गमित्युक्तमाह्निकं भगवन्मयम् ॥ ६२ ॥
कार्यं वै प्रत्यहं भक्त्या क्षीयमाणे क्षमागमे। सन्न्यासमाचरेद् भूय कुर्याद्ब्रह्मगमस्य वै ॥ ६३ ॥
देशिकेन्द्रमुखेनैवमाज्ञातुं गृहमेधिनाम्। दत्त्वा निर्गत्य वै तत्र कर्ता कुर्यात् प्रदक्षिणम् ॥६४॥
इति ब्रह्मप्रतिष्ठानं विधानं कथितं च ते। वैष्णवीयैः पालनीयं नृपेन्द्रैश्च स्वसिद्धये ॥ ६५ ॥
स्वसिद्धान्तप्रतिष्ठानमथेदानीं निबोधतु। मठमायतने कृत्वा वृत्तिपूर्वमकृत्रिमम् ॥ ६६ ॥
वणिक्कुटुम्बभृतकैर्युक्तं दासगणेन तु। वाप्यो घरट्ट[1]जा ...न्या सह वानायनै स्थिता ॥६७॥
तत्रान्नं व्यञ्जनोपेतं भक्ष्यकान्नादिकं बहु। विविधं साधयित्वा प्राक् स्नात्वा तु गुरुणा सह ॥
द्वादशाक्षरपूर्वैस्तु मन्त्रैर्न्यस्ततनुस्सुधीः। अर्चयित्वा जगन्नाथं परमेश्वरमच्युतम ॥ ६९ ॥
अभ्यागतान् समाहूय ब्राह्मणान् वेदपारगान्। इदं तदमृतं चान्नमिदमायु प्रजापति ॥ ७० ॥
इदं विष्णुरिदं प्राणमिदं जीवमिदं परम्। सर्वसत्त्वहितार्थं च अनुयागं प्रतिष्ठितम ॥ ७१ ॥
पञ्चभूतजगद्योनेरन्नमूर्ते जनार्दन। आ भूतसंप्लवं कालं भव सन्निहितस्त्विह ॥ ७२ ॥
चोदयेद्दन्नयान् प्राग्वत् सामज्ञाद्रे परे श्रुती। गुरुरभ्यर्थनीयश्च सकुटुम्बेन वै पुरा ॥ ७३ ॥
अभ्यागतगणेनापि सह चान्यैः परेण तु। योक्तव्यं पालनीयं च मदनुग्राह्यया धिया ॥ ७४ ॥
तर्पयेत [2]ततोऽन्नेन अन्नादर्चार्चितेन तु। समूहमुपविष्टं तु उच्छिष्टं शोधयेत्ततः ॥ ७५ ॥
यायात् प्रदक्षिणीकृत्य अभ्यागतगणं ततम्। इदमन्नप्रतिष्ठानमुक्तमच्युतभाविनाम् ॥ ७६ ॥
परमुद्धरणोपायं तथाखिलसुखप्रदम् ॥

१. ग-घ—घरट्टजाकितिन्या? सह २ ग-घ—तर्पयेत ततोऽन्येन

ज्ञानप्रतिष्ठानम्

अथ ज्ञानप्रतिष्ठानमिदानीमवधारय। यत्कृत्वा जायते ज्ञानं विवेकसहितं हि यत्॥ ७७॥
परिशुद्धान् समुच्चित्य पञ्चरात्रीयसञ्चयान्। सदागमादिकान् कृत्स्नान् वेदवेदाङ्गसंयुतान्॥७८॥
स्मृतिस्मृत्यन्तरोपेतानितिहाससमन्वितान्। आन्वीक्षकीभिर्विद्याभिस्सशब्दाख्याभिसंवृतान्॥
[1]नदीनागरकैर्वर्णैर्विविधान् वर्णसंचयान्। पूरयित्वा विनिक्षिप्य संपुटेष्वक्षयेषु च॥ ८०॥
ग्रथयित्वासिताद्येन सूत्रेण सुदृढेन तु। सुस्थिरे सुप्रसिद्धे च नृपनागरसेविते॥ ८१॥
द्विजोषितेभ्यस्संकीर्णे सत्समूहेन पालिते। समीपेऽश्ममयं वेश्म लोहयन्त्रसमन्वितम्॥ ८२॥
सकवाटार्गलोपेतं सुधाधवलितं शुभम्। कञ्जस्थया वागीश्वर्या भूषितं चित्रभूषया॥ ८३॥
शङ्खचक्रगदापद्मकरप्रोद्यतया तया। प्रोद्वहन्त्याक्षमालां तु शास्त्रसञ्चयहस्तया॥ ८४॥
वरदाभयदायिन्या सिद्धाद्यैर्वा तथा परैः। ततः प्राग्वत् कृतन्यासश्शुक्लाम्बरधरश्शुचिः॥८५॥
लोहयन्त्रायते तस्मिन् प्रणवाधिष्ठितेऽर्चिते। यथाक्रमं समारोप्य शास्त्रसंग्रहपुस्तकान्॥ ८६॥
पूजितांस्तु समालभ्यान्नेत्रवस्त्रैस्तु वेष्टितान्। द्वादशाक्षरमन्त्रेण पूजयित्वा पठेदिदम्॥ ८७॥
विशुद्धज्ञानदेहाय विष्णवे परमात्मने। सुप्रतिष्ठितमक्षय्यं निष्ठ शास्त्रात्मनेह वै॥ ८८॥
अज्ञानामुपकारार्थं प्रबोधजननाय च। मुक्त्वा त्वामेवमक्षय्यं क्षयवन्तोऽमरादयः॥ ८९॥
उक्त्वैवमर्चयेद् भूयो वेदवेदान्तविग्रहम्। सदागमाद्यैर्भगवत्पुराणाद्यैरलङ्कृतम्॥ ९०॥
प्रत्यहं परया भक्त्या विद्यापीठस्य चाग्रतः। शब्दब्रह्ममयं पीठं मद्रूपीठं पुरोदिते॥ ९१॥
नियुक्तं चार्चने कुर्यादप्रमत्तं द्विजोत्तम। ततः प्रदक्षिणीकृत्य धूपं दत्त्वा क्षमापयेत्॥ ९२॥
सच्छास्त्रदानेऽर्थिनां च [2]संचयं तत्र सञ्चयेत्। शासनावनिबन्धां च तस्य वृत्तिं सुपुष्कलाम्॥
कृत्वा तच्छासनं दद्याद् ज्ञानकोशानुपालने। तस्मिन् देवगृहे पश्चाद्ब्रह्मचारिस्तु पाठयेत्॥९४॥
मन्त्रद्वयं पुरोद्दिष्टं स्वयं बद्धाञ्जलिः पठेत्। अज्ञानतिमिरान्धानां जनानामविवेकिनाम्॥ ९५॥
शास्त्रपीठप्रतिष्ठानात् ज्ञानमेति च निर्मलम्। एतस्मादुत्थितेनैव फलेन महता हरिः॥ ९६॥
प्रीतिमायातु परमां फलं मे नोपयुज्यते। विद्यापीठप्रतिष्ठानमिदं सम्यक् प्रकाशितम्॥ ९७॥
फलार्थिनां ज्ञाननिष्ठं फलं यच्छति चेप्सितम्। वापीकूपतटाकानामारामाणां च मोक्षणम्॥
प्रतिष्ठापनपूर्वं च स्वर्गदं हि फलार्थिनाम्। कर्मसन्यासिनां विष्णोस्तत्पुनस्तत्पदप्रदम्॥ ९९॥
कारणं जगतामीशो भूतस्सर्वेश्वरोऽच्युतः। शब्दात्मिकाममूर्ता च ज्ञानरूपामलक्षणाम्॥१००॥

---

१. सर्वत्र—नदीनागरके इत्येवास्ति, अस्य पदस्य वर्णविशेषणत्वात् नन्दिनागरकै, इति स्यात्

२. ग-घ—संयत तत्र

समासाद्य स्वरूपेण जगत्यामवतिष्ठते। तन्मयं देहमाश्रित्य यत्सत्याह्लादमुत्तमम् ॥ १०१ ॥
सामराणामृषीणां च मनुष्याणां महामते। एवं नानारसमयीं शक्तिं विटपविग्रहाम् ॥ १०२ ॥
दावानलस्थसकरीं नानाव्यक्तमयैस्स्वरैः। प्रवालपत्रकुसुममारुताम्बुविमिश्रितैः ॥ १०३ ॥
अजङ्गमां पादपाख्यां पत्रपुष्पफलप्रदाम्। मूर्तिं देवोपवरणीं भूमिं वै प्रथमांशकाम् ॥ १०४ ॥
अपरां जङ्गमां मूर्तिं सौरभीं संश्रितास्पदाम्। ततस्तदुत्थितैस्तावत्पञ्चोपनिषदात्मकैः ॥ १०५ ॥
मन्त्रितैः पञ्चभिर्मन्त्रैर्गोमयाद्यैर्यथाक्रमम्। सह ऋक्सामपूर्वैस्तु कुशोदकसमन्वितैः ॥ १०६ ॥
शुद्धयेऽपि च तत्खातं पर्युक्ष्य परितः पुरा। नयेत् पावनतां पश्चादम्बुना परिपूरिताम् ॥१०७॥
क्ष्मागनेनाथवाद्येन कोपेनाल्पेन वा द्विज। अक्षारेण सुतोयेन साम्प्रतं शीतलेन च ॥ १०८ ॥
संभवे सति हेमेन देशकालवशादपि। क्रीनेन ताटकीयेन पल्वलेनोद्धृतेन वा ॥ १०९ ॥
गोब्राह्मणानां सांमूल्यं गत्वा शतपदादिकम्। खातमध्ये विनिक्षिप्य स खातो विततो महान् ॥
बहुकाले जलस्थायी यथाभिमतविस्तृतः। कार्यो वै सर्वदिक्स्थेयोऽनवस्था जायते यथा ॥१११॥
कुलस्त्रीजनवृद्धानां स्नेहमाहरतां भृशम्। धनुर्द्वयसमं कुर्यात्निम्नत्वेन तु सर्वदा ॥ ११२ ॥
सार्धकार्मुकतुल्यं वा एकज्यानिम्नमेव वा। धनुर्द्वयात् समारभ्य यावद्धनुशतं तु वै ॥ ११३ ॥
विहिते खातविस्तारे ह्यत ऊर्ध्वं यथा च ते। तत्पार्थिवं च वायव्यं सौम्यमाग्नेयमेव च ॥११४॥
चतुरश्रायतं चैव आपाद्य शुभलक्षणम्। सभूभागवशाच्चैव पदवीगगणभूषितम् ॥ ११५ ॥
वृक्षवल्लीगणोपेतं शाड्वलस्थलभूषितम्। पथिकावासकैर्युक्तं तथा विश्रामतोरणैः ॥ ११६ ॥
एवं कृत्वा यथोद्दिष्टं यत्र गोविग्रहक्षितौ। अवधार्य च सन्धार्य स्नानह्लानं च कुर्वती ॥ ११७ ॥
कालं प्रवृत्तिपर्यन्तं तर्पयन्ती च तज्जलम्। एवं संस्कृत्य च ततः प्राग्भागमपि वीक्षयन् ॥११८॥
प्रत्यग्भागस्थितः कर्ता गुरुणा ब्राह्मणैस्सह। तदुद्धृतेनाम्भसाथ अथवान्येन साम्प्रतम् ॥११९॥
मृदा गोमययुतया तत्कालं लेपयेत् स्थलम्। द्वादशार्णेन गायत्र्या साम्ना वै वामुखेन तु ॥
पूर्वदक्षिणसौम्यानां दिग्भागानां यथाक्रमम्। होमार्थमृग्यजुस्सामपाठकान् विनिवेश्य च ॥१२१॥
स्थलेषु वालकीयेषु कुण्डेषु सुशुभेषु वा। द्वादशाक्षरमन्त्रेण कृतन्यासस्वकेन वा ॥ १२२ ॥
मृत्पिण्डमेकमादाय खातमध्यात्तु पात्रकम्। कौशेयकुसुमोपेते आसने विनिवेश्य च ॥ १२३ ॥
तोयपूर्णं तदूर्ध्वे तु कलशं काञ्चनोदरम्। वस्त्रेण वेष्टितं सम्यक्कुङ्कुमाद्यैर्विलेपितम् ॥ १२४ ॥
पुष्पस्रक्मञ्जरीदूर्वादर्भबीजफलोदकम्। सितोपवीतमाशुभ्रं नेत्रसुवर्णाप्रभृत्यमेत् ॥ १२५ ॥
पार्थिवेन च शून्येन जीवयुक्तेन भावयेत्। सबिन्दुनामयेनाथ साम्नेनाच्युतं विभुम् ॥ १२६ ॥
नारायणं परां मूर्तिमुत्थितं मधुरध्वनेः। पद्ममन्ते नियोक्तव्यमस्य बीजत्रयस्य च ॥ १२७ ॥

नारायणाय भगवंस्ततो भूतात्मने नमः। स्नानपूर्वं प्रतिष्ठानमाचर्तव्यं यथाविधि ॥ १२८ ॥
द्वादशाक्षरमन्त्रेण अथवाष्टाक्षरेण तु। षडक्षरेण संपाद्य पूर्णान्ताहवनक्रिया ॥ १२९ ॥
अर्चयित्वा यथाशक्ति गुरुपूर्वान् द्विजोत्तमान्। समादायाथ कलशं पूर्णं पल्वलजं हि यत् ॥
कर्ता विनिक्षिपेत् पूर्वं मृत्पिण्डं पुष्करोदरे। कलशोदकमुत्कीर्य इमं मन्त्रमुदीरयेत् ॥ १३१ ॥
आमूर्ते भगवन्नाथ वासुदेवामृतात्मने। आचन्द्रतारकं कालं तिष्ठ त्वं सुप्रतिष्ठितम् ॥ १३२ ॥
मामकस्याज्ञया त्राणं नाथ सानुगसंयुतान्। देवान् पितॄन् ससाध्यांश्च भूतान्याप्यायिता सदा ॥
फलेन तु इहोयेन यातु प्रीतिं परां भवान्। तृप्तिर्भवतु भूतानां त्रैलोक्योदरवर्तिनाम् ॥१३४॥
इत्युक्त्वा पाठयेत् साम ध्रुवायो ऋङ्मयांस्तत। प्रतिष्ठासीति वै साम सामज्ञान् ब्राह्मणोत्तमान् ॥
पूजनैर्विविधैः पश्चात्तदुक्तेन तु साम्प्रतम्। तर्पयेद्ब्राह्मणान् सर्वान् स्नानकर्तॄन् तथाखिलान् ॥
प्रणाम्य दानपूर्वेण देशिकान् विभवे सति। दीनानाथांस्तथा भृत्याननन्तफलसिद्धये ॥ १३७ ॥
सुवर्णवसुधादानं यथाशक्त्या समाचरेत्। कन्यादानं वृषोत्सर्गं पितृश्राद्धपुरस्सरम् ॥ १३८ ॥
वचनन्योत्थितं दोषं धनदण्डोत्थितं च यत्। विचारणीयं लोकानामर्थयित्वा नरेश्वरम् ॥ १३९ ॥
किन्नु वा(वि)ध्यन्तरमिदं विहितं सति संभवे। प्रधानफलवृक्षं तु अश्वत्थविटपं तु वा ॥१४०॥
आरामसंप्रतिष्ठायां संस्कृत्य स्नानकर्मणाम्। समालभ्य स्वलंकृत्य उपनेत्य यथाविधि ॥ १४१ ॥
वाससा वेष्टितं कृत्वा पुष्पस्रक्परिभूषितम्। होमान्तमखिलं प्राग्वत् समन्त्रं तत्समाचरेत् ॥
तेन याति परं कर्ता पारं संसारवारिधेः ॥

फलमूलान्नादिप्रतिष्ठा

फलमूलान्नप्रतिष्ठां शृणु वक्ष्ये फलार्थिनाम्। नान्नदानात् परं दानं त्रिषु लोकेषु विद्यते ॥१४३॥
सद्यः प्रीतिकरं हृद्यं प्राणदं प्राणिनामपि। उत्पत्तावपि संस्कारे रसमन्नस्य कीर्तितम् ॥ १४४ ॥
अन्नाद्भवन्ति भूतानि तस्मात् सर्वं प्रतिष्ठितम्। तच्च प्रतिष्ठितं येन तेन सर्वं प्रतिष्ठितम् ॥
आत्मना सह लोकेऽस्मिन् स्वर्लोके ब्रह्मसंज्ञिते। यावज्जीवं च नीरोगो वसेद्दुःखविवर्जितः ॥
पुत्रदारधनैरन्नैर्वृद्धिं याति क्षणात् क्षणम्। प्राप्नोति परमां पूजामुत्कृष्टेभ्यो महत्तराम् ॥१४७॥
देवता ऋषयस्सिद्धास्तस्य संचिन्तयन्ति च। नित्यमेव परां वृद्धिमायुषस्सह चोन्नताम् ॥१४८॥
हृष्टः पुष्टस्ततो भूत्वा तृप्तो भवति सर्वदा। भुक्त्वा भोगान् सुविपुलानन्ते नारायणालयम् ॥
याति चन्द्रप्रतीकाशैर्विमानैर्देवनिर्मितैः। स्वर्गादौ सर्वलोके तु स्थित्वा कल्पशतान् बहून् ॥
कालात् पुनरिहायाति देशे सर्वोत्तमे शुभे। सतां कुले समासाद्य जन्म जात्युत्तमं महत् ॥

जायते रूपवान् वाग्मी विद्याज्ञानपरायणः। द्विपतामपि सर्वेषां पूज्यः प्रियतरस्सदा ॥ १५२ ॥
शीलवाञ् शौर्यसम्पन्नो धृत्युत्साहसमन्वितः। द्विजदेवपरो नित्यं दाता भूतहिते रतः ॥१५३॥
एकान्ती धर्मवेत्ता वै नारायणपरायणः। त्रिवर्गमखिलं भुक्त्वा यथाभिमतलक्षणः ॥ १५४ ॥
जन्माभ्यस्तं शुभं कर्म कृत्वानन्तगुणं पुनः। ज्ञानमासाद्यते येन प्रयाति परमं पदम् ॥ १५५ ॥
न हि वै कूपवापीनां सुरभीणां च पूजनम्। दद्याच्छुद्धं हि तादात्म्यं विधानं सर्वमाचरेत् ॥
नीत्वाङ्गभावमस्मिश्च गोगणं भगवद्गृहे। स्नानोपभोगपूर्वाणां विभोरनलतर्पणात् ॥ १५७ ॥
प्रीत्यर्थं सुरभीणां तु प्रतिपाद्यं तु शासनम्। तमग्निं गोव्रजोपेतं घृतदीपसमन्वितम् ॥ १५८ ॥
देववत् पालनीयं च यावदाचन्द्रतारकम्। अनिशं ज्वलमानं च वसेत् कर्मकरैस्सह ॥ १५९ ॥
षडशीतिमुखाद्यं वै कालमासाद्य पुण्यदम्। कुण्डं सुलक्षणं कृत्वा दिव्याद्यैर्वैष्णवैर्गृहे ॥१६०॥
स्वयं प्रतिष्ठितं वापि धर्मस्कन्धेषु वै पुरा। द्वादशाक्षरमन्त्राद्यैश्शुभैस्सूक्तैस्तु वैष्णवैः ॥ १६१ ॥
ऋग्यजुस्सहसामैस्तु देवदेवप्रशंसकैः। एवं होता शनैश्चापि संपठेच्छान्तिके कृते ॥ १६२ ॥
घृताद्यैरक्षतैः पात्रैस्सितकृष्णान्वितैस्तिलैः। संस्कृत्य चानलं कुण्डं प्राजापत्येन कर्मणा ॥१६३॥
आहुतीनां तु जुहुयात् सहस्रादयुतावधि। शताद्यं च सहस्रान्तं ताम्रजेन स्रुवेण तु ॥ १६४ ॥
पालाशेनाष्टभागेन घृतं तु जुहुयात्ततः। अकामो वा सकामो वा दद्यात् पूर्णाहुतिं ततः ॥
नारायणस्तु वेदात्मा सहवदमुखेन तु। ददात्यभिमतान् कामानुपायं नैष्ठिकं तु वै ॥ १६६ ॥
एवं कृते तु संपाद्याद्ध्वर्यार्द्धपर्णोपरि। सप्ताहं वसुधारां च त्रिरात्रमथवा शुभम् ॥ १६७ ॥
एकाहं वा स्वशक्त्या तु तद्विधानमथोच्यते। निर्धूमे वितते कुण्डे दृढैः काष्ठैस्तु याज्ञिकैः ॥
कृत्वाग्निं मेखलाभूमेरधिकं शिविकोपमम्। धनुर्द्वयाच्छ्रिते वाथ तदूर्ध्वे ताम्रजं ततम् ॥ १६९ ॥
कटाहकं योजनीयं काष्ठजे वलये दृढे। स्थिरवंशचतुष्पादं पदवीसहनक्षमे ॥ १७० ॥
अङ्गुलैरथ मानाद्यैश्चतुस्संख्यैस्तु चोन्नतम्। हैमा सुवर्णमानात्था शलाका सर्वतस्समाम् ॥१७१॥
तत्प्रमाणसमोपेतं मध्यमे तु कटाहके। वेधं कुर्याच्च लोहेन वस्त्रापूतमथाहरेत् ॥ १७२ ॥
व्याजहीनं घृतं हव्यं सुगन्धि शुभलक्षणम्। कटाहके समुत्कीर्य [1]यत्न....परिक्षयम् ॥१७३॥
प्रवहं दिनरात्राद्यं कालं यावद्विधं स्मृतम्। एतावदुक्तमारभ्य देवमात्मानमक्षमम् ॥ १७४ ॥
आप्रभाताथवाद्यं वा हरयेत् प्रहर धृतम्। प्रहरार्द्धितयं वाथ प्रहरत्रयमेव वा ॥ १७५ ॥
प्रहराणा चतुष्कं वा स्वसामर्थ्याद्यपेक्षया। आदौ षट्प्रस्थमानात्तु चतुःप्रस्थान्तमेव हि ॥१७६॥
प्रवाहमाहरेच्छक्त्या पालिकं तु घृतस्य वा। अधिभूताधिदैवाढ्यं स्मृत्वाध्यात्मतया घृतम् ॥

१. ख—यत्नतां च पुरि

पवित्रममृतं ब्रह्म आज्यमध्यात्ममेव हि। अधिदैवं परं वह्निरधिभूतं च गोगणम्॥ १७८ ॥
स्मृतमुक्तं ममैवं हि वसु मत्वा स्वरूपधृक्। तद्वारपरिमाणेन विधिनैवेन च वर्तते॥ १७९ ॥
स्वदरिद्रमिमं लोकं कृत्स्नं वै यत्प्रभावतः। विततेन तु पात्रेण स्थगयित्वा कटाहकम्॥ १८०॥
दैवत्वेनार्चनीयं च भगवान् पुरुषोत्तमः। सांप्रतं चार्घ्यपुष्पाद्यैर्वसुगर्भकटाहके॥ १८१ ॥
अनुग्रहकरस्त्वास्ते स्वयं श्रद्धावतां नृणाम्। आरम्भादेव निष्पत्तिपर्यन्तं शुभकर्मणाम्॥ १८२॥
अर्चयित्वा नमस्कृत्य द्वादशार्णेन चाच्युतम्। ततोऽनुलेपनं दद्यात् पुष्पस्रग्धूपमेव हि ॥१८३॥
नैवेद्यं मधुपर्काद्यं सभक्ष्यं सफलं महत्। अथ सर्वेश्वरं भक्त्या विभुमायतनस्थितम्॥ १८४ ॥
महता विभवेनैव स्नानपूर्वेण कर्मणा। पूजयित्वा यथान्याय सत्सूक्तैस्सम्यगुत्तमैः ॥ १८५ ॥
रहस्यमन्त्रपूर्वैस्तु साष्टार्णद्वादशाक्षरैः। जानुभ्यामवनिं कृत्वा नतमूर्धाग्रतो भवेत्॥ १८६ ॥
तदेकक्षमपूर्वं तु विनिवेश्य इदं पठन्। परं वसु त्वया कृत्वा सर्वं संपूरितं त्वया ॥१८७॥
तारेयं परमा शक्तिस्त्वमियादेव पूजित। वाग्यायाननमाग्नेयतुल्यं यज्ञस्य वै फलम्॥ १८८ ॥
सुमहद्गोकुलोपेतं ग्रामं यद्विषयोदितम्। तत्पालकानां विप्राणां शासनेन समाप्य च॥ १८९॥
यथा नोच्छिद्यते चैव कीर्तिधर्मपरं महत्। नृपेणैतत्तथा कार्यं यशोधर्मविवृद्धये ॥ १९० ॥
पट्कायदधिकं चैव सशुभं कारितं त्रयम्। गोष्ठमग्निं च दीपं च अङ्गमायतनेषु तत् ॥१९१॥
धर्मज्ञैः पालनीयं च विच्छेदो न भवेद्यथा। यस्माद्धविर्मुखेनैव त्रयस्त्रिंशत्तु कोटयः ॥ १९२ ॥
प्रत्यहं तृप्तिमतुलां विबुधानां प्रयान्ति च। दधिक्षीराज्यपूर्वैस्तु विविधैर्गोसमुत्थितैः ॥ १९३ ॥
प्रीतिमभ्येति भगवानुपहारैस्तु सात्त्विकैः। परमादित्यवत् सर्वमाभासयति तेजसा॥ १९४ ॥
प्रभावाच्चैव दीपस्य नित्यं सन्निहितस्य च। योऽधिकृत्य जगन्नाथं षडर्णानिमुखासु च ॥१९५॥
तिथिष्वचर्यस्तु भगवान् कलशे मण्डलेऽनले। सोपवासः शुचिस्स्नातः कृतकौतुकमङ्गलः ॥१९६॥
प्रणवादिनमोन्तेन मन्त्रणानेन भक्तितः। प्रीयतां मम देवेशो धर्माध्यक्षो वृषाकपिः॥ १९७॥
गोहिता गोपतिर्गोप्ता सर्वमावृत्य च स्थितः। ततोऽनुलिप्ते भूभागे कुतपः केवलं तु वा॥१९८॥
अभुक्तमहतं शुद्धं प्रस्तीर्य सतिलाक्षतम्। समस्तबीजं सकुशं सिद्धार्थकसमन्वितम्॥ १९९ ॥
तद्बहिस्तेजसं दद्यात् पूर्णं प्रागादितः क्रमात्। पालाष्टकं पयश्शालिदध्यक्षतरसैस्तिलैः॥ २००॥
घृतेन सर्वबीजैस्तु वस्त्रैर्यवनिका बहिः। इषुभिस्सह सूत्रैस्तु बर्हिपक्षैस्सुविष्टरैः॥ २०१ ॥
जातबीजशरावाश्च पूर्णकुम्भसुसंस्थिताः। पूर्णशाखासमेताश्च तरुशाखाभ्यलंकृताः॥ २०२ ॥
दिक्षु प्रज्वलितैर्दीपैस्सह न्यस्य ऋगादिकैः। ततोऽवतार्य तन्मध्ये सुरभिः कृतमण्डलाम्॥
स्रालंकृतां सवस्त्रां च घण्टाचामरभूषिताम्। सरत्नहेमकुमुदां तच्छृङ्गपरिभूषितां॥ २०४ ॥

मुक्ताप्रवाललाङ्गूलां रजताङ्घ्रिमभिप्रियाम्। ललाटदर्पणां श्रीमत्स्रगुष्णीषबलां महत् ॥ २०५॥
एवमेवाथ वीर्यध्वं सुरभि कृतमण्डनाम्। यौवनस्थामधृष्टां च वामभागे वृषस्य च ॥ २०६ ॥
कांस्योपदोहसंयुक्तां पूर्वेद्यु ध्विवासिताम्। नन्दामुनन्दासुरभिशीतलाख्यपदान्विताम् ॥ २०७ ॥
चत्वारो धेनवः स्थाप्याः प्रागादौ तत्र संमुखम्। सुशक्तिविभवोपेता दुग्धदोहप्रदक्षमाः ॥२०८॥
सगर्भाश्च सवत्साश्च प्रसूताश्च सकृत् सकृत्। इष्टदेवमथोद्दिश्य दिग्भागान् सांप्रतं तु वै ॥
हेतिना च तदीयेन चन्दनेनात्वचोत्सृजेत्। वृष्णिक्षेत्रसमेतं च तस्य चासंभवात्तु वै ॥ २१० ॥
आनुगुण्यं यथाशक्त्या तन्मूल्यं तु न कल्प्य च। चतुर्णामग्निहोत्राणां बहिस्स्थाः प्रतिपाद्य च ॥
वस्त्रालंकरणोपेतं मूल्यं च सुरभीयकम्। वसुधां वसुधार्थं वा वृषोपकरणं हि यत् ॥ २१२ ॥
प्रणिपाद्य गुरोर्भक्त्या वृषभं सुरभि त्यजेत्। दक्षिणे स्कन्धदेशे च हेतिनाभिमतेन च ॥ २१३ ॥
लोहेनानलतप्तेन मुद्रणीयं क्षणेन च। एवं कृत्वा वृषत्यागं तदुद्देशेन वै पुनः ॥ २१४ ॥
प्रभूतमन्नदानं च दद्याच्चैव सदक्षिणम्। समन्त्रनाथमुद्दिश्य ह्यात्मनोऽर्थे परस्य वा ॥ २१५ ॥
वृषोत्सर्गं हि य कुर्याद्ब्रह्मलोकं व्रजत्यसौ। वृषो हि भगवान् धर्मो लोके कामार्थबन्धतः ॥
तेन त्यक्तेन संत्यक्तं जन्मदुःखं हि शाश्वतम्। प्रकृत्या सह वै शश्वत् सुरभी सविनश्वरा ॥
तद्विशेषाच्च तिस्रो याश्शक्तयो मदनात्मिकाः। बुद्धिरस्मीति पूर्वा च पञ्चेन्द्रियमथापरा ॥२१८॥
विनिवर्तन्ति सर्वास्ता गोत्वमाश्रित्य ये स्थिताः। नानाधर्मप्रतिष्ठानं वृषोत्सर्गेण वै सह ॥
उक्तमब्जसमुद्भूत इदानीमवधारय। अपवर्गप्रदं दिव्यं सूचितं यत् पुनः पुनः ॥ २२० ॥
प्रतिष्ठापनमब्जाक्ष आच्युतं भुक्तिमुक्तिदम् ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां नानाधर्मप्रतिष्ठापनं नाम एकचत्वारिंशोऽध्यायः ॥

(समुदितश्लोकसंख्या २२१॥)



# अथ द्विचत्वारिंशोऽध्यायः

**श्रीभगवानुवाच —**

क्ष्मापरिग्रहपूर्वाणामारम्भे सर्वकर्मणाम्। द्वादशाक्षरपूर्वैस्तु मन्त्रैस्सर्वेश्वरः पुरा ॥ १ ॥
आराध्यो भगवान् भक्त्या वेद्यां वा कलशे स्थले। सन्तर्प्याज्यादिकैर्भक्त्या मन्त्रैश्श्रुतिमयैस्तत॥
भगवान् विश्वकर्मात्मा सगणेशं तु याजयेत्। विविधैरुपचारैस्तु पुष्पधूपानुलेपनैः ॥ ३ ॥
विसर्जने कृते विष्णौ सानले कमलोद्भव। शिल्पिनो यत्र ये दक्षा मान्यास्ते तदनन्तरम् ॥४॥
यथाप्रसन्नबुध्या तु शश्वन्निर्वर्तयन्ति च। तैरपि प्रयतैस्स्नातैस्स्वर्गीय स्वकः पतिः ॥ ५ ॥
ततः परिगृहीतव्यं क्षेत्रं त्वभिमतं द्विज। अभुक्तमथवा भुक्तं वसुधागुणलक्षितम् ॥ ६ ॥
निश्शल्यमनुकूलं च स्थपतीनां च संमतम्। समादाय प्रतिष्ठार्थं यथाभिमतविस्तृतम् ॥ ७ ॥
महेन्द्रोऽपांपतिर्वायुर्वित्तपेशानदिक्षु च। पदमासाद्य वै कुर्याद्दिव्याद्यायतनाश्रितम् ॥ ८ ॥
पञ्चायतनपूर्वं तु शुभं देवगृहं महत्। [१]सिद्धायतनस्वमार्गात्तु विमार्गात्तदसिद्धये ॥ ९ ॥
एतावदर्थनान्मुक्तं अतोऽन्येषां तु दोषकृत्। स्वमार्गे परमार्गे वा येषां सर्वगतो हरिः ॥ १० ॥
स्फुरत्यविरतं बुद्धौ गुरुं तं शास्त्रतस्स्वयम्। शुभेऽनुकूले नक्षत्रे ततस्कृत्याच्युतं विभुम् ॥ ११ ॥
निर्वर्त्य नित्यं विघ्नेन पूर्वमर्चापयेद्द्विज। सह एकायनैश्चान्यैः ऋग्यजुस्सामपाठकैः ॥ १२ ॥
सालंकारैश्च सोष्णीषैस्सिताम्बरधरैस्तथा। समालभनमाल्यैश्च भूषितैस्साङ्गुलीयकैः ॥ १३ ॥
शङ्खादित्ननिर्घोषैर्गीतिभिर्साङ्गुलीयकैः। फलपुष्पाक्षतकरो जालसिद्धार्थकादिकम् ॥ १४ ॥
समादाय शुचिः कर्ता देशिकेन सह द्विज। स्थानमासाद्य सर्वेषां वासुदेव हृदि स्मरन् ॥१५॥
पुण्याहं वाचयित्वा च गायत्रीत्रितयादिकम्। उद्घोष्य शाकुनं सूक्तं शिवसंकल्पमेव च ॥१६॥
श्रीसूक्तेन समोपेतं भद्रश्रीसाममुत्तमम्। कर्मारम्भेण सह वै स्वस्ति भो इत्यथ पठेत् ॥ १७ ॥
चमषट्कांस्ततोदीर्य शान्त्याद्यास्तदनन्तरम्। जपन्नष्टाक्षरं तिष्ठन् कर्तास्ते देशिकस्तत ॥ १८ ॥
बहिः क्षेत्रस्य चैशान्यां प्राच्यां वा कमलोद्भव। ततां पर्णकुटीं कृत्वा वातवृष्टिक्षमां शुभाम् ॥
तत्र पुष्पार्घ्यधूपाद्यं कृत्वा वै भद्रपीठगम्। पञ्चगव्यं समासाद्य सार्धं मन्त्रैर्विलक्षणैः ॥ २० ॥
नारायणमपां मूर्तिं हेमाद्ये कुतपे शुभे। सन्निधीकृत्य संपूज्य सरित्तीर्थाम्बुपूजिते ॥ २१ ॥
हेमसर्वौषधीरत्र दर्भवर्गस्रगान्विते। मन्त्रास्त्रकलशाभ्यां तु संपाद्य रचनां ततः ॥ २२ ॥

---

१. ग–घ—सिद्धये तत्स्वमार्गात्

साधारमासनं ताभ्यां ज्ञात्वा कुर्यात्तदर्चनम्। हृदि मन्त्रेश्वरं सास्त्रं पूजयित्वा यथाविधि ॥२३॥
न्यस्तव्यमासने कौम्भे प्राणवन्मनसा सह। सौम्यनाडीपथा चैव ततो ह्यस्त्रं समन्त्रराट् ॥२४॥
दक्षिणेन तु मार्गेण त्वपसव्यघटे विभोः। अवतार्य ज्वलद्रूपं दहन्तं विघ्नसंचयम् ॥ २५ ॥
मन्त्रत्रयं तु सामान्यं सर्वत्र विहितं द्विज। षडष्टाक्षरमन्त्रं यत्तथा वै द्वादशाक्षरम् ॥ २६ ॥
हेतीशं यत्सहस्रारं परिज्ञेयं तदायुधम्। कृतदीक्षेण यल्लब्धं सुप्रसन्नाच्च वै गुरोः ॥ २७ ॥
अस्त्रं तदङ्गमापाद्य सविशेषमिदं शुभम्। साङ्गं समर्चयित्वा तु भोगैर्मात्रावसानिकैः ॥ २८ ॥
सत्सूक्तैर्यजुभिस्सामैर्यथावसरलक्षणैः। व्यञ्जकैरथ सर्वेशमथ होमं समाचरेत् ॥ २९ ॥
सहस्रशतसंख्यं यत् पूर्णान्तैस्साक्षतैस्तिलैः। कुण्डमन्त्रास्त्रहृत्पूतैर्गेवं कुर्यात्तु देशिकः ॥ ३० ॥
स्थलेषु वालुकाद्येषु प्रागादौ विनिवेश्य च। चत्वारश्चातुरात्मीया मन्त्रज्ञाः कृतमण्डनाः ॥३१॥
ऋग्वेदाद्याश्चतस्रो ये ईशाद्वाय्वन्तमवधि। भक्त्या क्रियापरा याज्या होमार्थं क्षेत्रसंग्रहे ॥ ३२ ॥
होतव्यं श्रमिलिङ्गैस्तैर्मन्त्रैराज्यादिकं बहु। चतुर्भिश्चातुरात्मीयैर्द्विषट्कार्णपुरस्सरैः ॥ ३३ ॥
होतव्यमपरैर्विप्रैस्स्मरन् सर्वेश्वरं हरिम्। उपद्रष्टा चतुष्कोणे एकैकं विनियोज्य च ॥ ३४ ॥
होमार्थं सर्वकुण्डेषु मन्त्रविन्यस्तविग्रहम्। शुचयस्संयता दक्षा वास्तुशास्त्रकृतश्रमान् ॥ ३५ ॥
विश्वकर्मकुलोद्भूतानाहूयाग्रे निवेश्य च। पञ्चगव्यादिनाभ्युक्ष्य सिताम्बरधरांस्तु वै ॥ ३६ ॥
माल्यचन्दनसौवर्णाद्यैर्भूषिताङ्गुलिकादिकान्। संवीक्ष्य पावनीकृत्य ह्यादाय घटिकान्वितम् ॥
कार्पासं सुदृढं सूत्रं सहस्राराभिमन्त्रितम्। स्थपतीनां करे दद्यात् सह चैकशलाकया ॥ ३८ ॥
प्रोक्षितान् पञ्चगव्येन सहस्राराभिमन्त्रितान्। विकीर्य लाजसंमिश्रान् बीजान् सिद्धार्थकान्वितान् ॥
जपन्नस्त्रं सचक्रं च त्रिधा कुर्यात् प्रदक्षिणम्। प्राक्पदात्तत्पदं यावत् सह घण्टारवैश्शुभैः ॥
क्षेत्रमानमथादाय करैरभिमतैस्तत । शिष्यदेशिककर्तॄणां स्थैर्विश्व१कर्मांशकैस्तु वा ॥ ४१ ॥
ईशकोणादि तत्सूत्रं चतुर्दिक्षु प्रसार्य च। शङ्कुभिर्यज्ञदारूत्थैर्मुद्रयेच्च दिशाष्टकम् ॥ ४२ ॥
ततो भूतबलिं दद्यात् प्रादक्षिण्येन बुद्धिमान्। तिलपिष्टं निशाचूर्णं सलाजदधिसक्तुकम् ॥
भूतक्रूरमिति प्रोक्तं तेन भूतबलिं हरेत्। भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन ॥ ४४ ॥
ते सर्वेऽप्यपगच्छन्तु स्थानं कुर्यामिमं हरेः। शरवेत्रलताचर्मपुञ्जाद्यैर्ग्रथितान् द्रुमान् ॥ ४५ ॥
२मृद्धुङ्गोर्ध्वसमाकारान् पाण्डुमृद्ग्रहणक्षमान्। नचाङ्गहोमास्युत्तीक्ष्णान् कुद्दालाख्यखनित्रकान् ॥
सुदृढान् यज्ञकाष्ठोत्थान् हस्तिपादांश्च पूजयेत्। क्षेत्रब्रह्मपदे स्थित्वा यथाभिमतदिङ्मुखः॥४७॥
संस्मृत्य द्वादशार्णेन भगवान् भूतभावन.। अधिभूताधिदेवाख्यं स्मरेदध्यात्मलक्षणम् ॥ ४८ ॥

१. ग-घ—कर्मांशजैस्तु वा १. क-ख—मृद .समाकारान्

सप्तद्वीपवतीं तत्र समुद्रादिसमन्विताम्। सप्तपातालसहितां [1]भूतैर्युक्तं चरादिकैः ॥ ४९ ॥
शक्तिभिश्शब्दनिष्ठाभिस्सर्वभाभिस्समावृताम्। ब्रह्मबीजसमेतेन लकारेण सबिन्दुना ॥ ५० ॥
स्वसंज्ञानतियुक्तेन मानयित्वा पुरा ततः। भावयित्वाधिभूतत्वमाधिदैवमतस्स्मरेत् ॥ ५१ ॥
सामर्थ्यं यद्भगवतो विष्णोस्सर्वेश्वरस्य च। परमध्यात्मरूपं च वाराहं वैष्णवं महत् ॥ ५२ ॥
एतावदुक्तं सामान्यं ध्यानं क्षितिपरिग्रहे। देवालयवशादन्यद्विशेषं चात्र संस्मरेत् ॥ ५३ ॥
चतुरश्रे चतुर्मूर्तिव्यक्तिव्यूहं विचिन्त्य च। चतुरश्रायने ध्यायेद्दिव्यं विद्यागमाभिदम् ॥ ५४ ॥
वृत्तशान्तोदितं चक्रं संवृतावयवं स्मरेत्। अनन्तशयनं देवं ध्यायेद्वृत्तायने गृहे ॥ ५५ ॥
पुर्यष्टकं यदमलं कालपुष्करदेहभृत्। नाभिरन्ध्रोद्भवं विष्णोस्स्थितमष्टदिगात्मनाम् ॥ ५६ ॥
देवालये द्विजाष्टाश्रे स्मर्तव्यं वसुधागृहम्। ध्यात्वैवं द्वादशार्णेन मन्त्रेण च पुनः पुनः ॥ ५७ ॥
षडक्षरेण संरोध्य मुद्रां बद्ध्वा द्विजाच्युतम्। अधिध्यानसमाधानाद्यावत् कलशसन्निधिम् ॥५८॥
प्राग्वद्विलक्षणैर्भोगैरथाष्टार्णेन पूजयेत्। सह विप्रैस्स्वयं दद्यादग्नौ पूर्णाहुतिं पुनः ॥ ५९ ॥
सर्वकर्मसमाप्त्यर्थं क्षेत्रे क्षेत्रीकृते सति। कुर्यात् पादप्रतिष्ठां वै सुशुभे दिवसे परे ॥ ६० ॥
अथ कर्मकरा दक्षा नियोक्तव्याः क्रमेण तु। सन्तोष्य चान्नपानाद्यैस्तोषमायान्ति वै (यथा) ॥

**श्रीभगवानुवाच—**

एवं परिगृहीते तु क्ष्मांशे शल्योज्झिते सति। आकृष्टे सोपला बाला वसुधा वसुभूमिदा ॥६२॥
शुद्धिं सापेक्षते किञ्चित् कृत्रिमामुदपासरः। यावन्नोपवनस्तावत् चिररूढैर्महाद्रुमैः ॥ ६३ ॥
सङ्कीर्णा तत्प्रसूतैश्च मूलैर्व्याप्ता निरन्तरैः। ज्ञातं तस्यापि बालत्वं शुद्धिर्वै भाविनी स्मृता ॥
त्यक्ता सरित्प्रवाहेन नगरग्रामदेशिकाः। महान्तं प्रेक्षते शुद्धिं भङ्क्त्वाशा बहुशो यतः ॥ ६५ ॥
खात्वा वै भावमुद्धृत्य दायादस्येति मृच्छुभाम्। सितामशर्करां स्निग्धां [2](जलान्तर्निक्षिपेत वा ॥)
दृष्ट्वा जलं समभ्यर्च्य तर्पयेद्यादसांपतिम्। नागनाथसमोपेतं सुरसङ्घमतस्थितम् ॥ ६७ ॥
स्थित्यर्थमुपलैस्सर्वैस्सह संपूर्यते मृदा। मृदोपलैश्च संपूर्य जातिषु स्निग्धया तया ॥ ६८ ॥
आकोट्य पौनःपुन्येन बालार्द्रे वारिसेचना(त्)। समीकृत्योपलिप्याथ गोगणांस्तत्र वासयेत् ॥
बालवत्ससमेतं च वृषेन्द्रगणसंयुतम्। सतोयाश्शालयश्चैव प्रभूततृणसञ्चयम् ॥ ७० ॥

१. क-ख—श्रुतयुक्ताम २. क-ख—अथ पाद लक्ष

विकीर्य सतिलं तत्र सन्त्यक्ते गोमयादिकैः। अपास्य गोगणं पश्चादुपलिप्य पुनर्महीम्॥ ७१॥
समर्चयित्वा सूर्यात्मा प्रागवद्दिक्सिद्धिमाचरेत्। प्रासादं भगवद्रूपसमेतं कमलोद्भव॥ ७२॥
यथाभिमतदिग्वक्त्रं निश्चयीकृत्य वै पुरा। भूभागे सति वै कुर्यात्तदग्रे यागमण्डपम्॥ ७३॥
दिक्त्रये तदलाभे तु सौम्ययाम्यदिगायतम्। आनुगुण्याय शुद्धिं च सुखं निर्बाधमिश्रितम्॥
शरैः काशैश्शरैः कूर्चैरच्छिन्नं वा परैस्तु वा। सान्तरं विहितं तत्र पार्थिवं पीठपञ्चकम्॥
सप्तषट्पञ्चहस्तं च विभवानुगुणं ततः। चतुर्हस्तं तु वै सार्धं चतुर्हस्तमथापि वा॥ ७६॥
सुविस्तृतै(ते) ष्षडंशेन सर्वेषां परिवर्ज्य च। अन्तरालानि विप्रेन्द्र तदुच्छ्रायमथाचरेत्॥७७॥
चतुर्विंशतिमांशेन स्वेन स्वेन महामते। तद्विस्तारोच्छ्रिते सर्वे कोणस्तम्भेषु भूषयेत्॥ ७८॥
तन्मानेन समारोप्य स्तम्भानां शिरसोपरि। रचनारचिताश्चान्ये दण्डास्तिर्यक्प्रसारिताः॥७९॥
सर्वे स्थूलाब्जसंभूताश्चतुर्दिक्तोरणान्विताः। तृतीयांशेन वै पीठात्तोरणाविस्तृतिर्भवेत्॥ ८०॥
सुविस्तृतैस्त्रिभागेन सर्वेषामुन्नतिस्स्मृता। सचक्रगरुडास्सर्वे त्रिचतुःपञ्चसंख्यया॥ ८१॥
सान्तरालप्रमाणेन सस्तम्भास्तोरणाखिलाः। विनिवेश्या क्षितौ कृत्वा सर्वे चैव सुलक्षणाः॥
चतुरश्रास्त्वथो देशा ह्यष्टाश्रा मध्यतो द्विज। वर्तुलाश्चार्ध्वभागाश्च समांशेन विभाजिताः॥
वीथी प्राक्पश्चिमा भागा उभयोः पीठसंमिताः। सोत्तरं दक्षिणं भागमेकैकं पीठवर्तकम्॥८४॥
कृत्वैवं भगवद्यागमण्डपं सर्वकर्मणा। उदग्दिक्पीठतश्चोर्ध्वे धिष्ण्यं कुर्यात् कजाङ्कितम्॥८५॥
वर्तुलं चतुरश्रं वा प्रकाशाख्यं सुलक्षणम्। शङ्खचक्रगदापद्मैश्चिह्निते मेखलावनौ॥ ८६॥
द्रव्याणामधिवासार्थं तत्समीपस्थितां महीम्। मध्यमे मण्डलं पीठे मन्त्रास्त्रकलशार्चनम्॥८७॥
चतुष्कं स्नानकुम्भानां सोषधीनां निवेशने। अन्यत्र शयनं तस्मिन् स्नानपीठं तु विन्यसेत्॥
स्नानकुम्भसमीपं तु स्नानद्रव्यसमन्वितम्। पीठं तत्पञ्चमं विद्धि वालुकाभिस्सुपूजितम्॥ ८९॥
सद्वारं सगवाक्षं च सकवाटं हि सार्गलम्। [1]कृत्वैवमधिवासार्थं प्राकारवलयं महत्॥ ९०॥
प्रासादक्षेत्रमानं च सन्त्यज्य परितः स्थितम्। समेखलं सपीठं तत् दिक्षु कुण्डाष्टकं लिखेत्॥
अनुकल्पे तु वै कुर्यात् प्राच्यां दिङ्मण्डलाद्बहिः। तत्पाश्चात्ये तु वा भागे एकपीठास्सतोरणाः॥
सस्तम्भा वा पृथक्पीठा विविक्ताश्च परस्परम्। प्राग्भागे चक्रपद्माख्यं दक्षिणे केवलेश्वरी॥९३॥

१. क-ख—कृत्वैवथ मवासाथम्

चतुरश्रं तु वा कल्प्यं गदामेखलमब्जज। पद्ममुत्तरदिग्भागे शङ्खं कोणचतुष्टये ॥ ९४ ॥
एष पादप्रतिष्ठायां कुण्डानां संस्थितिस्स्मृता। चातुरात्म्यादिदेवानां ब्रह्मन् स्थापनकर्मणि ॥
संस्थितिं शृणु कुण्डानां विविधा दिग्विदिक्षु च। महाविभवसौभाग्यआयुरारोग्यवृद्धये ॥ ९६ ॥
सिद्धये सर्वकर्माणां विघ्नानां विनिवृत्तये। व्यत्ययाच्च फलं विद्धि मुक्तये समतानसौ ॥ ९७ ॥
गदाद्वन्द्वद्वयोपेतं प्राग्दिक्तुर्याश्रमेव च। चक्रदक्षिणदिग्विप्र शङ्खं प्रत्यग्गते ततः ॥ ९८ ॥
पद्ममुत्तरदिग्भागे यथाभिमतपल्लवम्। आग्नेयं तु समापाद्य कुण्डमश्वत्थपत्रवत् ॥ ९९ ॥
विमुक्तकमलं कुर्यात्त्रिकोणं पूर्ववर्तुलम्। होमार्थं यातुदिक्कुण्डमष्टाश्रं वायवे पदे ॥ १०० ॥
धिष्ण्यं श्रीवत्ससंज्ञं यत् प्राग्वदर्धेन्दुलक्षणम्। ऐशान्यां तु समालिख्य लक्षणेनोपलक्षितम् ॥
अतोऽपरं संनिवेशमेकाग्रमवधारय। धिष्ण्यं पूर्वपदे वृत्तमाग्नेय्यां कौस्तुभाकृतिम् ॥ १०२ ॥
चक्रं दक्षिणदिग्भागे शार्ङ्गाकारं तु यातुदिक्। आप्यं गदाकृति प्राग्वन्मालाख्या वायवे पदे ॥
उदग्दिक्कमलाकारं श्रीवत्साकारमीशगम्। विस्तारसममानं तु सर्वेषां विहितं तु वै ॥ १०४ ॥
प्राग्वद्द्वादशमांशं तु ओष्ठार्धं परिमृज्य च। सुसमं मेखलाबन्धं कुर्यात्तद्विस्तृतेस्समम् ॥ १०५ ॥
समेखला वै विषमास्सर्वेषां पूर्ववद्द्विज। यथोक्तलक्षणा कार्या योनिः पिप्पलपत्रवत् ॥ १०६ ॥
मध्यदेशे सुवृत्तं च तुर्यं श्रीवत्सलक्षणम। प्रासादक्षेत्र[1]भूमेर्वा तमेवेशपदे बहिः ॥ १०७ ॥
संपाद्य मानयुक्तं वा तर्पणे सर्वकर्मणाम्। वास्त्वङ्गविबुधानां च लोकेशानां महामते ॥ १०८ ॥
विघ्नेशद्वारपालानां क्षेत्रेशस्य तथा क्षिते। संपाद्यमेवमब्जोत्थ सकुण्डं यागमन्दिरम् ॥ १०९ ॥
ततोऽन्तरात् सबाह्यं च ऊर्जन परिभूषयेत्। सुविचित्रैर्ध्वजै रम्यैर्वैजयन्तीगणैश्च तैः ॥ ११० ॥
प्रोच्छ्रितैः कदलीस्तम्भैर्द्रुमाङ्गैः पावनैर्दृढैः। सवस्त्रैः पूर्णसुघटैः पुष्पैर्वै मञ्जरीगणैः ॥ १११ ॥
वितानैर्विविधाकारैर्विनानलगृहं तु वै। सशरैर्बर्हिपक्षैस्तु सूत्रैर्भूताधिदैवतैः ॥ ११२ ॥
प्राक् प्रातैर्लोकनाथाद्यैर्द्वास्थैः [2]क्षेत्रनलागृहैः। दर्पणैश्चामरैश्चित्रैर्घण्टावृन्दैस्स्वरान्वितैः ॥११३॥
मध्वाज्यदधिसक्षीरसुपूर्णैः कांस्यभाजनैः। उपकुम्भाननस्थैश्च हरितैः पालिकागणैः ॥ ११४ ॥
शालितण्डुलपात्रैस्तु सहिरण्यैः फलोद्भवैः। लाजसिद्धार्थकैर्बीजभाजनैः षड्रसान्वितैः ॥ ११५ ॥
सत्सुगन्धैस्त्वगेलाद्यैः पात्रैः पूगफलैस्ततः। मधूकबदरीलाक्षाइक्षुभिस्त्रिफलैः फलैः ॥ ११६ ॥

१. ग-घ—भूमेर्वै २. क-ख—क्षेत्रलतागृहैः

यथा तत्प्रभवैः पुष्पैः बहुभिः प्रकरीयकैः । इत्येवमाद्यैर्विविधैर्भोगपूगैस्तु पावनैः ॥ ११७ ॥
भूमयः पीठबाह्यास्तु सर्वदिक्परिवार्य च । संप्रवेश्याखिलं तत्र संभारं भूरिसम्भृतम् ॥ ११८ ॥
शुभे ग्रहेऽनुकूले च नक्षत्रे सुस्थिरे ततः । लग्ने स्थिरे स्थिरांशे च परिशुद्धे गुणान्विते ॥११९॥
प्रासादाङ्घ्रिप्रतिष्ठार्थं कर्ता वै भगवन्मयः । कृताह्निको द्विजेन्द्राद्यैर्देशिकेन समन्वितः ॥१२०॥
भेरीपटहवादित्रशङ्खशब्दादिकैस्सह । ऋग्यजुस्सामपूर्वांश्च प्रशस्तास्संपठन् श्रुतीः ॥ १२१ ॥
द्वारपालार्चनं कृत्वा यागागारं प्रविश्य च । संस्मृत्य स्वासने व्याप्तिमर्चयित्वोपविश्य च ॥
मध्यपीठसमीपे तु प्राङ्मुखं पश्चिमे पदे । प्राग्दिक्प्रत्यङ्मुखं योज्य मृन्मयाश्वासनेषु च ॥
उदग्दक्षिणदिग्यन्त्रं यजुर्वेदांस्तु योजयेत् । प्राङ्मुखं पश्चिमे भागे सामज्ञान्विनियोज्य च ॥
सह चैकायनैर्विप्रैर्मूर्तिसंज्ञोपलक्षितैः । दिगुत्तरस्यां च ततो नित्यकर्मपरायणान् ॥ १२५ ॥
निवेश्याथर्ववेदांश्च सर्वे द्विद्विकसंख्यया । पृष्ठतस्सुसहायाद्यैस्सम्यग्ज्ञानप्रतीक्षकः ॥ १२६ ॥
उपदेष्टा च मन्त्राणां द्विजादीनां समर्चने । दक्षिणे स्वात्मनः कुर्यादेकचित्रं समाहितम् ॥१२७॥
ततः समाचरेत् न्यासं द्वादशाक्षरमूर्तिना । मन्त्राभिमानशक्तिं वै समालम्ब्य धिया ततः ॥
अथाष्टाक्षरपूर्वैस्तु मन्त्रैरश्रुतिमयैस्तत । प्राक्प्रोक्तविधिना पाद्यं भृङ्गारकमलं पुरा ॥ १२९ ॥
पाद्यार्घ्यैः पञ्चगव्यं च कृत्वाभ्यर्च्य द्विजातये । समालम्भनपुष्पाद्यैस्सवस्त्रैरङ्गुलीयकैः ॥१३०॥
पवित्रकैस्तु हेमाढ्यैर्धूपयित्वा यथाक्रमम् । प्रयतस्ससहायश्च स्थपतिश्चोपवेशयेत् ॥ १३१ ॥
दत्त्वाज्ञामथ मानस्य कर्मभूमौ स्थितानि च । सुवर्णरजतोत्थानि नवताम्रमयानि वा ॥ १३२ ॥
शैलजान्यनुकल्पे तु मृत्कुम्भान्यथवाब्जज । तत्र मध्यमकुम्भं यत् चतुर्विंशाङ्गुलेन च ॥१३३॥
विस्तृते मध्यतस्तच्च द्व्यङ्गुलद्व्यङ्गुलोन्नतम् । वक्त्रमङ्गुलषट्केन तत्रास्यं त्र्यङ्गुलं स्मृतम् ॥ १३४ ॥
मेखलोपरितो ज्ञेया त्र्यङ्गुला कमलोद्भव । ये तु दिक्कमलान्यैवैतदर्धेनोन्नतैस्समाः ॥ १३५ ॥
फलैश्च विविधैश्चैव सह संपूर्य वै मृदा । आकोष्ठ्य खादिरैः काष्ठैः प्रबलैरम्बुसन्निभाः ॥१३६॥
पूरणार्थमशपात्तु कृत्वा खातं तु साधकम् । समीकृत्योपलिप्याथ प्राग्वद्दिक्सिद्धिमाचरेत् ॥१३७॥
भूषयेच्च ध्वजैरन्यैर्वैजयन्तीस्समुत्क्षिपेत् । शोभयेत् कदलीपूर्वैर्द्रुमाङ्गैः पावनैर्दृढैः ॥ १३८ ॥
वस्त्रैः पूर्णघटैः पुष्पैः कौशेयैर्मञ्जरीगणैः । शुभे ग्रहेऽनुकूले तु नक्षत्रे शुभदर्शने ॥ १३९ ॥
लग्ने स्थिरे स्थिरांशे च परिशुद्धे गुणान्विते । प्रासादाङ्घ्रिप्रतिष्ठार्थं कर्ता वै भगवन्मयः ॥
कृताह्निको द्विजेन्द्राद्यैर्देशिकेन समन्वितः । भेरीपटहवादित्रसर्वशब्दादिकैश्शुभैः ॥ १४१ ॥

वन्दिबृन्दसमोपेतैर्गीयमानैश्च मङ्गलैः। सामऋग्यजुपूर्वास्तु प्रशस्ताः पाठयेच्छ्रुतीः ॥ १४२ ॥
सहसंभृतसंभारक्ष्माकृतं क्ष्मातलं विशेत्। समाचम्य कृतन्यासो द्वादशाक्षरमूर्तिना॥ १४३ ॥
अथाष्टाक्षरपूर्वैस्तु मन्त्रैश्श्रुतिमयैस्सह। पाद्यार्घ्यपञ्चगव्यं तु कृत्वाभ्यर्च्य द्विजोत्तमम् ॥१४४॥
स्थपतिश्चार्घ्यपुष्पाद्यैः प्रवर्तेत सुकर्मणि। ओङ्कारपूर्वां गायत्रीमेकैकं पाठयेद् द्विज ॥ १४५ ॥
गायत्रीसामपूर्वं च कनिक्रन्दमुदीर्य च। एवमोङ्कारपूर्वं च कर्मारम्भमनन्तरम्॥ १४६ ॥
पठेदेकायनं पश्चात् शिवसंकल्पमेव च। ऋग्वेदज्ञो यजुर्ज्ञोऽथ भद्रानं समुदीर्य च ॥ १४७ ॥
भद्रश्रीसामसामज्ञश्शताद्यो कृत्यधर्मवित्। विभज्य पूर्ववत् क्षेत्रं पवित्रीकृत्य सांप्रतम्॥ १४८॥
पवित्रमन्त्रैरखिलैर्वैदिकैः पाञ्चरात्रिकैः। कन्यां च सौम्यदिग्भागे ऐशान्यां वालयावने ॥१४९॥
मण्डलं पार्थिवे पीठे विनिवर्त्य चतुस्समे। अशुभं सर्वतोभद्रं वश्यागारद्वयान्वितम्॥ १५० ॥
भद्रपीठासनस्थं च सोदकं च घटद्वयम्। स्रगाद्यैर्भूषितं कृत्वा एकस्मिन् साधनं यजेत् ॥१५१॥
द्वादशाक्षरमन्त्रेण भगवान् पुरुषोत्तम । श्रुत्युक्तैर्मन्त्रमुख्यैस्तु तदन्यपरके घटे॥ १५२ ॥
मन्त्रैर्हेतीशलिङ्गैस्तु चतुर्वेदसमुत्थितै । मण्डपाग्रमथासाद्य हार्दमापाद्यमर्चनम्॥ १५३ ॥
अवतार्य बहिः कुर्यात् पूजनं प्राग्यथोदितम्। पूर्णाहुतिं विनाग्नौ तु तर्पयित्वा यथाविधि॥
यजेद्वास्तु नराद्यं वै सुरसङ्घं तदङ्गकम्। शतं शतार्धं पादं वा आहुतीनां समापयेत् ॥१५५॥
तिलानामाज्यसिक्तानामाज्यस्य तदनन्तरम्। सामरैर्वास्तुलिङ्गैस्तु मन्त्रैर्देवव्रतादिकैः ॥ १५६॥
सुसमं कलशानां तु नवकं त्वथ धातुजम्। यथाशक्तिप्रमाणं तु नाल्पं वै द्वादशाङ्गुलम्॥
शैलजं मृन्मयोत्थं वा सुपक्वं सुदृढं शुभम्। भृङ्गारतुल्यमष्टाश्रं शङ्खाकारं तु वोच्छ्रितम्॥
बलिर्हीनं विरक्तास्यं द्रव्याणां ग्रहलक्षणम्। शुद्ध्यर्थमथ सर्वेषां स्नानकर्म समाचरेत् ॥ १५९॥
अधिवास्याम्बरच्छन्नान् सद्यो वाऽन्येऽहनि द्विज। क्रमशः पूरयेद् द्रव्यैस्तल्लिङ्गैश्श्रुतिसंपठैः ॥
गायत्र्याष्टाक्षरेणैव द्वादशाक्षरविद्यया। सुवर्णसिकताभिस्तु रत्नैर्मुक्ताफलादिकैः॥ १६१ ॥
धातुभिश्चाखिलैर्धान्यैरथान्यैः पारतादिकैः । सिद्धार्थकान्वितैर्बीजैर्धान्यैर्नीवारपूर्वकैः ॥ १६२ ॥
कर्पूरमलयक्षोदकुङ्कुमागरुमिश्रितैः। पट्टस्रक्चन्दनाद्यैस्तु बाह्यतश्चोपशोभयेत् ॥ १६३ ॥
एवं संपूज्य संस्कृत्य चतुर्णां मध्यतो न्यसेत्। पद्मासनगतां लक्ष्मीं [1]निधिभिः परिवारिताम्॥

---

१. ग-घ—जलधिं परिवारितम्, इत्यपि पाठान्तरं दृश्यते

चतुर्णामथ चान्येषां रत्नराट् कौस्तुभाभिधः। समन्त्रेण स्वनाम्ना च निधिनाथैस्समन्विताम् ॥
भगवान् सर्वशतयात्मा एकस्मिन् परिचिन्तयेत्। षडक्षरेण मन्त्रेण निष्कलं शब्दविग्रहम् ॥
ब्राह्मं चतुष्पदं क्षेत्रं नयेदष्टच्छदात्मना। न्यस्य सार्वेश्वरं कुम्भं मध्यतः कर्णिकोदरे॥ १६७ ॥
रत्नकुम्भचतुष्कं तु दिक्चक्रेष्वष्टदिक्षु च। प्रादक्षिण्येन प्राग्भागान् मन्त्रान् वा लौकिकान् द्विज॥
लक्ष्यं कुम्भचतुष्कं यदीशाद् वायुपदावधि। एवं न्यस्त्वा ततः कुर्यादर्चनं मध्यगस्य च॥१६९॥
चतुष्कं हृदयाद्यं वै रत्नकुम्भगतं यजेत्। चतुर्णां मन्त्रमेकं तु श्रीकुम्भानां तु पूजयेत् ॥१७०॥
पुरतो नेत्रमन्त्रैस्तु मध्यकुम्भे च तस्य च। कृत्वैवं निष्कलं न्यासं सर्वेषां सांप्रतं ततः ॥१७१॥
विधाननवकं दद्यात्ताम्रं वा शैलजं समम्। सुवृत्तं चतुरश्रं वा सुघनं द्वादशाङ्गुलम् ॥ १७२ ॥
चतुश्शक्तिनिरुद्धं च तत्र मध्यगते घटे। शक्तिर्वा या परा देवी विश्वसन्धारणक्षमा ॥ १७३ ॥
प्रभासार्वेश्वरी दिक्षु ज्ञानशक्त्यामृता च सा। विदिग्घटसमूहे तु संविदानन्दलक्षणा ॥ १७४ ॥
क्रियाख्या याच्युती शक्तिश्शुद्धा शक्तस्य जन्मदा। न्यस्त्वैवमर्चनं कुर्यात् श्रियादीनां स्वसंज्ञया॥
निधीनां निधिनाथानां मन्त्रं साङ्गं यजेत्ततः। मुद्रां प्रदर्शयेत् मान्त्रो सर्वसामर्थ्यलक्षणाम् ॥
द्वादशाक्षरमन्त्रेण जप्तव्यं च समाचरेत्। सन्निरोधं द्विषट्कार्णे . न सन्निधिम् ॥
यजुर्ज्ञं त्वथ सञ्चोद्य युञ्जतेति च यद्यजुः। ऋचं च पौरुषं सूक्तं सामज्ञो विष्णुसंहिताम् ॥
अथर्वायेति षट्पाद्य द्विजमेकायनं तत । आत्मव्यूहादिकं कुर्यात् संज्ञामन्त्रचतुष्टयम् ॥१७०॥
नमस्कारसमोपेतं ततस्साम रथन्तरम्। आहुत्वा (हा) हर्षपूर्वं वै ऋग्वेदः समुदीरयेत् ॥
प्रतिष्ठार्सीति वै साम सामज्ञोऽथ उदीरयेत्। अतोऽन्तरं तु कुम्भानां . . ॥
आपाद्यमथ सर्वेषां सुधालेपेन चैव हि। दिगष्टक मुद्रणीयं क्षेत्रं शक्त्यष्टकेन तु ॥ १८२ ॥
शिलान्तस्सन्निरोधेन शिलानामसमास्तु वा। कार्या ऊर्ध्वसमास्सर्वास्सर्वतोभद्रलक्षणाः॥ १८३॥
स्नानाद्यैस्संस्कृतं पूर्वं वासस्रग्वर्णभूषिता। रत्नाष्टकासनस्था च अष्टानां च सुविन्यसेत् ॥
मन्त्रमक्षरभेदेन [1]प्रणवाद्यन्तगं तु वै। प्रागादावीशदिङ्निष्ठमष्टकं व्यक्तिगं न्यसेत्॥ १८५ ॥
प्रणवेन स्वनाम्ना च नमोऽन्तेन महामते। बलवीर्यवती नित्या अनन्ताख्या स्थिरा ध्रुवा ॥
सन्ध्याख्या धृतिसंज्ञा च स्थितिर्नाम्ना द्विजाष्टमी। [2]वेदाद्यन्तं समुद्घोष्य यजुर्वेदव्रतैस्सह॥

---

१. ग-घ—प्रणवाद्यगतम् .. २. क—वेदाद्यम्...समुद्घोष्य ख—यो वेदान्त समु

हृये च विद्या ऋक्सूक्ता ब्रूयादेकायनं ततः। यदिवायो सवेत्यादि हुत्वैवं कमलोद्भव ॥
दत्त्वा पूर्णाहुतिं ब्रूयात् मन्त्रमाथाविकं हि यत। कर्ता च देशिकेन्द्रोऽथ संस्मरन् मन्त्रसंहिताम ॥
न्यस्तश्रियादिकैर्नाममन्त्रैस्सर्वैस्समन्वितम्। एषां वुद्धिस्सप्तवेति मन्त्रमेकायनं पठन् ॥ १९० ॥
दद्यादाहुतिकं सर्वं कर्मणां पूरणाय च। एतावदुक्तमब्जाक्ष मुख्यकल्पं मया च ते॥ १९१ ॥
अनुकल्पमतो वक्ष्ये सर्वेषां च हितावहम्। एतस्मिन् कलशे सर्वमन्यक्षेत्रगणार्चितम् ॥ १९२ ॥
मन्त्रव्यूहं यथोक्तं च स्थलगोपलगं न्यसेत्। सर्वशक्तिमयीमेकां शक्तिं वै पारमेश्वरीम् ॥ १९३ ॥
निवेश्य मध्यतस्तस्मिन् दद्यात् कोशं सुधादिकम्। वर्णकै कुङ्कुमाद्यैस्तु तत्रोर्ध्वेऽब्जं लिखेतत ॥
भूभागं खातशेषं यत् समन्तात् समतां नयेत। प्राग्वदाकोट्टनाद्येन सर्वाङ्गैरिपुभिस्तत ॥१९५॥
पञ्चरङ्गेण सूत्रेण शङ्कुभिर्याज्ञिकैर्दृढैः। अस्त्रमन्त्रेण मन्त्रज्ञो जीमूतमथ संपठन ॥ १९६ ॥
चतुस्स्रक्चन्दनोपेतां बलिं वै सात्त्व कामिकीम। दद्यात् पूर्वादिनां दिक्षु समाचम्य प्रणम्य च ॥
द्वादशाक्षरमन्त्रेण त्रिस्थानस्थं च मन्त्रराट्। क्षान्त्वा तदोपसंहृत्य प्राग्वदर्चनपूर्वकम् ॥१९८॥
सांभारीनां वहिर्यावदाचरेत् स्थपतिं पुन। विश्वकर्मा पुरस्कृत्य अन्येषां पिशिताशिनाम् ॥१९९॥
दद्याद् द्विजेन्द्रपूर्वाणामशनं दक्षिणादिकम्। अन्येषामर्थिनामन्नं धनदानं स्वशक्तित ॥२००॥
नानादेशवशाच्चैव कुर्यादेवं गृहासनम्। विभागेन समायुक्तमालयं विविधं तथा ॥ २०१ ॥
ध्वजासनावसानं च विभज्य स्वधिया तत ॥

इति श्रीपाञ्चरात्रे महोपनिषदि पौष्करसंहितायां प्रासादस्य पादप्रतिष्ठा नाम

द्विचत्वारिंशोऽध्याय ॥

(समुदितश्लोकसंख्या २०१॥)

# अथ त्रिचत्वारिंशोऽध्यायः

**श्रीभगवानुवाच—**

प्रासादावासतः कोणे समारभ्य यथारुचि। [1]प्राङ्कणं सर्वदिक्कृत्वा प्राकारं परिकल्पयेत् ॥ १ ॥
ग्रहिकासप्रतोलीकं केवलं वामरान्वितम्। प्रासादे तु चतुर्द्वारे चतुर्मूर्तिरलंकृते ॥ २ ॥
द्विद्विकं तु प्रतोलीनां दिक्षु प्राकारगं हितम्। चतुष्कं ' प्राष्टकं कुर्यात् प्रासादानां महामते ॥
एकरूपं हि वा नाना लक्षणं भगवद्वशात्। यथाभिमतमानं च प्रासादाभासमात्रकम् ॥ ४ ॥
पक्वेष्टकाश्मदारूत्थं तत्र कोणचतुष्टये। चतुष्कं विहितं विप्र अष्टकं कल्पयेद्यदि ॥ ५ ॥
परस्परमुखं कुर्याद् द्वारोद्देशद्वये ततः। सान्तरं दिक्त्रये कुर्यात् प्रासादानां द्विकं द्विकम् ॥६॥
सपीठाद्देवमानाच्च द्वारोच्छ्रायमुदाहृतम्। प्रमाणेनोन्नतानां च देवानां च महामते ॥ ७ ॥
नानाह्रस्वप्रमाणानां पीठेनोन्नतिमानयेत्। वैतत्येनोन्नतत्वेन लक्षणानियमोज्झितम् ॥ ८ ॥
द्वारं सुखप्रवेशं च संकटानां गुणावहम्। कृतायां शुद्धविहितं ऋक्षेणानुगतं तु वै ॥ ९ ॥
विस्तारायामयोश्चैव आदायाङ्गुलसन्ततिम्। शुभाय ऋक्षलाभार्थं गुणयेच्च परस्परम् ॥ १० ॥
शोधयेद्वाथ लाभार्थं मुष्टिभिश्चाङ्गुलिस्थितिः। एकत्रिपञ्च वै सप्त शेषास्सर्वे शुभास्स्मृताः ॥११॥
ध्वजशार्दूलवृषभगजेन्द्राः क्रमशो हिते। एवं नक्षत्रलाभार्थं शोधयेत्तां स्थितिं पुन ॥ १२ ॥
आदेकात् सप्तविंशान्तं शेषान्तं ह्यष्टमाचरेत्। वर्धयेदङ्गुलं चैकं पादयोर्वा प्रयत्नतः ॥ १३ ॥
न्यूनमङ्गुलराशेर्वै शुभऋक्षाय सिद्धये। विचार्यैवं पुरा सम्यक् कुर्याद् भूमिसुरालयम् ॥१४॥
शयनासन आसीनस्सुपर्णस्थस्य वा विभोः। दिक्त्रयेऽभिमते चैव एकं वा दिक्त्रये त्रयः ॥
उपविष्टं तु याम्यायां पश्चिमे या दिगुत्थितम्। उदग्दिग्दक्षिणद्वारे प्रासादे गरुडासनम् ॥ १६ ॥
चतुष्टयं चतुर्णां तु कोणानां यत् प्रकीर्तितम्। तत्रानले दिगलस्थमुदग्द्वारे तु प्राक्चरम् ॥
स्वबोध[2]परिमाणेन सत्त्वेनाभिमतेन च। कलासक्ता इयत्ताख्याः परिच्छेदवशात् स्मृतम् ॥
तमास्थापनसंज्ञं च विशेषं कमलोद्भव। संपन्ने ब्रह्मपाषाणसंस्कारे पैठिकेऽपि च ॥ १९ ॥

१. ग-घ—प्राङ्कणं सर्वतो दिक्षु ख—प्राङ्कणं सर्वदिक् त्वनत्रा २. परिणामेन. इति पाठान्तरम्

उद्वर्तनाभ्यञ्जनेन मृद्भूतिगोमयादिना। शिल्पिदोषोपशमनं स्नानमात्रे कृते सति॥ २० ॥
निष्पन्ने नेत्रदाने तु स्नाने संपादिते परे। उत्थाप्य मूर्तिपालैस्तु गुर्वादीन् बहुभिर्बलात्॥२१॥
निवेशनेन मन्त्रं यद्द्विविधं साम्प्रतं कृतम्। त्रितये चैकतां प्राप्ते वज्रलेपेन पौष्कर॥ २२॥
प्रोक्ते लग्नोदये मन्त्रन्यासमाचरणात्तु वै। यच्छक्तेरनुसन्धानात्तत्स्थितिस्थापने तथा॥ २३॥
प्रासादान्तरभित्तीनां लिखितं वाम्बरादिके। सिध्यर्थं साधकेन्द्रैस्तु सिद्धिकालावधि तु वै॥
चलबिम्बस्य यन्मन्त्रं न्यासं वै सासनस्य च। नित्यमाराधनार्थं तु कर्मार्चायामपि द्विज॥
तं विप्र चलनाख्यं तु स्थितिस्थापनमेव च। क्ष्माभङ्गैर्जलपूर्वैस्तु दोषैर्या चातिदूषिता॥ २६॥
उद्धृत्य योजनान्यत्र स्थाने तु शुभलक्षणे। सम्यक् स्संस्थापनाद् भूयस्संस्थापनमुदाहृतम्॥२७॥
विद्युत्प्रपातपूर्वैस्तु दोषैर्या चाभिदूषिता। तदुत्थानकृते शश्वन्निर्दोषे चासने स्थितिम्॥ २८॥
तत्समा लक्षणाढ्या च प्रतिमान्या महामने(हे)। अन्यस्मिन् वा नवे पीठे बिम्ब(वे)त्परियोजिता॥
बोद्धव्यं तद्विशेषं च स्थापनोत्थापनं तु वै। ज्ञानसङ्गोज्झितत्वाच्च एकदिक्समवीक्षणात्॥३०॥
प्राधान्येनाथ दिक्चक्रं स्वगात्रैरिह वासनात्। शयनासनसंस्थानचलाचलवशादपि॥ ३१॥
प्रतिष्ठाख्यविशेषाश्च बहवस्सर्वसिद्धिदाः। सामान्यसन्निवेशाच्च तद्विशेषगुणात्तु वै॥ ३२॥
स्थितं चाक्षरया शुद्धा सामान्यार्चा फलार्थिनाम्। फलसाम्यं परिज्ञेयं किं त्वन्यस्मिन् हि जन्मनि॥
चातुरात्म्यप्रतिष्ठा च ज्ञानं यच्छति शाश्वतम्। यत्प्राप्य न पुनर्जन्म पुनरवाप्नुयान्नरः॥३४॥
फलकामस्तु यः कुर्याच्चतुर्मूर्तिनिवेशनम्। श्रद्धया परया भक्त्या संकल्पादेव पद्मज॥ ३५॥
पैतृकं मातृकं चैव [1]जायाख्यं सप्तसंख्यकम्। कुलमुद्धरते तस्मिन् जन्मप्राप्तौ क्षितौ पुनः॥
धर्मपिता हरेर्भक्तिमाश्रय(त्य)न्त्यब्जसम्भव। जातजन्मा तृतीया तु प्राप्नुयात् सद्विवेकवत्॥
समुत्तरति वै येन घोरात् संसारसंकटात्। रूपमाद्यप्रतिष्ठाया इत्युक्तं द्विजसत्तम॥ ३८॥
विशेषसन्निवेशेभ्यस्त्विदानीमवधारय। मनीषितं फलं भुक्त्वा दिव्येषु भुवनेषु च॥ ३९॥
जन्मासाद्य समुत्कृष्टमाचरेत् पुनरेव हि। दैवी ब्रह्मप्रतिष्ठाया या परस्मिन् हि जन्मनि॥ ४०॥
प्राग्वद्यच्छति विज्ञानं परमेशपदाप्तिगम्। एतावदुक्तं वैषम्यं सति साम्यं महामते॥ ४१॥
यज्ञोत्तमस्य दिव्यस्य सफलस्याब्जसंभव। अच्युतस्याविनाशस्य भवक्षयकरस्य च॥ ४२॥
भेदं यद्वस्तुमात्रेण स्थितं तदवधारय। वर्णा(दी)नां ब्राह्मणादीनां गृहाश्रमरतात्मनाम्॥ ४३॥
आदीक्षितानां प्राग्विप्र भीतानां मरणादिके। व्यवहारस्थितानां च प्रतिष्ठाद्या महामते॥ ४४॥
निर्वर्जिताः प्रयच्छन्ति फलमुक्तं हि यन्मया। निर्वाणदीक्षितानां च गुरुणाच्युतवेदिनाम्॥

१. क-ख—ज्ञानाख्यम्

भक्त्या प्रासाधिकाराणां नित्यमाराधनं प्रति। सम्यक्समाधिनिष्ठानामिह जन्मैकशेषिणाम् ॥४६॥
विकल्पक्षीणचित्तानां प्रतिष्ठा विहिताब्जज। त्राणार्थं स्वकुलादीनामनन्तानां च संभवात् ॥४७॥
यावज्जीवावधि कालं तेषामास्थापनं तु वै। विहितं परितोषार्थं बुद्धेर्बुद्धिमतां वर ॥ ४८ ॥
ज्ञात्वैवं धर्मलब्धेन धनेन च बलेन च। आक्षिपन् ग्रहणात् सर्वं ध्वजान्तं वै समाप्य च ॥
विश्वावासपदावासं दक्षिणाननमासितम्। पीठस्थमुपविष्टं च प्राग्द्वारे निऋते गृहे ॥ ५० ॥
एवं खगेशपृष्ठस्थं वायुदिङ्मन्दिरे हितम्। [१]दिव्यभोगफलावाप्ति सह दिक्तल्पगात्तु वै ॥ ५१ ॥
प्रजा[२]पतित्वमापन्ना उक्तदिग्विनिवेशनात्। स्थितिं त्रिविष्टपादीनामुपरिष्टात्तु शाश्वतीम् ॥ ५२ ॥
विहायसगतिं दिव्यां यानगात् प्राप्यते पुमान्। भक्तानां फललिप्सूनां स्थानस्थलफलादिकम् ॥
फलदिक्संस्थितास्सर्वे नगराणां फलार्थिनाम्। उत्कृष्टजन्मपूर्वं तु जन्म चात्मप्रकाशकम् ॥५४॥
तद्विद्धि भवशान्त्यर्थमचिरादेव पद्मज। यथोद्दिष्टक्रमेणैव दिक्त्रये विनिवेश्य च ॥ ५५ ॥
नृसिंहकपिलक्रोडमूर्तयो वा महामते। प्राग्वाद्विदिक्चतुष्केषु चतुर्णां विहितं क्रमात् ॥ ५६ ॥
वाजिवक्त्रं तु मुक्तानां सिंहादीनां निवेशनम्। दिक्त्रये कच्छपादीनां कुर्यात् संस्थापनं तु वा ॥
मीनवामननाथानां देवानां प्राक्फलाप्तये। विदिक्षु विनियोक्तव्यं यथोद्दिष्टक्रमेण तु ॥ ५८ ॥
त्रिविक्रमकुठारास्त्रकरं कान्तावपुर्धरम्। सर्वदेवमयं विश्वरूपं तु परमेश्वरम् ॥ ५९ ॥
एतावदुक्तनियममतोऽन्ये येऽखिलास्तु वै। प्रादुर्भावान्तराश्चैव प्रादुर्भावाब्जसम्भव ॥ ६० ॥
गुरूणां संमतेनैव योक्तव्यं नान्ययाजकैः। सदेवां हि कुटीं रम्यामापाद्याभिमतां ततः ॥ ६१ ॥
द्वाराग्रे मण्डपाभासं सोपानपदवीयुतम्। वेदीविभूषितं कुर्यात् स्थितमाराधनाश्रयम् ॥ ६२ ॥
भोगानां स्थितयेऽन्येषां वातवृष्टिक्षमं शुभम्। प्रासादाङ्घ्रिप्रतिष्ठार्थमापाद्याब्जज वै ततः ॥
पञ्चानां वा नवानां च एकस्मिन् वा घटोदके। सर्वरत्नमयोपेते न्यस्तं यत्परमेश्वरम् ॥ ६४ ॥
आङ्गं सलाञ्छनं मान्त्रं परिवारसमन्वितम्। स्वशक्तिखचितं चैव प्रत्यहं पूजयेच्च तम् ॥६५॥
मन्त्रबिम्बप्रतिष्ठार्थं कालविघ्नप्रशान्तये। अन्यथा जायते विघ्नमनिवार्यं महामते ॥ ६६ ॥
गच्छन्ति सन्निधिं मन्त्रा नित्यं त्रैकाल्यमर्चनात्। यच्छन्त्यनर्चनाल्लोकं रोधितं यत्र यत्र च ॥
पदानि प्राङ्कणे चैव देवानां विनिवेशने। उक्तानि पद्मसंभूत इदानीमवधारय ॥ ६८ ॥
मध्यदेशे तु तद्भूमेः प्रासादेऽभिमते तते। सन्निवेशवशेनैव नानासंज्ञावसंस्थितः ॥ ६९ ॥
पीठब्रह्मवशास्थानस्त(म्भ)म्ब'स्य' चतुरात्मनः। चतुर्दिग्वीक्षमाणस्य यानुसन्धानलक्षणा ॥ ७० ॥
बोद्धव्यं सा प्रतिष्ठा च दिग्व्यूहपरिपूरकी। धृतिशक्तिस्वरूपेण अमूर्तेनात्ययात्मना ॥ ७१ ॥

१. क-ख—दिव्या भोगफलावाप्तिमहिदिक्तल्प २. ख—पतित्वमासीना

स्थितये प्रक्रियार्थं च ब्रह्मपाषाणताम्रता। सर्वं ब्रह्मशिलानिष्ठमाक्षिनैः कमलोद्भव ॥ ७२ ॥
व्याप्तमामूलतश्चैव तेनामूर्तेन वै पुनः। द्रव्यमूर्तिममूर्ता च गृहीतस्तत्त्व'लक्षणाम् ॥ ७३ ॥
एकस्याच्युतबीजस्य भिन्नेषु प्रतिवस्तुषु। संस्थिता स्थितिरच्छिन्ना सा प्रतिष्ठित एव हि ॥७४॥
भिन्नानां व्यूहमूर्तीनां केवला(व)खिलस्य च। प्रादुर्भावसमूहस्य व्यादिकस्य तु यद्द्विज ॥ ७५ ॥
एकस्मिन् विश्वपीठे तु स्थितिरेकस्य चेच्छया। प्रतिष्ठाख्यं विशेषं तत् स्थापनं समुदाहृतम् ॥
चिच्छक्तिमनुविद्धं च अव्यक्तं तत्त्वसंग्रहम्। द्रव्यमूर्तौ चलाख्ये च नीतमेकात्मना धिया ॥
बिम्बसंस्कारकाले तु अधिवासाभिधे द्विज। अचलत्वेन सन्मन्त्रं चलभावनया पुनः ॥ ७८ ॥
साङ्गं सलाञ्छनं चैव कृत्वा अभितमतं तु वै। आराधनार्थं हृदयान्यस्तं तद्धृदये पुनः ॥ ७९ ॥
समाहरेत् कृतार्थत्वान्नित्यं कालान्तरेण वा। [1]सदाख्यमपरं तत्त्व ... .... .. ॥ ८० ॥
नानासंज्ञं तथानानाप्रमाणं तद्वदेव हि। रचनाभिस्तथा नानाविविधाभिस्तु रञ्जितम् ॥ ८१ ॥
वल्लीभिर्भूमिकाभिस्तु चित्रिताभिरलङ्कृतम्। आपादभूमेरण्डान्तमनुरूपं च यत्त्रयम् ॥ ८२ ॥
उत्तरोत्तरतः कुर्याद्भूर्भुवस्वादिकोत्थितैः। स्थावरैर्जङ्गमैस्सिद्धैर्विविधैर्मञ्जरीगणैः ॥ ८३ ॥
नगेन्द्रैर्नागराजैस्तु सुशुभैर्नलिनीवनैः। मुरजश्रृङ्खलावद्धैर्दिव्यैर्नानालतागृहैः ॥ ८४ ॥
पुरुजाद्यैर्जलोद्भूतैः प्राणिजालैस्तथैव हि। वनजैर्नगजैश्चान्यैर्मृगराड्गणपूर्वकैः ॥ ८५ ॥
वारणाश्ववराश्चैव हंसपद्मसमाश्रितैः। शङ्खस्वस्तिक[2]कह्लारपूर्वैरन्यैस्तु वारिजैः ॥ ८६ ॥
नन्दिकैः केसरै रम्यैश्शतपत्रवदुत्थितैः। सकिङ्किणीकैश्चमरैरातपत्रैर्ध्वजादिकैः ॥ ८७ ॥
भूमिगाम्भिगैस्सर्वैस्समुद्रैस्सरितान्वितैः। नवोपकरणैर्देवैश्चन्द्रार्कज्वलनादिकैः ॥ ८८ ॥
प्रादुर्भावान्तरैर्दिव्यैः प्रादुर्भावसमन्वितैः। द्वीपैर्द्वीपान्तरोपेतैः पातालैस्तज'नान्वितैः ॥ ८९ ॥
महर्जनस्तपस्सत्यलोकनाथैर्महाप्रभैः। ध्यानमौनपरैर्ब्रह्मन् वह्निदेवयुतैर्द्विजैः ॥ ९० ॥
इत्येवमादिकैश्चान्यैर्जङ्घान्तस्थवर्तीश्शुभाः। भूषयेत् कमलोद्भूत सर्वदिक्नासिकैस्सह ॥९१॥
गर्भगृहाम्बरमध्यात् कुर्याच्चक्राम्बुजाङ्कितम्। पितामहाद्यैर्विबुधैस्सिद्धविद्याधरैस्सह ॥ ९२ ॥
पुष्पमालाधरैः प्रह्वैश्चामरैर्व्यजनोद्धतैः। वनमालागदाशङ्खचक्रपद्मश्रियादिकैः ॥ ९३ ॥
खगेशवेदवेदाङ्गैरक्षसूत्रकराङ्कितैः। आवार्यावरकत्वेन चक्रपद्माद्बहिः स्थितैः ॥ ९४ ॥
अन्तर्भित्तिगणं सर्वदेवदैत्यादिकैर्गणैः। नृत्तगी(त)परैश्चान्यैर्नारदाद्यैर्विभूषयेत् ॥ ९५ ॥
प्रणवेन स्वनाम्ना च नतिनिष्ठेन तत्र वै। सन्निरोध्य च तन्मन्त्रं भूलोकं पादमाक्षिति ॥ ९६ ॥
एवं प्रासादपीठे तु भुवर्लोकं यथास्थितम्। जङ्घायां स्वर्गलोकं च महच्छिखरभूमिगम् ॥९७॥

१. सदाख्यानपर .. . २. क-ख—कह्लारपूर्वैरन्यैः.

स्तम्भं च तलपं चैव चरणं जङ्घमेव च। स्थानं स्थूणं च पादं च पर्यायवचनास्त्विमे ॥९८॥
जनर्लोकं च तद्ग्रेवांतस्तपस्संज्ञं च दण्डकम्। सत्यसंज्ञश्च तल्लोकं तच्छिखायां सुरालये ॥
भावयेच्च परां व्याप्तिमेवं वै साप्तलौकिकीम्। भुवनोर्ध्वमयीं विप्र प्रासादेऽभिमते तु वै ॥१००॥
अनुविद्धं पादपाद्यैरन्यैस्त्वत्तास्वरूपकैः। परस्परं हि सर्वत्र व्यापकैः परलक्षणैः ॥ १०१ ॥
भूर्लोकांशं विना ब्रह्मंस्तथान्यैरुज्झितं हि तत्। रजस्तमोमहत्वाच्च ईषत्सत्त्वगुणात्तु वै ॥ १०२ ॥
सत्त्वैकगुणरूपाणामन्येषामत एव हि। भूर्लोकं च पृथक्संस्थं पादाद्यध्वगणस्य च ॥ १०३ ॥
कूर्मब्रह्मात्मसंज्ञायां शिखायां च पदत्रयम्। न्यस्तव्यं जाग्रदाद्यं यद्रत्नन्यासे कृते सति ॥१०४॥
तुर्यब्रह्मपदोपेतं मन्त्राध्वप्रतिमासने। ताभ्यां तं पादतोऽन्यस्य तत्वेयं कमलोद्भव ॥ १०५ ॥
आनाभेर्मूर्धपर्यन्तं कलाध्वं भावयेत्ततः। तद्ब्रह्मरन्ध्रकमले मन्त्रब्रह्मतलक्षितौ ॥ १०६ ॥
कर्णिकायां परं ब्रह्म सामान्यं शाश्वतं विभुम्। दीक्षाकाले यथोद्दिष्टा मया तेऽध्वमयी स्थितिः॥
प्रासादानां तु सा सिद्धिश्शिखान्तानां महामते। प्रतिमानां सपीठानां साधिभूतादिलक्षणम् ॥
तत्राध्यात्मं हि भगवान् मूर्तं शान्तं ममाच्युतम्। स एव हि विराडात्मा ह्यधिदैवतमव्ययम् ॥
अधिभूतं द्विजाव्यक्तं सर्वतत्त्वमयं हि तत्। विद्याकलादिकैश्चान्यैः[1]परार्थैर(ण्वि)लैस्सह ॥११०॥
सबीजे विलये यद्वत्सुसूक्ष्माद्यैर्व्यवस्थित। तत्त्वाश्शब्दादयश्चैव बुद्धिनिष्ठा महामते ॥ १११ ॥
तद्वत्प्रासाददेहे तु ते देवाधिष्ठिते स्मृता। सर्वशक्तिमये विप्र शुद्धं सत्सत्त्वलक्षणे ॥ ११२ ॥
यथोपचारा विहितं मन्त्रं सर्वेश्वराद्विभोः। सर्वज्ञं सर्वगं चैव सर्वकर्तारमीश्वरम् ॥ ११३ ॥
मन्त्रमूर्तेस्तथा विद्धि उपचारात्तु तद्गृहम्। संस्कृतस्य त्वतो यत्नात् सपीठस्य यथाविधि ॥११४॥
देववत्स्थापनं तस्य विहितं सत्त्वजस्य च। सोपानपदवी युक्ता जगती या सुलक्षणा ॥ ११५ ॥
प्रासादस्य च पीठं तत् परिज्ञेयं यदात्मकम्। एकीभूतत्वमापन्नं सुधालेपैस्तु सायसै ॥ ११६ ॥
पक्केष्टकासमेतैश्च स्थिरमृच्चोपलैस्तथा। प्रमाणलक्षणोपेतं विश्वविद्रचनान्वितम् ॥ ११७ ॥
रञ्जितं रागजालेन फलं यच्छति शाश्वतम्। जीर्णत्वाच्च कृतं भूयस्स्वयंव्यक्तादिभिर्द्विज ॥११८॥
आकारेष्वाच्युर्तीयेषु विविधेष्वर्चितेषु च। फलं सहस्रगुणितं कर्ताप्नोति महामते ॥ ११९ ॥
तोयाशया[2]शया वृक्षा क्षेत्रं पुष्कर मादियत्। पौनःपुन्येन सद्भक्तैः कृतदुष्कृतशान्तये ॥ १२० ॥
अनाद्यज्ञानसंसर्गात् काल्हा[3]सवशादपि। नष्टं नरेन्द्रनाथा ये पालयन्त्यर्चनादिकैः ॥ १२१ ॥
देहान्ते यान्ति ते स्वर्गं राज्यदोषैरनावृताः। कालेनेत्य पुनस्स्वर्गात् ज्ञानमासाद्य निर्मलम् ॥
येन सांसारिकं दुःखं दुस्सहं नाशमेति च। फलमेतावदुक्तं हि देवालयसमापनात् ॥ १२३ ॥

१. ग-घ—परार्थैरत्तिलैस्सह २. ग-घ—शयावृक्षाक्षत्र पुष्कर ३. क-ख—काल्न्यास॰

सवितानां च भक्तानां नृपाणामपि पद्मज। सर्वाध्वभावनोपेतमास्तां तावत् सुरालयम् ॥१२४॥
भुवनाध्वमयीं व्याप्तिमापादयति केवलात्। अनुग्रहेच्छयाचार्यो भक्तानां संप्रदर्शयेत् ॥ १२५ ॥
लक्ष्म्या लक्षणयुक्तस्य स्थपतेरशठस्य च। प्रागुक्तं लभते कर्ता सुसंपूर्णफलं द्विज ॥ १२६ ॥
प्रासादानाममन्त्रं तु स्वयं शिल्पिकरात्तु वै। यत्फलं लभते कर्ता हेमक्ष्मान्नादिकं हि तत् ॥
फलं सर्वस्वदानाद्वा लभते विधिपूर्वकात्। मृदा दार्विष्टकाद्यैस्तु स्वल्पं वा मध्यमं महत् ॥
प्रमाणलक्षणोपेतं सुराकीर्णं सुरालयम्। यथोदितैर्गुणैर्युक्तं ग्राम्यं वा कुटिसंज्ञितम् ॥ १२९ ॥
दिग्विदिक्सान्तराद्याद्युक्तं प्रस्थापितैः परैः। विभव व्यूहसंज्ञैस्तु प्रादुर्भावान्तरास्तु वा ॥१३०॥
अवनीचलनाद्यैस्तु दोषैस्संचालितं यदि। दीर्घकालवशेनापि स्नातानां धनकर्मणाम् ॥ १३१ ॥
कुर्याद्यथावदुद्धारं गुरूणां संमतेन तु। राजा वा तदमात्योऽन्यस्सद्भक्तश्च नृपाज्ञया ॥ १३२ ॥
व्रतार्चनादिकार्याणां लब्ध्वानुज्ञां परां विभो। अनन्तशयने दार्भे उत्तानस्थं स्रगद्विभुम् ॥
द्वादशाक्षरमन्त्रेण स्वर्गेशं भगवान् हरिः। अयुतं त्वयुतार्धं च शतमर्धाधिकं तु वा ॥ १३४ ॥
अथानुकूले नक्षत्रे नृपस्य नगरस्य च। शान्त्यर्थं जीवभूतं यन्मन्त्रेशगुणमूर्तिभृत् ॥ १३५ ॥
त्रैगुण्यं यच्छते हस्तमर्चयित्वा यथाविधि। तर्पयित्वा च देहान्ते समिद्भिर्बहुभिः क्रमात् ॥
भुवनाध्वमयं शक्तिर्व्यक्तिसङ्घं यथोदितम्। तथा वर्णा[1]ध्वपदसङ्घं सत्ताभूतं हि पञ्चकम् ॥
तर्पयित्वार्चयित्वा च साधिभूताधिकं तु वै। भूतशक्तिगणं तद्वत् सुसूक्ष्ममपरं हि यत् ॥
देवपीठालयं विप्र रुद्धं कुर्याद्यथाक्रमम्। उदयार्कसमं ज्ञात्वा सज्ञामन्त्रपदैस्स्वकैः ॥ १३९ ॥
प्रणवाद्यैर्नमोऽन्तैश्च व्यक्तिस्थं पुनरेव हि। प्रातिमं रक्ष भगवन् मन्त्रवृन्दं हि चाध्वजम् ॥
उदुम्बरार्धमानस्थं दिग्विदिग्भूमिकं हि यत्। बुद्धिधर्मस्थितैर्दर्भैर्व्याप्तामां वैम्बलक्षणैः ॥१४१॥
सम्यक् तदपरिज्ञानादनुसन्धानमाचरेत्। तदुत्थापनकाले तु कृतन्यासस्तु साम्प्रतम् ॥ १४२ ॥
उपोद्धरणलिङ्गैश्च साष्टाङ्गैर्वैदिकैस्तथा। एकैकमात्मसात्कृत्वा पूरकेणात् कबिम्बवत् ॥ १४३ ॥
सुसंमतेऽर्चिते कुम्भे हेमाद्यैर्मृर्तिके तु वा। निरोध्योदकसंपूर्णे पूजयेत् प्रत्यहं ततः ॥ १४४ ॥
संपन्नोत्पत्तये सम्यगवतार्य यथोद्धृतात्। संस्कृतस्य प्रतिष्ठानमाचर्तव्यं हि वै पुनः ॥ १४५ ॥
नृपेन्द्रराष्ट्रस्थानानां गोद्विजानां च वृद्धये। यत्पदप्राप्तये शश्वत् सखिलस्याखिलस्य च ॥१४६॥
प्रासादप्रतिमानां च एवमुत्थापनं द्विज। गोभूहेमादिकानां च राष्ट्रस्य सनृपस्य च ॥ १४७ ॥
जायते शुभशान्त्यर्थमिहलोके परत्र च। अतोऽन्यथा माहान् दोषो भवेद्वै पद्मसंभव ॥ १४८ ॥
प्रासादग्राहिकानां च बहिश्चाभ्यन्तरे तु वा। बिम्बानां चाल्यमानानां मन्त्रैरष्टाक्षरादिकैः ॥

१ क-ख—ध्वपद ..सत्ता

प्राग्वन्न्यस्तस्वमन्त्राणां समाहरणमाचरेत्। मणिना सूर्यकान्तेन आदित्यादनलं यथा॥ १५० ॥
समाहृतेषु मन्त्रेषु चाल्यमानेषु पौष्कर। भङ्गे कर्मवशाज्जाते प्रतिमासु प्रमादतः॥ १५१ ॥
प्राक्तनेनैव पापेन प्रायश्चित्तं चरेत्तदा। चित्तप्रसादजनकं कीर्तिशर्मकरं तु वै॥ १५२ ॥
तत्रैकरात्रपूर्वं तु त्रिरात्रं षडहन्तु वै। व्रतं द्वादशरात्रं च स्वशक्तया तु समाचरेत्॥ १५३ ॥
स्नानादिहवनान्तेन कर्मणाविहितेन (तु) च। तिलानि सहिरण्यानि दानं सरजतानि च॥१५४॥
शान्तिपूर्वं द्विजेन्द्राणां साज्यक्षीरोदनादिकम्। भोजनं तु यथाशक्ति बहूनां वै महामते॥
सदानमेवं निर्वर्त्य व्रतं वै देशिकादिजम्। वसेदाश्रित्य वै क्षेत्रं प्रसिद्धं सिद्धसेवितम्॥१५६॥
सुप्रसिद्धं तु वा तीर्थमेकाहं वा दिनत्रयम्। आवर्तयन् महामन्त्रमसकृद्द्वादशाक्षरम्॥ १५७ ॥
कालं मुहूर्तसंज्ञं यत् प्रतिसन्ध्यात्रयं तु वै। पूर्णमायतने कुर्याद्दिव्ये वा सिद्धसंज्ञके॥१५८॥
सति वै भक्तिसाम्ये तु प्रायश्चित्तमिदं स्मृतम्। सामान्यं सर्ववर्णानां मनच्छ. प्रकटे तु वै॥
उत्तरोत्तरमाधिक्यं जपकर्मणि वै स्मृतम्। शूद्रविट्क्षत्रविप्राणा भक्तानां नान्ययाजिनाम॥
उक्तं ह्येतत् प्रकाशे तु अथ यावत्प्रसन्नताम्। तावत्कालं जपेन्मन्त्रं भक्षयेत् पावनं मतम॥
यावत्प्रसादमायाति स्वबुद्धिर्मनसा सह। अप्रकाशे द्विषट्कार्णं मन्त्रमष्टाक्षरं हि यत्॥१६२॥
षडक्षरं द्विजश्रेष्ठ क्रमात् सन्ध्यात्रयं तु वै। स्नानं यथोदितं कुर्याज्जपेदन्तर्जले स्थितः॥१६३॥
त्रिमन्त्रसहितां शक्त्या स्नानकाले त्वनन्यधीः। अष्टार्णमुक्तसंख्यं तु प्रातर्मध्ये दिनक्षये॥१६४॥
देशकालं तु वै कुर्यात प्रतिस्नानं तु वै सकृत। पञ्चाङ्गमभिषेकं च शेषं सन्ध्याद्वये हितम॥
जघनान्तमधःकायं संप्रक्षाल्यामृताम्भसा। अधोवास परित्यज्य शुभमादाय चाम्बरम्॥ १६६॥
दिनत्रयं च षडहमष्टाहो द्वादशाह्निकम्। शूद्रादीनां द्विजान्तानां हितं चोत्तरोत्तरम्॥१६७॥
क्रममेतन्महाबुद्धे मनसश्शुद्धिकारणम्। फलेनानुगतं भूयो विध्यन्तरमथोच्यते॥ १६८ ॥
संक्षिप्तं सर्वसामान्यं यथाभिमतभूमिकम्। चतुर्हस्तद्विषट्कान्तं क्षेत्रं क्षेत्र कम॥ १६९॥
उत्तरोत्तरपूर्वाभ्यां न्यूनं न्यूनतरावधि। सोपैस्त्रिदशपर्यन्तैर्भक्तैः पञ्चशतादिकैः॥ १७० ॥
भित्तयोऽशद्वयेनैव पञ्चाङ्गादन्तरं तु हि। गर्भं सार्धत्रयेनातो भित्तयोऽर्धद्वयेन च॥ १७१ ॥
विद्धि षट्करमानस्य भूभागस्य च कल्पना। अष्टमांशोज्झितैर्भागैर्गर्भं सप्तपदं तु वै॥ १७२॥
परिज्ञेयं चतुर्भिर्वै तच्छिष्टैर्भित्तयोऽशकैः। चतुर्भिरष्टभागैस्तु सार्धैरष्टकराग्रहम्॥ १७३ ॥
भागत्रयेन सार्धेन भित्तिव्यूहं समापयेत्। साङ्गं पञ्चकरं गर्भक्षेत्रं नवपदात्तु वै॥ १७४ ॥
शेषेण करसङ्ख्येन भित्तयः परिकीर्तिताः। षट्करं दशहस्तस्य गर्भक्षेत्रस्य विस्तृतम॥ १७५॥
करद्वित्रितयेनैव भित्तिसङ्घं विधीयते। एकादशकरक्षेत्रात् गर्भं सार्धं च षट्करम्॥ १७६॥

सार्धं चतुःकरं चैव भित्तिमानमुदाहृतम्। क्षेत्रद्वादशभागात्तु पादोनं सममस्तकम्॥ १७७॥
देवालयं परिज्ञेयं पादोनैकं चतुष्करैः। विधेया भित्तयश्चैव विभज्यैवं तमेव हि॥ १७८॥
कृत्वा त्रयोदशांशैस्तु फलकीभित्तयोंऽशकैः। नवांशे नवभिः पूर्णे विधेयं भगवद्गृहम्॥ १७९॥
शुभाय सिद्धिसाध्याय ह्यङ्गुलेनाङ्गुलेन वा। एवं प्रसादगर्भांशैर्भित्तिभ्यां पातयेन्मनः॥ १८०॥
मानाधिकं विनिक्षिप्य क्षेत्राणां च निपातयेत्। परमाणुसमं मानं किं पुनश्चाङ्गुलादिकम्॥
यतो वृद्धिकरी नृणां वृद्धिप्रासमशोभनम्। समर्नायं हि यत्नेन महता तच्च पौष्कर॥ १८२॥
रचनाभिरुपेतं च विहितं च चतुर्मुखम्। चातुरात्म्यव्यपेक्षायामेकद्वार था॥ १८३॥
यथाभिमतदिग्वक्त्रं नानासिद्धिफलाप्तये। चिरायुरर्थी प्राग्वक्त्रं यशोऽर्थी दक्षिणामुखम्॥१८४॥
कुर्यात प्रत्यङ्मुखं चैव वृत्त्यर्थं च स्वतन्त्रके। उदङ्मुखं च प्रासाद धनधान्यं प्रयच्छति॥
एतावदुक्तं हि फलमैहलौकिकमुत्तमम्। नानाभोगसमोपेत सर्वाप्ता विद्धि पौष्कर॥ १८६॥
स्वक्षेत्रे विततं रम्ये स्वतन्त्रं स्याद्गुनक्षितौ। सह पूर्वप्रतिष्ठायामथवायतनं हरे॥ १८७॥
स्वायम्भुवे वा सिद्धाख्ये मुख्यकल्पमिदं स्मृतम्। अनुकल्पमतोऽन्यत्र बोद्धव्यं विबुधाङ्कणे॥
प्राक्प्रासादध्वजच्छायाविनिर्मुक्ते नो पदे। इष्टका च सुधाचूर्णं दोषैश्च परिशोधिते॥ १८९॥
तदन्तरं प्रतिष्ठाप्य होमाद्युक्तं हि सोऽन्तनम्। प्रासादद्वारमानैस्तु सपीठं विश्वमाच्युतम्॥१९०॥
संपूर्णं लक्षणैस्सर्वैर्गणैवान्तरर्कार्तये। एष्यातीतस्य वंशस्य स्वकस्योद्धरणाय च॥ १९१॥
यदैवैतत्कृता वृद्धिः प्रतिष्ठा पादयास्यहम्। तत्क्षणादेव तत्कीर्तिः प्रतिष्ठा लभतेऽच्युताम्॥
भूलोकाद्यखिलाना च स्थानानामपि किं पुनः। विभवेन जगन्नेतुः प्रतिष्ठां यस्समाचरेत्॥
पिवागृ(दी')ना गतासूनामन्येषा वा करोति यः। वैष्णवं च प्रतिष्ठानं स्वशक्त्या विभवेन वा॥
अचिरादेव ते यान्ति शश्वदेवान्तकास्पदम्। वैष्णवं च परं स्थान तत कालान्तरेण तु॥
क्षित्यंशं शुभमासाद्य कुलशीलादिकैस्सह। आचरन्ति शुभं येन प्राप्नुवन्ति पुनर्भवम्॥१९६॥
कृपया . नन्तु प्रतिष्ठां यस्समाचरेत। ज्ञातीनामथवान्येषां [1]तदुत्थं च फलं ॥ १९७॥
प्रविशन्ति च मन्त्रेशाः प्रणवध्वनिसाधिताः। कथयन्ति विभूतिं स्वां किञ्चित्कालान्तरेण तु॥
कृता वै ध्वस्तदोषाश्च निर्विघ्नममलां पुनः। निवेशितास्सुसिद्धा यैस्सार्थैः क्षेत्रावनेषु च॥१९९॥
निवारयन्ति ये मोहाद्विभवव्यूहमूर्तिषु। संस्थानमानमाकारं दोषं कालान्तरोत्थितम्॥ २००॥
स्मर्तव्या वासुदेवाद्या द्विभेदाः पारमेश्वराः। चत्वारश्चानिरुद्धान्ताश्चतुर्व्यूहव्यवस्थया॥ २०१॥
एवमन्ये प(व)राहाद्याश्चतुर्व्यूहेन वै सह। तथैव केशवाद्या ये अन्येनान्यतरेण वा॥ २०२॥

१. क-ख—तदु....फलम्...

मंदमन्दतराद्भावबशादमरपूजित। एवं यदधिकारेण कुर्यादाराधनं हि यः॥ २०३ ॥

भोगैर्यथोदितैश्शुद्धैः क्रियाभिर्विविधैस्ततः। निष्पत्तौ तु क्रियाङ्गानां हृदास्त्राघ्र्यं समन्त्रराट्॥

नानर्चितं विभोर्भोगं कल्पितं विनिवेद्य च। प्रणवाद्यन्तगेनैव[1] ... .... .... ॥ २०५ ॥



१. एतावदवधिरेव ग्रन्थो लब्धः

## श्रीयतिराज संपत्कुमार रामानुज मुनिभिः प्रत्यवेक्षिता
## विक्रयाय सिद्धाः ग्रन्थाः
### (नागरलिपिः)

| | | | | | |
|---|---|---|---|---|---|
| १. | शृङ्गारप्रकाशः ३६ प्रकाशात्मकः—श्रीभोजदेवकृतः तत्र (२२-२३-२४.) प्रकाशाः (१९२५) | ... | ३ | ० | ० |
| २. | तापसवत्सराजनाटकम्, अनङ्ग हर्षमातृराजकृतम् (१९२७) | .. | २ | ० | ० |
| ३. | काश्यपसंहिता सर्पविषचिकित्साप्रतिपादिका (१९३३) | .... | ३ | ० | ० |
| ४. | श्रीपौष्करसंहिता श्रीपाञ्चरात्रागम ग्रन्थः (१९३४) | | ५ | ० | ० |

### (आन्ध्र लिपिः)

---

श्रीपाञ्चरात्रागमे—पाद्मसंहितायां

| | | | | |
|---|---|---|---|---|
| १. | ,, पूर्वभागः | ४ | ० | ० |
| २. | ,, उत्तर भागः | ५ | ० | ० |
| ३. | अष्ट श्लोकी—श्रीपराशरभट्टारककृता सव्याख्या | ० | ४ | ० |

(सर्वत्र प्रापणभृतिः पृथक्)

*Copies can be had from —*

M. C. THIRUMALACHAR,
9th, Main Road, Malleswaram,
BANGALORE

or

A. SRINIVASA IYENGAR,
Sri Yathiraja Mutt,
MELKOTE, MYSORE.